पुंसोऽप्येवं विधिः लिङ्गस्याविवक्षितत्वात् । तेन यस्मिन् व्रते यत्पूजाद्युक्तं तदन्येन कारयेत् । शारीरनियमान् स्वयं कुर्यादिति हेमाद्रिर्व्याचख्यौ ।। आरम्भस्तु न भवत्येव । विष्णुः -

**बहुकालिकसंकल्पो गृहीतश्च पुरा यदि ।**
**सूतके मृतके चैव व्रतं तन्नैव दुष्यति ।।**

एवं रजस्वला अपि । निर्णयामृते -

**भार्या पत्युः व्रतं कुर्यात् भार्यायाश्च पतिर्व्रतम् ।**
**असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ।।**

**स्कान्दे -**

**पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।**
**एषामभावे एवान्यं ब्राह्मणं वा नियोजयेत् ।।** इति

**।। इति परिभाषा ।।**

## अथ प्रतिपदादितिथिनिर्णयः

शुक्लप्रतिपत् अपराह्णव्यापित्वे पूर्वा ग्राह्या । युग्मवाक्यात् । 'प्रतिपत्सम्मुखी कार्या या सा चेदापराह्णिकी' इति स्कान्दोक्तेः । अत्रापराह्णः पञ्चधा विभक्तदिने चतुर्थो भागः । प्रतिपत्कृष्णा तु परा । द्वितीया तु सर्वा परा एव ।

## अथ दशम्यादितिथित्रयनिर्णयः

तत्र दशम्यां दिनत्रयात्मकव्रतसङ्कल्पः कार्य इत्युक्तं वाराहे-

**दशमीदिने तु सम्प्राप्ते व्रतस्थोऽहं जनार्दन ।**
**त्रिदिनं देवदेवेश निर्विघ्नं कुरु केशव ।।** इति

**दशम्यादिदिनत्रयनियमाः नारदीये –**

**अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ।**
**अवनीतल्पशयनाः प्रियासङ्गमवर्जिताः ।।**

क्षारद्रव्याणि च स्कान्दे –

कूष्माण्डं चणका राजमाषाश्च मसुराढकाः ।
ऐक्षवं चैव कुल्माषा माषाश्चैव कपित्थकम् ॥

मूलकं मधु माधूकं तिन्त्रिणी राजकानि च ।
द्रव्याणि दश चत्वारि क्षाराण्येतानि वर्जयेत् ॥

व्रतोपवासदिवसे तथा वै पारणासु च ।
सर्वदा पुण्यमासेषु तथाऽशौचदिनेष्वपि ॥

हविष्याणि तु पृथ्वीचन्द्रोदये –

व्रीहिषष्टिकमुद्गाश्च कलायः सतिलं पयः ।
शामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ॥

मिताक्षरायामपि–

चरुभक्षे सक्तुकणयावकशाकपयोदधिघृतमूलफलोदकानि हवींषि उत्तरोत्तर-प्रशस्तानि, पयो दधि घृतं च गव्यमिति । स्कान्दे च–

कांस्यं माषं तैलपक्वं मसुराश्चणकाढकाः ।
शाकं मधु परान्नं च दिवास्वापं च मैथुनम् ॥

उष्णोदस्नानमभ्यङ्गं ताम्बूलं वपनं तथा ।
द्वादश्यां च दशम्यां च सर्वथा वर्जयेत्सुधीः ।
अन्नं पानं निशानिद्रामेकादश्यां तु वर्जयेत् ॥ इति

वाराहे च–

उष्णोदकं च ताम्बूलं तैलं मैथुनमेव च ।
दिवास्वापं कांस्यभोज्यं द्यूतं व्यायाममेव च ॥

क्रीडां शरीरसंस्कारं श्मश्रुकर्म च मर्दनम् ।
पाषण्डालापवारस्त्रीनटनाट्यावलोकनम् ॥

मांसं परान्नं माषान्नं हिंसा द्विर्भोजनं तथा ।
वर्जनीयानि सर्वेषां दशम्यादिदिनत्रये ॥

तथा–

लवणस्य परित्यागात् दशम्यां द्वादशीदिने ।
यदि कुर्वीत चैकान्नं व्रतस्य द्विगुणं फलम् ।।

परान्नं नैव भुञ्जीत दशम्यां द्वादशीदिने ।
एकादशीव्रतस्यास्य दशम्यां तुर्यभागतः ।
द्वादश्यामर्धभागैश्च दातारमधिगच्छति ।।

दशम्यां भोजनकाल उक्तः स्कान्दे–

मध्याह्ने लघुभोजी यो दशम्यां स हरिप्रियः ।
मध्याह्नादूर्ध्वभोजी यो मध्यमः स तु कीर्तितः ।।

तृतीययामभोजी यः सोऽधमः परिकीर्तितः ।
सायङ्काले दशम्यां यो भुंक्ते स व्रतहानिमान् ।।

दशम्यां रात्रिभोजी यो बहुज्ञोऽपि तु नारकी ।
दिनत्रयात्मकं ह्येतत् व्रतं मुक्त्यादिदायकम् ।। इति

दशम्यां हरिवासरे भोजनं न कार्यमित्युक्तं पञ्चरात्रे –

हरिवासरतः पूर्वं दशम्यां भोजनं स्मृतम् ।
तस्मिन्नतीते द्वादश्यां कर्तव्या पारणा बुधैः ।। इति

हरिवासरकालः स्मृत्यन्तरे–

एकादश्याः प्रान्तभागो द्वादश्याः पूर्व एव च ।
हरिवासरनामासौ सर्वकालोत्तमोत्तमः ।। इति

स्थानान्तरे–

एकादश्याः प्रान्तभागो द्वादश्याः पूर्व एव च ।
हरिवासर इति ज्ञेयस्तत्र भुक्तिर्हि दोषकृत् ।।

इत्यास्यायमर्थः । यदा एकादशी दशमीविद्धा भवति तदा दशम्यां अरुणोदये विद्यमानैकादशीघटिकाः उदयानन्तरं विद्यमानैकादशीघटिकाश्च मेलनीयाः । एवं मिलिताः एकादशीघटिकाः यावन्त्यो भवन्ति तासां भागचतुष्टयं कार्यम् । तत्रान्तिमे

चतुर्थभागे भोजनौपासनादिकं कर्म न कार्यम् । तथा एकादश्यां रात्रिशेषे द्वादश्याः यावन्त्यो घटिकाः सन्ति उदयानन्तरं च यावन्त्यो द्वादशीघटिकास्सन्ति तदुभयं मेलयित्वा भागचतुष्टयं कृत्वा प्रथमभागास्थाः यावन्त्यो घटिकाः एकादश्या रात्रिशेषे गतास्ता विहाय सूर्योदयानन्तरमुर्वरितघटिकासु तर्पणौपासनभोजननि न कार्याणीति ।

## अथ एकादशी

तत्राधिकारिणः, कृष्णामृतमहार्णवे–

**ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भर्तृमती तथा ।।**

**अभर्तृका तथा चाऽन्ये सूतवैदेहिकादयः ।**
**एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।।**

**नारदीये –**

**नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।**
**पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ।।**

**सपुत्रश्च सभार्यश्च स्वजनो भक्तिसंयुतः ।**
**एकादश्यामुपवसेत्पक्षयोरूभयोरपि ।।**

**माधवीये–**

**अष्टवर्षाधिको मर्त्यो ह्यशीतिन्यूनवत्सरः ।**
**एकादश्यामुपवसेत्पक्षयोरूभयोरपि ।।**

**अग्निपुराणेऽपि–**

**गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च ।**
**एकादश्यां न भुञ्जीत पक्षयोरूभयोरपि ।।**

**देवादीनामप्यधिकार उक्तः पाद्मे –**

**एकादश्यां तु शुद्धायामुपोष्यैव जनार्दनम् ।**
**द्वादश्यां चार्चयन्त्यत्र विधिना वरवर्णिनि ।।** इति

न च गृहस्थादिसर्वेषामप्यधिकारे गृहस्थस्य पुत्रवतो कृष्णैकादश्युपवास-निषेधकेन-

**एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।**
**वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ।।**

**संक्रान्त्यामुपवासञ्च कृष्णैकादशिवासरे ।**
**चन्द्रसूर्यग्रहे चैव न कुर्यात् पुत्रवान् गृही ।।**

इत्यादिवाक्येन विरोध इति वाच्यम्, "शुक्लो मौनी चरेत्सन्ध्याम्" इत्यादाविव च शुक्लपदस्य शुद्धत्वार्थकत्वेन तत्समभिव्याहृतकृष्णपदस्य तद्विपरीताशुद्धार्थकत्वेन शुक्लामेव शुद्धामेवोपवसेत् । कृष्णैकादशिवासरे विद्धैकादशिवासरे इत्यर्थसंभवात्। अन्यथा पूर्वोक्तनिरवकाशबहुवाक्यविरोधात् ।

**विवेचयति यो मोहात् शुक्ला कृष्णेति पापकृत् ।**
**एकादशीं स वै याति निरयं नात्र संशयः ।।**

**यथा गौर्नैव हन्तव्या शुक्ला कृष्णेति भामिनि ।**
**तथैवैकादशी कार्या पक्षयोरूभयोरपि ।।**

इत्यादि कृष्णामृतमहार्णवोदाहृतनिरवकाशपद्मपुराणादिविरोधाच्च । कृष्णै-कादशिव्रतनिषेधकानि वाक्यानि काम्यफलार्थिपुरूषाधिकारिकाणीति वा व्याख्येयानि । तदप्युक्तं कृष्णामृतमहार्णवे-

**यानि कानि च वाक्यानि कृष्णैकादशिवर्जने ।**
**भरण्यादिनिषेधे च तानि काम्यफलार्थिनाम् ।।**

**कामिनोऽपि हि नित्यार्थं कुर्युरेवोपवासनम् ।**
**प्रीणनार्थं हरेर्नित्यं न तु काम्यव्यपेक्षया ।।**

**तस्माच्छुक्लामथो कृष्णां भरण्यादियुतामपि ।**
**प्रत्यवायनिषेधार्थं उपवासीत नित्यशः ।।**

प्रत्यवायनिषेधार्थमित्यनेन नित्यत्वं चोक्तम्, प्रत्यवायश्चोक्तस्तत्रैव ।

**एकादश्यां तु यो भुंक्ते मोहेनावृतचेतनः ।**

शुक्लायामथ कृष्णायां निरयं याति स ध्रुवम् ।।

व्यास उवाच–

स ब्रह्महा स गोघ्नश्च स्तेनः स गुरूतल्पगः ।
एकादश्यां हि भुञ्जानः पक्षयोरूभयोरपि ।।

वरं स्वमातृगमनं वरं गोमांसभक्षणम् ।
वरं हत्या सुरापानं एकादश्यां तु भोजनात् ।।

पृथिव्यां यानि पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ।।

संप्राप्य वासरं विष्णोर्यो भुंक्ते पुरुषाधमः ।
युगानि सिक्थसंख्यानि नरके मज्जते तु सः ।।

एकादशीपरित्यागात् गुरूणामपि निन्दनात् ।
श्रुतीनामवमानाच्च पतेदेव न संशयः ।।

वरश्चंडालजातीयो एकादश्युपवासकृत् ।
न तु यज्वा चतुर्वेदी यतिर्वा न तु वैष्णवः ।।

एकादशीदिने पुण्ये भुञ्जते ये नराधमाः ।
अवलोक्य मुखं तेषामादित्यमवलोकयेत् ।।

तस्मादेकादशीव्रतस्य नित्यत्वात् प्रत्यवायपरिहारार्थं निष्काम्यत्वेन हरिप्रीत्यर्थं च सर्ववर्णाश्रमिभिः कर्तव्यत्वं सिद्धम् । सा चैकादशी द्विविधा, दशमीवेधरहिता तद्विद्धा चेति, तत्र दशमीविद्धां परित्यजेदित्युक्तं कृष्णामृतमहार्णवे–

क्षये वाप्यथवा वृद्धौ सम्प्राप्ते वा दिनक्षये ।
उपोष्या द्वादशी पुण्या पूर्वविद्धां परित्यजेत् ।।

पूर्वविद्धां दशमीविद्धामित्यर्थः । स च दशमीवेधो द्विविधः, अरुणोदयवेधः सूर्योदयवेधश्चेति । अरुणोदयस्वरूपमुक्तं कृष्णामृतमहार्णवे "चतस्रो घटिकाः प्रातररुणोदय उच्यते" स्कान्दे नारदीये च "उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदयः" इति । वाराहे च–

**षण्णाड्यधिकपञ्चाशद्यदा सूर्योदयाद्भवेत् ।**
**अरुणोदयकालोऽसौ ततो नाडीत्रयादपि ।**
**सूर्योदय इति ज्ञेयो मुनिभिः परिकीर्तितः ।।**

अरुणोदयवेधे एकादश्याः त्याज्यत्वमुक्तम् ।

**दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।**
**नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ।।**

**अरुणोदयवेलायां दिशागन्धो भवेद्यदि ।**
**दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिप ।।**

दिशा दशमी ।

**अरुणोदयकाले तु दशमी यदि दृश्यते ।**
**सा विद्धैकादशी तत्र पापमूलमुपोषणम् ।।**

**अरुणोदयकाले तु दशमी यदि दृश्यते ।**
**न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ।।**

स च वेधः अनेकविधः, घटिकाचतुष्टयात्मकारुणोदयस्य षट्पञ्चाशद्घटिकया दशम्या स्पर्शरूपः । अरुणोदये दशम्याः कलार्धेन प्रवेशः कलया च काष्ठादिगत्या च लवेन च प्रवेशः । तथा घटिकया, घटिकाद्वयेन च प्रवेश इत्यादिः । तस्मिन्नेकविधवेधसत्वे एकादश्याः त्याज्यत्वमुक्तं कृष्णामृतमहार्णवे-

**अरुणोदयकाले तु व्यापिन्येकादशी यदि ।**
**सन्दिग्धैकादशी नाम वर्ज्या धर्मार्थनाशिनी ।।**

अत्रारुणोदयकाले व्यापिनीत्यनेन षट्पञ्चाशद्घटिका दशमीस्पृष्टैकादश्याः त्याज्यत्वमुच्यते । प्रमाणसंग्रहे-

**कलार्धेनाऽपि विद्धा स्याद्दशम्यैकादशी यदि ।**
**तदा त्वैकादशीं त्यक्त्वा द्वादश्यामुपवासयेत् ।।**

अत्र कलार्धेनारुणोदये दशमीप्रवेशे एकादश्यास्त्याज्यत्वमुच्यते ।

कलादिना प्रवेशेऽपि त्याज्यत्वमुक्तं स्कान्दे -

**कलाकाष्ठादिगत्यैव दृश्यते दशमी विभो ।**
**एकादशीव्रतं राजन्न कर्तव्यं कदाचन ।।**

**कृष्णामृतमहार्णवेऽपि–**

**कलावेधे तु विप्रेन्द्र दशम्येकादशीं त्यजेत् ।**
**सुराया बिंदुना स्पृष्टं गंगांभ इव निर्मलम् ।।**

**अरुणोदयवेलायां दिशागन्धो भवेद्यदि ।**
**दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिप ।।**

दिशागन्धः दशमीलेशः । घटिकया वेधेऽपि त्याज्यत्वमुक्तं गरुडपुराणे -

**उदयात्पूर्वघटिका व्यापिन्येकादशी यदि ।**
**संयुक्तैकादशी नाम वर्ज्येयं धर्मकांक्षिभिः ।।**

घटिकाद्वयेन वेधेऽपि त्याज्यत्वमुक्तम् ।

**उदयात्प्राक् मुहूर्तेन व्यापिन्येकादशी यदि ।**
**सङ्कीर्णैकादशी नाम वर्जयेत्तां हरिप्रियः ।।**

अरुणोदयस्पर्शारुणोदयैकघटिकाद्विघटिकाप्रवेशरूपानेकविधवेधविशेषोक्तिस्तु अर्वाग्दोषातिशयार्थमिति ज्ञातव्यम् । तथा च उदयात्प्राक् घटिकाचतुष्टयात्मक-सम्पूर्णारुणोदयव्यापिन्यपि एकादशी विद्धैवेत्युक्तं भवति । तर्हि कीदृशी शुद्धेत्याशंकायामुक्तं भविष्ये–

**आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता ।**
**एकादशी तु सम्पूर्णा विद्धान्या परिकीर्तिता ।।**

कृष्णामृतमहार्णवे गारुडे च -

**उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता ।**
**सम्पूर्णैकादशी ज्ञेया तत्रैवोपवसेद् गृही ।।** इति

सम्पूर्णा शुद्धा । ननु अत्र मुहूर्तद्वयसंयुतेत्यनेनापि घटिकाचतुष्टयात्मका-रुणोदयव्यापित्वमेवोच्यते, मुहूर्तद्वयस्य घटिकाचतुष्टयरूपत्वात्, तस्याश्च

''अरुणोदयकाले तु व्यापिन्यैकादशी यदि'' इत्यनेन विद्धत्वेन त्याज्यत्वोक्तेः कथं शुद्धत्वेन ग्राह्यत्वम्, परस्परविरोधादिति चेन्न । अत्र ''मुहूर्तद्वयसंयुता'' इत्यत्र संशब्देन दशम्यस्पृष्टघटिकाचतुष्टयव्याप्तेरुक्तत्वेन उदयात् प्राक् किञ्चिदधिक-घटिकाचतुष्टयरूपारुणोदयव्यापिन्या एवैकादश्याः शुद्धत्वोक्त्या ग्राह्यत्वसंभवात् । अन्यथा संशब्दवैय्यर्थ्यात् । अथवा

**मुहूर्तमष्टभागोनघटिकाद्वयमिष्यते ।**
**क्वचिद्द्विघटिकापि स्यात्क्वचित्स्यात्तावदुत्तरा ।।**

इति बृहदारण्यकभाष्योक्तेः । मुहूर्तानां त्रिविधत्वोक्त्या तु अत्र अष्टभागाधिक-घटिकाद्वयरूपमुहूर्तद्वयसंयुतत्वोक्त्या किञ्चिदधिकघटिकाचतुष्टयव्यापिन्या एवैकादश्याः शुद्धत्वोक्त्या ग्राह्यत्वसम्भवात् । एवञ्च दशमीकलार्धादि-न्यूनषट्पञ्चाशद्घटिका यदा भवेत् तदा एकादशी शुद्धैव । तत्रैवोपवसेत् । तथा चोक्तं स्मृतिकौस्तुभोदाहृतस्कान्दे वैष्णवसंहितायामपि-

**यत्कलार्धादिकन्यूनषट्पञ्चाशन्नाडिका तथा ।**
**पूर्णात्पूर्णषट्पञ्चाशन्नाडिका दृश्यते तदा ।।**

**शुद्धैवैकादशी ज्ञेया तत्रैवोपवसेद् ध्रुवम् ।**
**षट्पञ्चाशन्नाडिकोर्ध्वकलार्धादिर्यदा भवेत् ।**
**दशम्यास्तु तदा विद्धा त्याज्यैवैकादशी बुधैः ।।** इति

यत् यदा, पूर्णा दशमी । अत एव षट्पञ्चाशद्घटिकानां दशपलोनत्वेऽपि देशादिभेदेन षट्पञ्चाशत्वसंभवेन तादृशषट्पञ्चाशद्घटिकादशम्योदयात्प्राक् घटिकाचतुष्टयात्मकारुणोदयव्यापिन्या एकादश्याः स्पर्शे तस्या विद्धत्वात् तां परित्यज्य शुद्धद्वादश्यामेवोपवासः त्रयोदश्यां पारणं च कार्यम् । तत्र च-

**बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु ।**
**उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणम् ।।**

इति कृष्णामृतमहार्णववाक्यं प्रमाणम् । तत्र ब्राह्मणेषु गणकेषु, पलगणकादिविषये विवादिषु सत्सु इत्यर्थः । हेमाद्रौ च-

**बहुवाक्यविरोधेन सन्देहो जायते यदा ।**
**द्वादशी तु तदा ग्राह्या त्रयोदश्यां तु पारणम् ।।**

इति वेधसन्देहे ज्योतिर्विदां विप्रतिपत्तौ वा द्वादशी उपोष्येति विद्याधीशतीर्थ-स्वामिभिः निर्णीतमस्तीति सम्प्रदायविदोऽप्याहुः ।

**एवं विद्धां परित्यज्य द्वादश्यामुपवासनात् ।**
**कोटिजन्मार्जितं पापमेकेनैव विनश्यति ।**
**ततः कोटिगुणञ्चापि निषिद्धस्य च वर्जने ।।**

**यदनादिकृतं पापं तदूर्ध्वं यत्करिष्यति ।**
**तत्सर्वं विलयं याति परेषामुपवासनात् ।**
**न च तस्मात् प्रियतमः केशवस्य ममापि च ।।** इति

**यानि कानि च वाक्यानि विद्धोपासापराणि तु ।**
**धनदार्चापराणि स्युः वैष्णवी न दशायुता ।।**

**अथवा मोहनार्थानि मोहिन्या भगवान् हरिः ।**
**अर्थितः कारयामास व्यासरूपी जनार्दनः ।।**

इत्यादि कृष्णामृतमहार्णवे ।

**एकादशी यदा ब्रह्मन् दिनक्षयतिथिर्भवेत् ।**
**उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ।।**

दिनक्षयतिथिः पद्मपुराणे । ''द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।। इति । कौर्मे-

**एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।**
**दिनत्रये तु सम्प्राप्ते उपोष्या द्वादशी भवेत् ।।**

**उपोषिता द्वादशी तु ब्रह्महत्यां व्यपोहति ।**
**तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ।।** इति

अयमरुणोदयवेधः वैष्णवपरः ।

**दशमीशेषसंयुक्तो यदि स्याद्दरुणोदयः ।**
**नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ।।**

इत्यादिवाक्येषु अरुणोदयवेधनिषेधकेषु वैष्णवग्रहणात् । वैष्णवलक्षणं तु स्कान्दे-

**परमापदमापन्नो हर्षे वा समुपस्थिते ।**
**नैकादशीं त्यजेत्सोऽपि यस्य दीक्षास्ति वैष्णवी ।।**

पञ्चरात्रागमाद्युक्ततत्तन्मुद्राधारणादि वैष्णवदीक्षा । ''विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते'' इति माधवीये । भविष्ये-

**यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा ।**
**तुल्यं ते मन्यते यस्तु स हि वैष्णव उच्यते ।।** इति

**सूर्योदयवेधस्तु कण्वेनोक्तः-**

**उदयोपरिवद्धा तु दशम्येकादशी यदि ।**
**दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः ।।** इति

**स्मृत्यन्तरेऽपि -**

**दशम्याः प्रान्तमादाय यदोदेति दिवाकरः ।**
**तेन स्पृष्टं हरिदिनं दत्तं जम्भासुराय तु ।।** इति

अथ वेधः स्मार्तपरः परिशेषात्, तथा च माधवीये -

**अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ।**
**उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्तयोः क्रमात् ।।**

**तेषां विहितैकादशी गारुडे उक्ता -**

**आदित्योदयवेलायामारभ्य षष्ठिनाडिकाः ।**
**सम्पूर्णैकादशी नाम कार्या धर्मफलेप्सुभिः ।।** इति

**यत्तु-**

**अर्धरात्रे तु केषाञ्चित् दशमीवेध इष्यते ।**
**कपालवेध इत्याहुराचार्या ये हरिप्रियाः ।।**

इत्यादि घटिकाचतुष्टयात्मकारुणोदयात् पूर्वकालीनैकादश्याः दशमीवेधप्रतिपादकं वाक्यं तत् कैमुत्येनारुणोदयवेधनिन्दार्थमिति माधवः । केचित्तु-

**दशमीं नवमीविद्धां तद्विद्धां चापरां तिथिम् ।**
**वर्जयेद्यत्नतो धीमान् सुरास्पृष्टं पयो यथा ।।**

इति वचनमाश्रित्य नवमीवेधमपि परित्यजन्ति, तत्र मूलं चिन्त्यम्, हेमाद्रिमाधवाद्याकरेष्वदर्शनादिति निर्णयसिन्धौ, स्मार्तक्रियमाणैकादशी निषिद्धैव ।

**सप्तपञ्चाशद्घटिका दशमी यदि दृश्यते ।**
**वेधसंज्ञा तु सा प्रोक्ता रक्षसामभयप्रदा ।।**

**अष्टपञ्चाशद्घटिका यदा स्याद्दशमी तदा ।**
**अतिवेधा तु सा प्रोक्ता जम्भासुरफलप्रदा ।।**

**एकोनषष्ठिघटिका यदा स्याद्दशमी तदा ।**
**महावेधापि सा प्रोक्ता बाष्कलैर्बलवर्धिनी ।।**

**यदा वै षष्ठिघटिका सम्पूर्णा दशमी भवेत् ।**
**योगो नाम महावेधो मोहिन्या सकलेष्टदा ।।**

**उदयोपरिविद्धा तु दशम्येकादशी यदि ।**
**दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः ।।**

इत्यादिना असुरविषयत्वस्योक्तत्वादिति ।

**दशमीवेधहीना च परतो द्वादशी यदि ।**
**उपवासद्वयं कुर्यादन्यथा नरकं व्रजेत् ।।**

**कृष्णामृतमहार्णवे च –**

**द्वादश्यामतिरिक्तायां यो भुङ्क्ते पूर्ववासरे ।**
**द्वादशद्वादशीर्हन्ति द्वादशी चातिलङ्घिता ।।**

**कला वा घटिका वापि परतो द्वादशी यदि ।**
**द्वादशद्वादशीर्हन्ति पूर्वेद्युः पारणे कृते ।।**

**एकादशीमुपोष्यैवं द्वादशीमप्युपोषयेत् ।**
**न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ।।** इति

अयं वेधः ज्योतिःशास्त्राभिज्ञैर्ज्ञेय इत्युक्तं कृष्णामृतमहार्णवे-

**ज्ञात्वा विप्रास्तिथिं सम्यक् दैवज्ञैः समुदीरिताम् ।**
**कर्तव्य उपवासस्तु अन्यथा नरकं व्रजेत् ।।**

**स्कान्दे च-**

**वृद्धैः प्रवृद्धसिद्धान्तमधिगम्य मुनीश्वराः ।**
**दैवज्ञैर्नियमः कार्यः दशम्यादिदिनत्रये ।।**

**वृद्धावार्यभटो ग्राह्यः क्षये ब्राह्मस्तिथिर्बुधैः ।**
**साम्ये च सूर्यसिद्धान्तः तिथिभान्तविनिर्णयः ।।** इति

**व्रतानामेव सर्वेषां सौरेणैव विनिर्णयः ।**
**दशम्यादित्रयाणाञ्च आर्येणैव तु कारयेत् ।।**

**ब्राह्मेण पैतृकादीनि देवकार्याणि सौरतः ।**
**विष्णुव्रतानि चार्येण निश्चितानि मनीषिभिः ।।**

**माधवीये-**

**वृद्धावार्यः क्षये ब्राह्मः समे सौरस्तथैव च ।**
**सर्वधर्मेषु कः श्रेयान् विष्णुधर्मेषु योऽधिकः ।।**

**वृद्धौ त्रिघटिका ग्राह्या साम्ये चैव द्विनाडिका ।**
**क्षयेऽप्येकार्धघटिका गार्ग्यस्य वचनं यथा ।।** इति

तस्मादेवं ज्योतिर्विद्भिः सम्यक् तिथित्रयं विज्ञाय कलार्धादिन्यूनषट्पञ्चाशत्तम-घटीगतैकादशी शुद्धा सैवोपोष्या, न तु विद्धेति सिद्धम् ।

## अथ एकादशीकर्तव्यम्

**ब्रह्मवैवर्ते–**

**प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।**
**दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतम् ।।**

प्रातःकाले सङ्कल्पः कार्य इत्युक्तं वाराहे अत्र मन्त्रः–

**एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि ।**
**भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।।** इति

**पाद्मे–**

**एकादश्यां महापूजा कर्तव्या विविधा शुभा ।**
**देयं पादोदमेवात्र न नैवेद्यं सुरेष्वपि ।।**

सुरेष्वपि रमाब्रह्मादिषु सनकादिष्वपीत्यर्थः ।

**मदर्थमपि नैवेद्यं न देयं पद्मसम्भव ।**
**देवानां च ऋषीणां च पितॄणां च विशेषतः ।**
**अन्नं न दद्यात्कृष्णाहे भगवन्तं हरिं विना ।।**

इति वाक्यं तु स्थिरार्चनविषयमित्याहुः ।

**पानीयोदकसंमिश्रमेकादश्यां तु वर्जयेत् ।**
**विष्णुपादोदकं वाऽपि सकृदेव पिबेन्नरः ।।**

**तोयं पादोदकं विष्णोस्तोयं नैवेद्यसम्भृतम् ।**
**मिलित्वा सततं सेव्यं तीर्थमेकादशीं विना ।।**

**तुलसीमिश्रितं तीर्थमेकादश्यां तु वर्जयेत् ।**
**अग्राह्यं विष्णुभक्तानां व्रतं नश्यति पार्वति ।।** इति

**पाद्मे–**

**अन्नं समर्पयेन्मह्यं यदि मद्दिवसे शुभे ।**
**तथाऽपि निरयप्राप्तिः किं पुनर्भोजने कृते ।।**

तथा

एकादश्यां तिथौ पुण्ये तुलसीं भक्षयन्ति ये ।
ते यान्ति नरकं घोरं मद्द्रोहेण नराधमाः ।।

एकादश्यां तिथौ पुण्ये दन्तधावनकृन्नरः ।
स याति नरकं घोरं व्याघ्रभक्षं चतुर्युगम् ।।

तैलाभ्यञ्जनदोषेण विष्णोः पुण्यदिनत्रये ।
शाकिनीं योनिमाश्रित्य जातो व्याघ्रसमाननः ।।

स्कान्दे ''अन्नं पानं निशानिद्रामेकादश्यां तु वर्जयेत्'' नारदीये च देवस्य पुरतः कुर्यात् जागरं नियतो व्रती'' तथा-

व्यतीपातश्च संक्रान्तिः वैधृतिर्वा यदा भवेत् ।
एकादश्यां तदा विद्वान् पावमानी ऋचः पठेत् ।।

विष्णुधर्मे-

तज्जाप्यं यजनं ध्यानं तत्कथाश्रवणादिकम् ।
तदर्चनं च तन्नामकीर्तनं श्रवणादयः ।
उपवासकृतामेते गुणाः प्रोक्ता मनीषिभिः ।।

कृष्णामृतमहार्णवे-

भोक्ष्ये विषं विशे वह्निं पतिष्ये पर्वतादधः ।
खड्गेन वा शिरश्छिन्द्यां न भोक्ष्ये हरिवासरे ।। इति

वाराहे-

गर्भिणी सूतिका बालः तीर्थयात्राकृतश्रमः ।
स पादमात्रं कुर्वीत तृप्त्यर्थं फलभक्षणम् ।।

खर्जूरं नारिकेलं च प्रियालं पनसादिकम् ।
आम्रं च कदलीं द्राक्षां क्षीरं दधि घृतं गुडम् ।।

अनिषिद्धानि मूलानि तथा कन्दादिकं च यत् ।
विनोदकेन यत्पक्वं धान्यं यच्च घृतादिना ।।

**एतानि फलसंज्ञानि योऽत्यशक्तो दिने मम ।**
**पादशोऽश्नाति यस्तृप्तेः सम्पूर्णं तत्फलं भवेत् ।।**

**यदि शक्तोऽपि गृह्णीयादेतान्येकादशीदिने ।**
**यथा तृप्तिस्तथा हानिर्व्रतस्य हि भवेद्ध्रुवम् ।।**

इदं सात्विकमतं न भवति, किन्तु राजसमेवेत्याहुः शिष्टाः ।

**नारदीये–**

**अनुकल्पो नृणां प्रोक्ताः क्षीणानां वरवर्णिनि ।**
**मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे ।।**

**नरो मूलफलाहारी हृदि शल्यं ममार्पयेत् ।**
**न त्वेव भोजनं कैश्चिदेकादश्यां बुधैः स्मृतम् ।।**

**अस्यापवादः–**

**शयने च मदुत्थाने मत्पार्श्वपरिवर्तने ।**
**नरो मूलफलाहारी हृदि शल्यं ममार्पयेत् ।।**

एकादश्यां श्राद्धं न कर्तव्यमित्याह हारीतः–

**पित्रोः श्राद्धं न कर्तव्यमेकादश्यां द्विजोत्तमः ।**
**द्वादश्यां तच्च कर्तव्यं नोपवासदिने क्वचित् ।।**

अत्र एकादशीश्राद्धं नाम मरणाख्यनिमित्तेन प्राप्तमेव श्राद्धम् । न तु अमावास्यादिप्रयुक्तनित्यश्राद्धवत् एकादशीप्रयुक्तश्राद्धं नाम किञ्चित् । एतादृशैकादशीश्राद्धस्याप्रामाणिकत्वेनासत्वात् । अन्यथा अमावास्यादाविव मृताहत्वाभावेऽपि एकादश्यां श्राद्धस्य कर्तव्यतापत्तेः । विहितस्यापि नित्यस्य प्रतिबन्धेन लोपे एकादशीश्राद्धस्य द्वादश्यां कर्तव्यताविधानासम्भवाच्च सूतकादिप्रतिबन्धेन लुप्तदर्शश्राद्धादिवत् । तस्मान्नैमित्तिकमेवैकादशीश्राद्धम् । तत्पक्षे तु नानुपपत्तिः । मृताहत्वनिमित्तेन सांवत्सरिकश्राद्धस्य प्राप्तिसम्भवात् । तस्य चैकादश्यां मृताहत्वेऽपि हरिदिनत्वरूपप्रतिबन्धके सति तादृशमृताहपरित्यागेन पारणदिने विधानसम्भवात्, सूतकादिप्रतिबन्धेन मृताहत्यागेन सूतकान्ते श्राद्धविधानवत् । इति

**एकादश्यां तु यः श्राद्धं कुर्यान्मोहेन पद्मज ।**
**रेतोमूत्रपुरीषाणि स पितृभ्यः प्रयच्छति ।।**

**तथाचोक्तं सङ्ग्रहे–**

**यथाशौचगतं श्राद्धमाशौचान्ते विधीयते ।**
**तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ।।** इति

**एकादशीं परित्यज्य द्वादश्यामेव वैष्णवः ।**
**कुर्यात् श्राद्धोदितं कर्म प्रत्यब्दं पद्मसम्भव ।।** इति स्मृतिसंग्रहे

**ये कुर्वन्ति महीपाल श्राद्धमेकादशीदिने ।**
**त्रयस्ते नरकं यान्ति दाता भोक्ता पिता तथा ।।**

**भुङ्क्ष्व भुङ्क्ष्वेति यो ब्रूयाद्यो भुङ्क्ते हरिवासरे ।**
**तावुभौ पतितौ स्यातां तस्मात् श्राद्धं परेऽहनि ।।**

**अन्नाश्रितानि पापानि तद्भोक्तुर्दातुरेव वा ।**
**मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।।**

इत्यादीनि एकादश्यां नैमित्तिकश्राद्धनिषेधेन द्वादश्यां विधायकानि ज्ञेयानि । अत्र वाक्येषु एकादशीशब्देन उपवासदिनमेव ग्राह्यम् । न तु एकादशीशब्दवाच्यदिनमेवेति नियमः । तथा द्वादशीशब्देन पारणदिनमेव ग्राह्यम् । न तु द्वादशीदिनमेवेति । अन्यथा एकादशीश्राद्धं द्वादश्यां कार्यमित्युक्ते यदा दशमीविद्धैकादशीं परित्यज्य शुद्धा द्वादशी उपोष्या भवेत्, तदाऽपि तस्यामेव एकादशीश्राद्धं कर्तव्यं स्यात् विहितत्वात् । किञ्च द्वादशीश्राद्धमपि तत्रैव कर्तव्यं स्यात् । द्वादशीश्राद्धस्य त्रयोदश्यां विधानाभावात् । न चैतत्संभवति । अत उपवासदिने प्राप्तनैमित्तिकश्राद्धं पारणदिने कर्तव्यमित्येव वक्तव्यम् । एवञ्च सति–

**मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा ।**
**अभ्यर्च्य पितृदेवांश्च ह्याघ्राय पितृसेवितम् ।**
**प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ।।**

इत्याद्येकादश्यां श्राद्धविधायकानि गोभिलादिवचनानि [१]विद्धैकादशीपरत्वेन समञ्जसानि भविष्यन्ति । विद्धैकादश्याः मृताहत्वेन तत्र श्राद्धस्य अशौचदिनत्ववत् व्रतदिनत्वप्रतिबन्धकत्वस्य चात्राभावेन श्राद्धकरणसम्भवात् । अन्यथा "मृताहं समतिक्रम्य चण्डालः कोटिजन्मसु" इति वचनोक्तमृताहातिक्रमणदोषापत्तेः । व्रतदिवसप्राप्तश्राद्धस्यैव पारणदिने विहितत्वेन तस्य च पूर्वदिनेऽपकर्षाभावेन "एकादशीं परित्यज्य द्वादश्यामेव वैष्णवः । कुर्यात् श्राद्धोदितं कर्म प्रत्यब्दं पद्मसम्भव" इत्याद्येकादशीश्राद्धस्य द्वादश्यां कर्तव्यताविधायकवचने विरोधाभावाच्च।

अन्यथा एकादश्यां श्राद्धविधायकगोभिलादिबहुवचनविरोधापरिहारात् । अप्रमाणत्वकल्पनस्यान्याय्यत्वात् । मोहनार्थत्वस्यागतिकागतित्वात् । पूर्वोक्त-प्रकारेण गत्यन्तरस्योक्तत्वात् इति । एतेन "मृताहं समतिक्रम्य चण्डालः कोटि-जन्मसु"इति वाक्यमाश्रित्य एकादश्यां श्राद्धं कर्तव्यमिति वदन्तो निरस्ताः । अस्य वाक्यस्यप्रतिबन्धकशून्यमृताहपरत्वात्।प्रतिबन्धकानितुहरिदिनत्वाशौचदिनत्वादीनि। तत्र च प्रमाणान्युक्तानि स्मृत्यन्तरे ।

**एकादश्यां दशाहस्तु यदि प्राप्तः कथं भवेत् ।**
**दशम्यामेव तत्सर्वं समाप्य च शुचिर्भवेत् ।**
**पैतृकं नाऽधिकं कुर्याद्वैदिकं नाऽधिकं चरेत् ।।**

**वाराहेऽपि–**

**एकादश्यां यदा ब्रह्मन् ब्राह्मणो म्रियते यदि ।**
**मन्त्रतः सकलं कार्यं पुत्रैस्तस्यौर्ध्वदेहिकम् ।।**

**प्रेताहुतिर्न होतव्या न पिण्डं न तिलोदकम् ।**
**द्वादश्यां सकलं कार्यं विधिरेषः सनातनः ।।**

---

१ विद्धैकादश्यां श्राद्धं न कार्यमित्युक्तं पुराणेषु, तथा सम्प्रदायोऽप्यस्ति ।
ये कुर्वन्ति महीपाल श्राद्धमेकादशीदिने ।
विद्धे वै नरकं यान्ति कर्ता भोक्ता पिता तथा ।। इति गारुडवचनम् ।।
विद्धायामपि शुद्धायामेकादश्यां मृतो यदि । तद्दिने नैव कुर्वीत द्वादश्यामेव कारयेत् ।
यदि मोहेन कुर्वीत स पतेन्नरकेऽशुचौ ।। इति विष्णुदासकृतस्मृत्यर्थसारवचनम् ।।
विद्धैकादशीश्राद्धं त्रयोदश्यां यथा भवेत् । तथा संक्रमणं पर्व त्रयोदश्यां तु कारयेत् ।
इति पञ्चरात्रोक्ततिथिनिर्णये ७१-१२

पितुर्मरणमध्ये तु सम्प्राप्ते हरिवासरे ।
पिण्डदानं न कर्तव्यं न तिलोदकसत्क्रियाः ।।

**एकादशीभोजने प्रायश्चितमाह–**

अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रयणं चरेत् ।।

श्राद्धवत् होमपञ्चमहायज्ञतर्पणादिकमप्येकादश्यां न कर्तव्यमित्युक्तं बाभ्रव्यश्रुतौ–

''देवा ह वै प्रजापतिमब्रुवन् केन वै मनुष्यास्तरन्तीति । स होवाच ज्ञानकर्मणोस्तरन्तीति । ज्ञानमुपदिष्टम् । कर्म व्याख्यास्यामः । नित्यं निवृत्तमकामम्। तद्भेदाः सन्ध्याहोमव्रतादयः । व्रतेऽप्यह्नि परब्रह्मण उपवसेत् । स हि श्रेष्ठः परं पारं तारयतीति । ते होचुः कथं नु भगव इति स होवाच एतस्मिन् ब्रह्मदिवसे नाग्निं जुहुयात् । न श्राद्धं कुर्यात् न किमपि नित्यनैमित्तिकादिदेवर्षिपितृंस्तर्पयेत् । न स्वाध्यायं विना पञ्चप्राणमहायज्ञाः तस्माद्यदिह वा तर्पयेज्जुहुयाच्छ्राद्धं दद्यात् स चाण्डालः स पितृहा स मातृहा स देवहा सोऽग्निहा स सर्वहा भवतीति । स ब्रह्मणः सायुज्यं सलोकतां गच्छति य एवं वेदेति''

**मैत्रावरुणशाखायाञ्च–**

''अथेदानीं ज्ञानोपसर्गाः, राजन् मोहजालस्यैते वै योनय इत्युक्त्वा अथ ये चाऽन्ये मिथ्यातर्कैर्दृष्टान्तैः कुहकेन्द्रजालैः वैदिकेषु परिस्थातुमिच्छन्ति तैः सह न संविशेत् प्राकाश्या ह्येते तस्करा अस्वर्ग्याः'' इत्यादिना कांश्चन ज्ञानोपसर्गानुक्त्वा ''अथ ये चाऽन्ये व्रतविलोपिनो विकर्मस्था हरिदिने ह वै नित्यनैमित्तिकादिश्राद्धहोम-तर्पणादिकारिणः...'' इत्यादिना एकादश्यां श्राद्धहोमतर्पणादिकं तत्त्वज्ञानोपसर्गत्त्वेन निन्दितत्त्वोक्तेः ।।

**पैङ्गिश्रुतौ च–**

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
न श्राद्धहोमौ कुर्वीत देवादीन् नतु तर्पयेत् ।।

**स्मृतिचन्द्रिकायां च–**

एकादश्यां खगाधीश न होतव्यं सुरादिषु ।
हविषो गर्हितत्वाद्धि न गृह्णन्ति सुरादयः ।। इति

बृहन्नारदीये च–

न होतव्यं न होतव्यमेकादश्यां कदाचन ।
जुहुयाद्यदि मूढात्मा आभानोर्नरकं व्रजेत् ।। इति

वाराहे एकादशीं प्रकृत्योक्तम्–

नैवाहारं प्रकुर्वीत न द्विःकृत्वो जलं पिबेत् ।
न श्राद्धं तत्र कुर्वीत न होमं नच तर्पणम् ।। इति

नाममहात्म्ये पञ्चरात्रागमे च–

तिलोदकं पिण्डदानं श्राद्धं होमश्च तर्पणम् ।
तिलदानं चान्नदानं न कुर्याद्धरिवासरे ।।
उपोष्य चार्चयेद्विष्णुं पक्षयोरुभयोरपि ।। इति

ब्रह्महत्यादिपापानि गुरुतल्पसमान्यपि ।
होमीयेषु वसन्तीति जयन्त्यां हरिवासरे ।
तस्माद्धोमं न कुर्वन्ति ज्ञानिनस्तत्त्वदर्शिनः ।। इति च

देवाश्च पितरश्चैव तथैव मुनिसत्तमाः ।
हरेराज्ञां पुरस्कृत्य भक्त्या परमया युताः ।।

एकादश्यां तु शुद्धायामुपोष्यैव जनार्दनम् ।
द्वादश्यामर्चयन्त्यत्र विधिना वरवर्णिनि ।। इति पाद्मे च

न चैकादश्यां औपासनाद्यननुष्ठाने होमलोपेन प्रत्यवायापत्त्या प्रायश्चित्तापत्तिरिति वाच्यम् । प्रायश्चित्तप्रसक्तेरेवाभावात् । विहितस्य कर्मणः दैवाद्वा मानुषाद्वा अपराधादननुष्ठानेन लोपे एव हि प्रत्यवायापातेन प्रायश्चित्तानुष्ठानं दृष्टम् । न चैकादश्यां नित्यहोमो विहितः, न वा किञ्चिन्निमित्ताल्लुप्तः, येन प्रायश्चित्तमनुष्ठेयं स्यात् । किन्तु ''न हिंस्यात्सर्वा भूतानि'' इत्युत्सर्गतः प्राप्तस्य सर्वहिंसानिषेधस्य ''अग्नीषोमीयं पशुमालभेत'' इत्यपवादवत् ''यावज्जीवमग्निहोत्रं जुहोति'' इत्यनेनोत्सर्गतः षष्ठिघटिकास्वपि प्राप्तस्य नित्यहोमस्य ''सायंप्रातरग्निहोत्रं जुहुयात्'' इत्यनेन सोत्सर्गश्च सायंप्रातरिति कालविशेषनियामकेन बाधवच्च अत्राप्युत्सर्गतः सर्वतिथिषु प्राप्तस्य नित्यहोमस्य ''एतस्मिन् ब्रह्मदिवसे नाग्निं

जुहुयात्'' इत्यादिना अपवादस्य सत्वात् सर्वथा निषिद्ध एव एकादशीहोमः । न चैतादृशस्याननुष्ठाने प्रत्यवायापत्त्या प्रायश्चित्तानुष्ठानं क्वाऽपि दृष्टम् । लोपस्यैवाभावात्। तदुक्तम्-

**यद्याहिताग्निर्विप्रस्तु नाऽग्नौ होमं समाचरेत् ।**
**न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ।।** इति

उभयोः एकादशीकृष्णजयन्त्योः, कृष्णशुक्लैकादश्योर्वा, यतः हरिरेव देवता पूज्यः नान्यः अतस्तत्र विधिलोपो नाऽस्ति । एकादश्याः केवलहरिदेवताकत्वेन तत्र साक्षाद्विष्णुपूजाया एव विहितत्वेन अग्न्यादिद्वारकोपासनाया अविहितत्वा-न्निषिद्धत्वाच्चेति भावः । एतेन एकादशीहोमस्य द्वादश्यामनुष्ठानेन लोपाभाव-वर्णनमपि परास्तम् । एकादशीहोमस्य सर्वथा निषिद्धस्य अत्यन्ताभावप्रतियोगित्वेन लोपाभावात्, द्वादश्यामनुष्ठानासम्भवात् । न च ''एकादश्यां न होतव्यम्'' इत्यादौ एकादश्यामिति सप्तमीनिर्देशात् एकादश्यधिकरणक एव होमो निषिद्धः, न तु एकादशीहोमः सर्वथा । एकादश्यां होमो न कर्तव्य इति सम्बन्धे षष्ठीनिर्देशा-भावादिति वाच्यम् । तथात्वे ''एतस्मिन् ब्रह्मदिवसे नाग्निं जुहुयात् न श्राद्धं कुर्यान्न किमपि नित्यनैमित्तिकादिदेवपितॄंस्तर्पयेत् न स्वाध्यायं विना पञ्चमहायज्ञान्'' इत्यादौ ब्रह्मदिवस इति,

**एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।**
**न श्राद्धहोमौ कुर्वीत देवादीन्नतु तर्पयेत् ।।**

इत्यादौ च एकादश्यामिति सप्तमीनिर्देशात् पञ्चमहायज्ञादेरपि एकादश्यधि-करणकतयैव निषेधो नतु एकादशीपञ्चमहायज्ञादेः सर्वथा निषेधः इत्यपि प्राप्त्या तत्पञ्चमहायज्ञादेरपि द्वादश्यामनुष्ठानप्राप्तेः । ननु एकादशीहोमस्य द्वादश्यामनुष्ठेयतायां,

**एकादश्यां प्राप्तवत्यां न होतव्यं सुरादिषु ।**
**द्वादश्यां हूयमानं तदानन्त्यायोपकल्प्यते ।।**

**एकादश्यां हूयमानमात्मनो नरकावहम् ।**
**द्वादश्यां हूयमानं तदानन्त्यायोकल्प्यते ।**
**एकादश्यां श्राद्धहोमौ द्वादश्यामेव कारयेत् ।।** इत्यादि

गारुडभविष्यत्पर्वादिवचनानां सत्वात् अनुष्ठानं सम्भवति । नतु वैश्वदेवहोम-स्यानुष्ठानं सम्भवति तत्र प्रमाणाभावादिति चेन्न । होमत्वाविशेषेण एकादशी-सम्बन्धिनो होमस्य द्वादश्यामनुष्ठानप्रतिपादकवाक्यानामेवैकादशीसम्बन्धिवैश्व-देवादेरपि द्वादश्यामनुष्ठानप्रतिपादकत्वसम्भवेन तत्प्रमाणाभावस्यासिद्धत्वात् ।

**नचाऽग्निहोत्रं न श्राद्धं नचौपासनमेव च ।**
**एकादश्यां प्रकर्तव्यं द्वादश्यामेव कारयेत् ।**
**कालातिक्रमदोषस्तु नास्त्यत्र शिखिवाहन ।।** इति

विशेषवचनबलेन होमसामान्यवाचकस्यापि होमपदस्य अग्निहोत्रादिरूपहोम-विशेषपरत्वसम्भवेन वैश्वदेवहोमपरत्वाभाव इति वाच्यम् । एकादशीवैश्वदेवहोमस्य द्वादश्यां निषेधकाभावेन सामान्यवाचकस्य होमपदस्य विशेषपरत्वकल्पनासम्भवात्। अनुक्तेरदोषत्वात् । अन्यथा सामान्यवाचकस्य होमपदस्य विशेषपरत्वकल्पनायां एकादश्यां प्राप्तनक्षत्रेष्टेरपि द्वादश्यामकर्तव्यातापातात् । तद्विधायकाभावात् । न च अग्निहोत्रपदं श्रौतकर्मोपलक्षणमित्यङ्गीकारे नक्षत्रेष्टेः द्वादश्यां कर्तव्यतासिद्धिरिति वाच्यम् । तर्हि औपासनपदस्यापि स्मार्तकर्मोपलक्षकत्वसम्भवेन पञ्चमहायज्ञादेरपि द्वादश्यामनुष्ठानस्यापरिहार्यत्वात् । किञ्च-

**सूतकादौ यथा श्राद्धं सूतकान्ते विधीयते ।**
**तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ।।**

इत्यादौ श्राद्धसामान्यवाचकस्य श्राद्धपदस्यापि-

**एकादश्यां प्राप्तवत्यां मातापित्रोः मृतेऽहनि ।**
**द्वादश्यां तत्प्रदातव्यं नोपवासदिने क्वचित् ।।**

इत्यादिविशेषवचनबलेन मातापितृश्राद्धरूपविशेषपरत्वसम्भवेन एकादश्यां प्राप्तभार्याभ्रातृपुत्रादिश्राद्धस्य द्वादश्यामकर्तव्यतापातात् । तथा मृतेऽहनीति विशेषोक्त्या सांवत्सरिकश्राद्धविशेषपरत्वापत्त्या एकादश्यां प्राप्तसंक्रान्तिमन्वादि-व्यतीपातादिश्राद्धानामपि द्वादश्यामकर्तव्यतापातात् । न चैतत्सम्भवति । तस्मात्तिथिसामान्यवाक्यप्राप्तस्य सम्बन्धिविशेषवचनबाधितस्य नित्यहोमादेः कस्यामपि एकादश्यां क्रियमाणस्य अप्रामाणिकस्य एकादशीप्रयुक्तस्या-सम्भवेनात्यन्ताभावप्रतियोगिनः सर्वथा अननुष्ठानमेव इत्यङ्गीकर्तव्यम् ।

**एकादश्यां न भुञ्जीत न सुराञ्च पिबेत् क्वचित् ।**
**ब्राह्मणो नैव हन्तव्य इत्येषा वैदिकी श्रुतिः ।।**

इत्युक्तैकादशीभोजनं सुरापानादिवदिति ।

ननु तर्हि एकादशीनक्षत्रेष्टेरपि द्वादश्यामकर्तव्यतापातः । प्रत्यहमेकैक-नक्षत्रसम्बन्धिनीषु इष्टिषु प्रवर्तमानासु मध्ये एकादशीप्राप्तौ तत्र प्राप्तनक्षत्रेष्टेरपि होमत्वाविशेषात् इति चेत्, नक्षत्रेष्टेः नक्षत्रनिमित्तत्वेन एकादशीसम्बन्धित्वाभावात्। तस्याश्चेष्टेः एकादशीत्वरूपप्रतिबन्धके सति तन्नक्षत्राभावेऽपि द्वादश्यामनुष्ठान-सम्भवात् । प्रतिपदिष्ट्यादेः भार्यारजस्वलात्वरूपप्रतिबन्धके सति तदानीमकृतायाः प्रतिपत्तिथित्वाभावेऽपि तिथ्यन्तरे अनुष्ठानवत् । यथा वा द्वादशीप्रातराहुतेः हरिवासर-रूपप्रतिबन्धके सति तदत्यये प्रातःकालाभावेऽपि अनुष्ठानम् । उक्तञ्च वाराहे-

**प्रातःकाले तु द्वादश्यां यदा स्याद्धरिवासरः ।**
**तदा कुर्वीत होमादि व्यतीते हरिवासरे ।**
**तर्पणं श्राद्धहोमादि नित्यं नैमित्तिकं तथा ।।** इति

यद्वा नक्षत्रेष्टेः मासविशेषनियमाभावेन यस्मिन् मासे दशम्यां द्वादश्यां वा नक्षत्रद्वयं संयुक्तं तस्मिन्मासे द्विनक्षत्रायां द्वादश्यां दशम्यां वा नक्षत्रद्वयेष्टिसम्भवेन कर्तव्यतेति ज्ञेयम् । नन्वेवं चेत्-

**एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।**
**न श्राद्धहोमौ कुर्वीत देवादीन्नतु तर्पयेत् ।।** इत्युक्तेः

एकादशीहोमवत् एकादशीश्राद्धस्यापि द्वादश्यामकर्तव्यतापातः इति चेन्न । इष्टापत्तेः । नच एकादशीश्राद्धस्य द्वादश्यामनुष्ठानप्रतिपादकेन ''तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत्'' इत्यादिवचनेन विरोधः, भावानवबोधात् । तथाहि श्राद्धं द्विविधम्, नित्यं नैमित्तिकं च, तत्र

**एकं तु भोजयेद्विप्रं पितॄनुद्दिश्य सत्तमः ।**
**नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ।।**

इति वचनोक्तप्रकारेण नित्यं क्रियमाणं नित्यश्राद्धम् । प्रतिसांवत्सरिकश्राद्धं नैमित्तिकं प्रसिद्धमेव । होमो द्विविधः, नित्यो नैमित्तिकश्च, तत्र औपासनादिः

नित्यः, वृषोत्सर्गाहुत्यादिः नैमित्तिकः । तथाच नित्यहोमवत् नित्यश्राद्धस्यैव निषेद्धयत्वेन नैमित्तिकस्यैव श्राद्धस्य द्वादश्यां वृषोत्सर्गाहुतिवत् विधीयमानत्वेन विरोधाभावादिति । नैमित्तिकस्य कर्तव्यत्वे तु-

**एकादश्यां यदा ब्रह्मन् ब्राह्मणो म्रियते यदि ।**
**प्रेताहुतिर्न दातव्या न पिण्डं न तिलोदकम् ।।**
**द्वादश्यां सकलं कार्यं विधिरेषः सनातनः ।।**

इत्यादीनि वचनानि, तथा एकादश्यां प्राप्तैकादशाहत्वेन प्राप्तोत्सर्गहोम-प्रतिपादकानि वचनानि द्रष्टव्यानि । तस्मात् ''एकादश्यां श्राद्धहोमौ द्वादश्यामेव कारयेत्'' इत्यादीनि होमसामान्यविधायकवाक्यानि नैमित्तिकहोमपरत्वेन व्याख्येयानि । यत्तु ''नाग्निहोत्रं न च श्राद्धं न चौपासनमेव च'' इत्याद्यग्नि-होत्रादिरूपहोमविशेषप्रतिपादकम् । तत्तु साग्निकस्य एकादशीमरणे सति मरणदिनकर्तव्यतया एकदश्यां प्राप्तशेषहोमनवश्राद्धादिकं एकदश्यां न कर्तव्यम्, किन्तु द्वादश्यां कर्तव्यम् । मरणदिनातिक्रमणदोषो नास्तीत्यर्थत्वेन व्याख्येयम् ।

**दर्शमारभ्य शुक्लेऽस्य मृतस्यौपासनाहुतीः ।**
**चतुश्चतुस्तिलैः सद्यो जुहुयात्तद्दिनावधिम् ।।**

**कृष्णे मृताहमारभ्य दर्शावधि तदाहुताः ।**
**हुत्वास्य पूर्ववत्कर्ता दहेदौपासनाग्निना ।।**

इत्यादौ कर्तव्यत्वेन मरणदिनमारभ्य अमावास्यापर्यन्तं औपासनादिशेषाहुतेः उक्तत्वात् ।

**कृष्णपक्षे प्रमीयेत यदह्नि प्रातराहुतीः ।**
**शेषास्तु जुहुयाद्दर्शपर्यन्ताः पक्षहोमवत् ।**
**तदानीमेव जुहुयात्सायङ्कालाहुतीरपि ।।**

इत्यादि निर्णयसिन्धौ च । यच्च-

**दशम्यामाहुती द्वे च एकादश्यामनाहुतिः ।**
**द्वादश्यामाहुतेः षट्कं पूर्वमौपासनं भवेत् ।।** इति

तुरीयं पादं 'समस्यौपासनं भवेत्' इति च पठन्ति । तत्तु अद्य सायं श्वः प्रातरिति प्रत्यहं समस्यहोमकर्तुः दशम्यां कथमिति शङ्कायां दशम्यां सायमाहुतिद्वयमेव । एकादश्यां होमाभावेनाद्य सायं श्वः प्रातरिति सङ्कल्पायोगेन समस्यासम्भवात् । द्वादश्यां तु प्रातराहुतिद्वयमेव सायं तु प्रत्यहमिव समस्यौपासने आहुतिचतुष्टयम् । एवं द्वादश्यां आहुतिषट्कमिति समस्यौपासनानुष्ठानपरत्वेन वस्तुस्थितिकथनपरम् । अर्थान्तरस्य असम्भवात् । अन्यथा 'दशम्यामाहुती द्वे च' इत्यस्य प्रकृतानुपयोगात्। द्वादश्यां प्रातराहुतिषट्कमिति विशेषाभावाच्च । औपासनस्य सायंप्रातराहुतिचतुष्टया-त्मकस्यैककर्मत्वात् । दशमीकर्मशेषस्य एकादशीप्रातराहुतिद्वयस्य द्वादश्यां प्रातः एकादश्याहुतिचतुष्टयेन सहानुष्ठानायोगाच्च । अन्यकर्मशेषस्य अन्यकर्मणि प्रवेशा-योगात् । दशम्यामेव प्रतिदिनमिव एकादशीप्रातराहुतिद्वयेन सह समस्यहोमे बाधकाभावेन निर्निमित्तद्वादश्यामनुष्ठानायोगात्, प्रातः समस्यस्याविहितत्वाच्च । सायङ्काले एव समस्यमिति नियमभङ्गाच्च । एकादशीहोमस्य अप्रामाणिकस्य द्वादश्यामनुष्ठानायोगाच्च । उपवासद्वये प्राप्ते द्वादश्यामाहुतिदशकस्य प्राप्त्याऽहुतिषट्कमिति विशेषानुपपत्तेश्च । तस्मात् एकादशीहोमः सर्वथा नास्तीति सिद्धः ।।

ननु एकादशीहोमस्य सर्वथाऽभावेन अननुष्ठाने 'तस्य वा एतस्य अग्निहोत्रस्य सप्त च शतानि विंशातिश्च संवत्सरे सायमाहुतयः सप्त च एव शतानि विंशतिश्च संवत्सरे प्रातराहुतयः' इति श्रुतिविरोधात्, तस्यां हि श्रुतौ संवत्सराहुतिसङ्ख्या-नियमस्योक्तत्वात्, अत्र च एकादश्यादिहोमस्य सर्वथा निषेधेन उक्तसङ्ख्यानियम-भङ्गात्, जन्माष्टमीसहितचतुर्विंशत्येकादशीहोमानां श्रवणद्वादश्यतिरिक्तद्वादश्योः प्राप्तयोः ततोऽधिकानाञ्चाभावात्, तथाच श्रुत्युक्तसङ्ख्यानियमान्यथानुपपत्त्यैव एकादशीहोमः सिद्ध इति चेन्न । सावनसंवत्सरेण सङ्ख्यानियमस्योपपत्तेः । तथाहि मासभेदस्तु ब्रह्मसिद्धान्ते उक्तः-

> **चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।**
> **एकरात्रौ रविर्यावत्कालं मासः सभास्करः ।।** इति

एतन्मासभेदेन संवत्सरभेदोऽपि तत्रैवोक्तः-

> **चान्द्रसावनसौराणां मासानां तु प्रभेदतः ।**
> **चान्द्रसावनसौरास्तु त्रयः संवत्सरा अमी ।।** इति

अश्विन्यादिरेवत्यन्तनक्षत्रपरिवर्तनेन नाक्षत्रो मास इति नाक्षत्रमासोऽपि अन्य उक्तः विष्णुधर्मोत्तरे 'सर्वर्क्षपरिवर्तैस्तु नाक्षत्रो मास उच्यते' इति । बृहस्पतेः राशेः राश्यन्तरगमनं एकराशिस्थितत्वरूपः बार्हस्पत्यः संवत्सरोऽपि अन्यो ज्ञेयः । एवञ्च पञ्चधा संवत्सरः । तदुक्तं तृतीयस्कन्धभागवततात्पर्ये ब्रह्मतर्के-

**इडावत्सरनामाऽसौ नक्षत्रद्वादशे स्थितः ।**
**तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः ।।**

**वत्सरो यः स्थितस्त्वह्नां षष्ठ्युत्तरशतत्रये ।**
**गुर्वावृत्तद्वादशांशे यः स्थः स परिवत्सरः ।।**
**सौरद्वादशके मासे यः स्थः संवत्सरो हरिः ।।** इति

अस्यार्थः, नक्षत्रद्वादशे अश्विन्यादिरेवत्यन्तसप्तविंशतिनक्षत्राणां द्वादशवारं परिभ्रमणवति काले इडावत्सरनामके तन्नामा हरिः नियन्तृत्वेन स्थित इत्यनेन नाक्षत्रः संवत्सर उक्तः । तिथीनां द्वादशावर्ते प्रतिपदादिदर्शान्तानां द्वादशवारं आवृत्तिमत्काले स्थितः अनुवत्सर इत्यनेन चान्द्रः । अह्नां षष्ठ्युत्तरशतत्रये यां काञ्चन तिथिमारभ्य गणितानां तिथीनां षष्ठ्युत्तरशतत्रयात्मककाले वत्सरनामा इत्यनेन सावनः । गुर्वावृत्तद्वादशांशे गुरोः आवृत्ताः द्वादश यस्मिन्काले स गुर्वावृत्तः द्वादश द्वादशराश्यात्मकः कालः तस्यांशे भागे बृहस्पत्यधिकरणकैकराशौ इति यावत् । अनेन बार्हस्पत्यः उक्तः । सौरद्वादशके मासे द्वादशसूर्यसंक्रान्त्यात्मककालः इत्यनेन सौरवत्सर उक्तः । अत्र प्रमाणे वर्षक्रमस्तु उत्तरोत्तराधिक्यात् । तत्र चतुर्विंशत्यधिकशतत्रयसङ्ख्याकदिवसपरिमितः कालः नाक्षत्रः । चतुःपञ्चाशदधिक-शतत्रयदिनपरिमितः चान्द्रः । षष्ठ्युत्तरशतत्रयपरिमितः सावनः । एकषष्ठ्यधिक-शतत्रयपरिमितः बार्हस्पत्यः । पञ्चषष्ठ्युत्तरशतत्रयपरिमितः सौरः इति । इदं तु आयुर्वेदाभिज्ञानां सुगममेव । एवञ्च सङ्ख्यानियमे श्रुत्युक्तसंवत्सरपदेन चान्द्रादयो अब्दा गृहीतुं न शक्यन्ते । तेषु तिथीनां न्यूनाधिकत्वात् । चान्द्रे तु मलमासे सति आधिक्यात्, षष्ठ्युत्तरशतत्रयात्मकत्वाभावेन श्रुत्युक्तसंख्यानियमालाभात् । सावनस्तु गृहीतं शक्यते । श्रौतसंवत्सरपदेन तत्र तिथीनां परिगणनायां त्रिंशद्धोमाधिकरणास्तिथयो यदा भवन्ति तदा एको मासः सम्पद्यते । सेवावृत्तिषु भृत्येषु वेतनदाने मध्ये प्राप्ताकृतकर्मतिथिपरित्यागेन कृतकर्मतिथीनामेव परिगणनया त्रिंशत्तिथिरूपमाससम्पादनवत् । तादृशाश्च ते मासद्वादश यदा भवन्ति तदा

षष्ठ्युत्तरशतत्रयतिथिपरिमितः सावनः संवत्सरः सन्तिष्ठते । तस्मिन्नेकस्मिन् सावनसंवत्सरे श्रुत्युक्तसङ्ख्यानियमो लभ्यते । नच तिथिविशेषग्रहणे सङ्ख्यापूर्तौ लक्षणा । एकादशीहोमस्य शशविषाणायितत्वस्य समर्थितत्वेन तिथिसामान्यग्रहण-सम्भवात् । मुख्यासम्भवेऽमुख्यस्य न्याय्यत्वात् । न च सावनग्रहणे प्रमाणाभावः शङ्क्यः । अन्यथानुपपत्तिरेव प्रमाणम् ।

**सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।**
**प्रत्यब्दे पितृकार्ये च चान्द्रो मासः प्रशस्यते ।।**

इति निर्णयसिन्धौ ज्योतिर्गर्गवचनाच्च । अग्निहोत्रादेरपि यज्ञत्वात् "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः" इत्येतस्यौपनिषदि अग्निहोत्रस्यापि यज्ञत्वोक्तेः, तस्मादेकादशीहोमस्य अत्यन्ताभावप्रतियोगित्वात् सर्वथा अकरणमेवेति सिद्धम् ।।

## अथ द्वादशीनिर्णयः

द्वादश्यां व्रतनिवेदनमन्त्र उक्तो नारदीये-

**अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।**
**प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।।** इति

पारणाविषये कालनियम उक्तो माधवीये -

**कलाद्वयं त्रयं वाऽपि द्वादशीं न त्वतिक्रमेत् ।**
**पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।।** इति

**वाराहे च, धरण्युवाच-**

**यदि स्याद् द्वादशी स्वल्पा नित्यकर्म कथं भवेत् ।**
**होमश्च वैश्वदेवश्च कदा कार्यो वदस्व तत् ।।**

**वराह उवाच-**

**त्रयो भागास्त्रियामायाः तत्रोभौ सन्त्यजेद् बुधः ।**
**भागे तृतीये स्नात्वा तु नित्यकर्माणि कारयेत् ।।**

आमध्याह्नानि कर्माणि रात्रावेव विधाय च ।
स्वल्पायामथ भद्रायां पारणं रविदर्शने ।।

यदा सूर्योदयात्पूर्वं घटिकैकाऽवशिष्यते ।
स वै सूर्योदयो नाम मुनिभिः परिकीर्तितः ।।

तत्पूर्वं घटिकैका तु प्रातःकाल इतीरितः ।
माध्याह्निकं तदा कुर्यात् होमं सूर्योदये तथा ।।

वैश्वदेवं ततः कृत्वा ब्रह्मयज्ञश्च तर्पणम् ।
आपोशनं विधायैव प्रतीक्षेद्रविदर्शनम् ।।

अरुणोदयतः पूर्वं कृतं स्नानं वृथा भवेत् ।
यतः पर्युषितं तत्स्यात्साधनद्वादशीं विना ।।
साधनीयाऽतियत्नेन यतः सा साधनी मता ।।

स्वल्पायां यदि द्वादश्यां पारणं विदधाति यः ।
व्रतं पूर्णं भवेत्तस्य व्रतलोपोऽन्यथा भवेत् ।।

स्कान्दे च–

यदा भवेदतीवाऽल्पा द्वादशी पारणादिने ।
उषःकाले द्वयं कुर्यात् प्रातर्माध्याह्निके च तत् ।।

नारदीये–

अल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये ।
स्नानार्चनक्रियाः कार्या दानहोमादिसंयुताः ।।

आदिपदेन श्राद्धसंग्रहः । अत्र होमादिशब्देन स्मार्तमेव कर्म ग्राह्यम् । नतु श्रौतं अग्निहोत्रादि । स्मृत्या श्रौतकालबाधायोगादित्याहुः । उदयात्पूर्वघटिकावच्छिन्न-कालस्यापि सूर्योदयशब्दवाच्यत्त्वस्योक्तत्वात् । तत्र अग्निहोत्रहोमसम्भवेन पूर्वघटिकावच्छिन्नकालस्यापि सूर्योदयशब्दवाच्यत्वस्योक्तत्वात् । तत्र अग्निहोत्रहोम-सम्भवेन ''उदिते जुहोति'' इति श्रौतकालबाधाभावात् । श्रौतमपि कर्म ग्राह्यमिति केचिदाहुः ।

**स्वल्पायामपि द्वादश्यां पितुः श्राद्धं भवेद्यदि ।**
**द्वादश्यां ब्राह्मणान् पूर्वं भोजयित्त्वा फलं लभेत् ।।**

**न तस्य फलहानिः स्याद्भुञ्जानोऽपि ततः परम् ।**
**पत्नी पतिव्रता या स्यात्पराधीनोऽपि यो नरः ।।**

**स तीर्थपारणं कृत्त्वा पश्चाद्भुक्त्वा फलं लभेत् ।**
**अशितानशिता आपो व्रतपूर्त्यै बुधैः स्मृताः ।।**

माधवीयेऽपि–

**सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।**
**अद्भिस्तु पारणं कुर्यात् पुनर्भुक्ते न दोषभाक् ।।**

**अम्भसा केवलेनैव करिष्ये व्रतपारणम् ।**
**तच्छ्रेष्ठं मुनिभिः प्रोक्तं अशितानशितं च यत् ।।**

**पारयित्वोदकेनाऽपि भुञ्जानो नैव दुष्यति ।**
**अशिरस्कन्तु यत्स्नानं पर्युषितस्य च भोजनम् ।**
**द्वादश्युल्लङ्घनं स्त्रीणां नैव दोषाय कल्पते ।।**

अत्र केचित्, यदि भूयसी द्वादशी तदाऽपि प्रातरेव मुहूर्तत्रयेण पारणं कार्यम्,

**सर्वेषामुपवासानां प्रातरेव हि पारणम् ।**
**धारणे पारणे प्राप्ते स्वेच्छया पारणं भवेत् ।।**

इति वचनादित्याहुः । शिष्टास्तु बहूनां कर्मकालानां विनाकारणं बाधापत्तेः नायं नियमः प्रातःशब्दस्य "सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्" इत्यादाविव प्रातशब्दस्य दिवापरत्वेऽप्युपपत्तेः । नच वाक्यवैय्यर्थ्यम् । पुनर्भोजनसायंपारण-निवृत्यर्थत्त्वात् तस्येत्याहुः । द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कारयेत् ।

**द्वादश्याः प्रथमः पादः हरिवासरसंज्ञितः ।**
**तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः ।।**

इति निर्णयामृतोक्तेः, नारदीये च–

द्वादश्या आद्यपादस्तु कीर्तितो हरिवासरः ।
न तत्र पारणं कुर्याद्विधिरेषः सनातनः ।
महादोषकरं चान्नं सम्प्राप्ते हरिवासरे ।। इति

वाराहे च-

प्रातःकाले तु द्वादश्यां यदा स्याद्धरिवासरः ।
तदा कुर्वीत होमादि व्यतीते हरिवासरे ।।

तर्पणं श्राद्धहोमादि नित्यं नैमित्तिकं तथा ।
कुर्वीत जलपानादि व्यतीते हरिवासरे ।। इति

उपरागसहस्राणि व्यतीपातायुतानि च ।
अमालक्षं तु द्वादश्याः कलां नार्हन्ति षोडशीम् ।। इति

।। इति द्वादशीनिर्णयः ।।

अथ पौर्णमासी अमावास्या च उपवासादौ ग्राह्या ।

भूतविद्धे न कर्तव्ये दर्शपूर्णे कदाचन ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ।। इति ब्रह्मवैवर्तात् ।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ।। इति स्मृतेश्च

## अथ इष्टिकालः

सा च पर्वप्रतिपत्सन्धौ कर्तव्या । तत्रातिसूक्ष्मतरे सन्धौ यागानुष्ठानस्याशक्यत्वात् पूर्वदिने पर्वणि आरम्भः । उत्तरदिने च प्रतिपदि यागसमाप्तिः । तत्र पर्वप्रतिपदोः सम्पूर्णत्वे सन्देह एव नास्ति । खण्डत्वे तु तयोर्निर्णयमाह गोभिलः-

आवर्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ।।

पर्वप्रतिपदोःसन्धिः अर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ।।

**स्वल्पायामपि द्वादश्यां पितुः श्राद्धं भवेद्यदि ।**
**द्वादश्यां ब्राह्मणान् पूर्वं भोजयित्वा फलं लभेत् ।।**

**न तस्य फलहानिः स्याद्भुञ्जानोऽपि ततः परम् ।**
**पत्नी पतिव्रता या स्यात्पराधीनोऽपि यो नरः ।।**

**स तीर्थपारणं कृत्वा पश्चाद्भुक्त्वा फलं लभेत् ।**
**अशितानशिता आपो व्रतपूर्त्यै बुधैः स्मृताः ।।**

माधवीयेऽपि-

**सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।**
**अद्भिस्तु पारणं कुर्यात् पुनर्भुक्ते न दोषभाक् ।।**

**अम्भसा केवलेनैव करिष्ये व्रतपारणम् ।**
**तच्छ्रेष्ठं मुनिभिः प्रोक्तं अशितानशितं च यत् ।।**

**पारयित्वोदकेनाऽपि भुञ्जानो नैव दुष्यति ।**
**अशिरस्कन्तु यत्स्नानं पर्युषितस्य च भोजनम् ।**
**द्वादश्युल्लङ्घनं स्त्रीणां नैव दोषाय कल्पते ।।**

अत्र केचित्, यदि भूयसी द्वादशी तदाऽपि प्रातरेव मुहूर्तत्रयेण पारणं कार्यम्,

**सर्वेषामुपवासानां प्रातरेव हि पारणम् ।**
**धारणे पारणे प्राप्ते स्वेच्छया पारणं भवेत् ।।**

इति वचनादित्याहुः । शिष्टास्तु बहूनां कर्मकालानां विनाकारणं बाधापत्तेः नायं नियमः प्रातःशब्दस्य "सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्" इत्यादाविव प्रातशब्दस्य दिवापरत्वेऽप्युपपत्तेः । नच वाक्यवैय्यर्थ्यम् । पुनर्भोजनसायंपारण-निवृत्यर्थत्त्वात् तस्येत्याहुः । द्वादश्यां च प्रथमपादमतिक्रम्य पारणं कारयेत् ।

**द्वादश्याः प्रथमः पादः हरिवासरसंज्ञितः ।**
**तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः ।।**

इति निर्णयामृतोक्तेः, नारदीये च-

**द्वादश्या आद्यपादस्तु कीर्तितो हरिवासरः ।**
**न तत्र पारणं कुर्याद्विधिरेषः सनातनः ।**
**महादोषकरं चान्नं सम्प्राप्ते हरिवासरे ।।** इति

**वाराहे च–**

**प्रातःकाले तु द्वादश्यां यदा स्याद्धरिवासरः ।**
**तदा कुर्वीत होमादि व्यतीते हरिवासरे ।।**

**तर्पणं श्राद्धहोमादि नित्यं नैमित्तिकं तथा ।**
**कुर्वीत जलपानादि व्यतीते हरिवासरे ।।** इति

**उपरागसहस्राणि व्यतीपातायुतानि च ।**
**अमालक्षं तु द्वादश्याः कलां नार्हन्ति षोडशीम् ।।** इति

**।। इति द्वादशीनिर्णयः ।।**

अथ पौर्णमासी अमावास्या च उपवासादौ ग्राह्या ।

**भूतविद्धे न कर्तव्ये दर्शपूर्णे कदाचन ।**
**वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ।।** इति ब्रह्मवैवर्तात् ।

**अमावास्या तृतीया च ता उपोष्याः परान्विताः ।।** इति स्मृतेश्च

## अथ इष्टिकालः

सा च पर्वप्रतिपत्सन्धौ कर्तव्या । तत्रातिसूक्ष्मतरे सन्धौ यागानुष्ठानस्याशक्यत्वात् पूर्वदिने पर्वणि आरम्भः । उत्तरदिने च प्रतिपदि यागसमाप्तिः । तत्र पर्वप्रतिपदोः सम्पूर्णत्वे सन्देह एव नास्ति । खण्डत्वे तु तयोर्निर्णयमाह गोभिलः–

**आवर्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।**
**तदहर्याग इष्येत परतश्चेत्परेऽहनि ।।**

**पर्वप्रतिपदोःसन्धिः अर्वागावर्तनाद्यदि ।**
**तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ।।**

**आवर्तनात्परः सन्धिः यदि तस्मिन्नुपक्रमः ।**
**परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः ।।** इति

**आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ।**
**मध्याह्नस्तु तयोः सन्धिः यदावर्तनमुच्यते ।।**

इति मदनरत्नवचनात् आवर्तनं दिनमध्यम् । ततश्चायं निर्गलितोऽर्थः । मध्याह्ने वा ततः पूर्वं वा पर्वप्रतिपदोः सन्धिः यस्मिन् दिने तस्मिन् दिने यागः पूर्वेद्युरन्वाधानं मध्याह्नात्परतश्चेत् पर्वप्रतिपदोः सन्धिः तर्हि तस्मिन्दिने अन्वाधानं परेद्युः यागः इति अत्र चतुर्दश्यामन्वाधानं सन्धिदिने च यागः, आदित्येऽस्तमिते चतुर्दश्युत्तरं पर्वापेक्षया यावती प्रतिपदो वृद्धिः क्षयो वा, तदर्धमानेन पर्वणो ह्रासं वृद्धिं वा कल्पयित्वा सन्धिर्निर्णयः । तथाच कात्यायनः-

**परेऽह्नि घटिकान्यूनास्तथैवाभ्यधिकाश्च याः ।**
**तदर्थक्लृप्त्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ।।** इति

**तिथेः परस्ताद्घटिकास्तु या स्यु-**
**र्न्यूनास्तथा चाभ्यधिकास्तु तासाम् ।**
**अर्धं वियोज्यं च तथा प्रयोज्यं**
**ह्रासे च वृद्धौ प्रथमे दिने तत् ।।** इत्यादेश्च

**माधवः-**

**वृद्धिः प्रतिपदो याऽस्ति तदर्धं पर्वणि क्षिपेत् ।**
**क्षयस्यार्धं तथा क्षिप्त्वा सन्धिर्निर्णीयतां सदा ।।**

इति केचित् । यदि चतुर्दशी दशघटिका, पर्व च पञ्चदशघटिका, प्रतिपत्तु एकोनविंशघटिका तदा प्रतिपद्वृद्धेरर्धं घटिकाद्वयं पर्वान्ते प्रक्षिपन्ति । एवं चतुर्दशी पञ्चविंशतिघटिका, पर्व एकोनविंशद्घटिका, प्रतिपत् चतुर्दशघटिका तदा प्रतिपदा सार्धं सार्धघटिकाद्वयं पर्वान्ते पक्षिपन्ति । यदा प्रतिपद्दिनं पञ्चधा विभक्तदिनचतुर्थभागरूपापराह्णव्यापिद्वितीयाप्रवेशेन चन्द्रदर्शनं तदा चतुर्दश्यामन्वाधानं सन्धिदिने च यागः ।

**आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदयाद्यदि ।**
**प्रतिपद्युपपत्तिः स्यात् पञ्चदश्यां यजेत्तदा ।।**

इति वृद्धवसिष्ठोक्तेः । अस्तमिते अत्यासन्ने ।

**त्रिमूहूर्ता द्वितीया चेत् प्रतिपद्यापराह्निकी ।**
**अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ।।** इति

ततश्च दिनमध्ये यदा कदाचित् सन्धौ परदिने पञ्चधा विभक्तदिनचतुर्थभाग-रूपसकलापराह्णव्यापिद्वितीयासत्त्वे चतुर्दश्यामन्वाधानं, सन्धिदिने च याग इति निर्णयः । इष्टिसमाप्तिश्च प्रतिपन्मध्य एव, न पर्वमध्ये ।

**प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।**
**पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ।।**

इत्युक्तेरिति । पौर्णमास्यां सद्यस्कालतामाह कात्यायनः-

**सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ।**
**सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ।।** इति

**यागान्वाधानयोर्मध्ये ग्रहणं स्याद्यदा तदा ।**
**उदुत्यमुद्वये चित्रं हुत्वाऽज्येन समापयेत् ।।**

चन्द्रग्रहे तु ''नवो नवो'' ''अयमादित्य'' इति मन्त्रद्वयेन जुहुयात् । तत्र इष्टिस्थालीपाकौ आधानगृहप्रवेशनीयहोमानन्तरभाविन्यां पौर्णिमास्यां प्रारम्भणीयौ। न तु दर्शे । तत्रारम्भे यदि मलमासादिस्तदा नारम्भः कार्यः । तथाचाह त्रिकाण्ड-मण्डनः-

**आधानानन्तरं पौर्णमासी चेन्मलमासगा ।**
**तस्यामारम्भणीयादीन्न कुर्वीत कदाचन ।।** इति

**उपरागोऽधिमासश्च यदि प्रथमपर्वणि ।**
**तथा मलिम्लुचे पौष्ये नान्वारम्भणमिष्यते ।।**
**गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा ।।** इति संग्रहाच्च

किन्तु मलमासाद्युत्तरं शुद्धकाले कर्तव्यौ इष्टिस्थालीपाकौ इति प्रकृतीष्टिकालः। विकृतीष्टिकालस्तु, प्रकृतिविकृत्योरेककालसन्निपाते निर्णयमाह कात्यायनः-

**आवर्तनात्प्राग्यदि पर्वसन्धिः**
**कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः ।**
**तदैव यागः परतो यदि स्यात्**
**तस्मिन् विकृत्याः प्रकृतेः परेद्युः ।।** इति

**।। इति विकृतीष्टिकालः ।।**

## अथ श्राद्धामावास्यानिर्णयः

त्रेधाविभक्तस्याह्नः तृतीयभागः योऽपराह्णवाच्यः तत्रैव अमावास्याश्राद्धं कार्यम् । 'पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणाम्' इति श्रुतिः । 'त्रिधांशितदिनस्यान्ते अपराह्णे चरेत्' इति दीपिकायाम् ।

**छन्दोगपरिष्टे च–**

**पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।**
**वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ।।** इति

पिण्डः पिण्डपितृयज्ञः, तमनु आह्रियते क्रियते तत् पिण्डान्वाहार्यकम् । पिण्डपितृयज्ञानन्तरभावीति यावत् । राजनि चन्द्रे क्षीणे अमावास्यायामित्यर्थः ।

**सायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेत् ।**
**राक्षसी नाम सा प्रोक्ता गर्हिता सर्वकर्मसु ।।**

इति यमेन सायाह्नस्य श्राद्धकालत्वनिषेधात् । अर्थात् एकादशद्वादशमुहूर्तयोस्तत्कालत्वं सिद्ध्यति । तत्र दिनद्वये वैषम्येण एकदेशव्याप्तौ स्मृत्यन्तरम् -

**अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् ।**
**तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्मणि ।।**

अधिका ग्राह्येत्यर्थः । दिनद्वयेंऽशतः समव्याप्तौ दिनद्वयेऽपराह्णव्याप्तौ च -

**अमावस्या तु या हि स्यादपराह्णद्वयेऽपि सा ।**
**क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता ।।** इति

दिनद्वये अपराह्णव्याप्त्यभावे –

**अपराह्णद्वयव्यापी यदि दर्शस्तिथिक्षये ।**
**आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ।।** इति

"दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता" इत्युक्तेः । चतुर्दशीयुक्तामावास्या सिनीवाली । उत्तराऽमा कुहूः ।

**सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।**
**स्त्रीभिः शूद्रैः कुहूः कार्या तथा चानग्निकैर्द्विजैः ।।**

इति लौगाक्षिवचनाच्च । अत्र औपासनाग्निरपि साग्निक इति मदनपारिजाते उक्तम् । तेन साग्नीनां निरग्नीनां वा अपराह्णव्यापिन्येव मुख्या । दिनद्वये अपराह्णव्याप्तौ एकदेशेन समव्याप्तौ च तिथिवृद्धौ परैव । तिथिक्षये तु पूर्वैव ग्राह्या । दिनद्वये वैषम्येण एकदेशव्याप्तौ तु यत्रापराह्णकालस्याधिक्यं सा तिथिः ग्राह्या । दिनद्वये अपराह्णस्पर्शाभावे कुतुपकालव्यापिनी ग्राह्या ।

**भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।**
**पित्र्ये कर्मणि विद्वद्भिः ग्राह्या कुतुपकालिकी ।।**

इति वचनादिति माधवः । इदमेव युक्तम् । हेमाद्रिमते तु निरग्न्यादेः कुतपकालव्यापिन्येव मुख्या ।

**अष्टमे भास्करो यस्मान्मन्दीभवति सर्वदा ।**
**तस्मादनन्तफलदः तत्रारम्भो विशिष्यते ।।**

**उर्ध्वं मुहूर्तात्कुतपात् यन्मुहूर्तचतुष्टयम् ।**
**मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ।।** इति मात्स्ये

पूर्वदिन एव परदिन एव वा तद्व्याप्तौ सर्वा ग्राह्या । वैषम्येणांशव्याप्तित्वेऽधिका ग्राह्या । दिनद्वये अशंतः समव्याप्तौ तिथिक्षये वृद्धौ साम्ये च परा । दिनद्वये सम्पूर्णव्याप्तौ तु परैवेति ।

**तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।**
**साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ।।** इति प्रचेतोवचनात् ।

**भूतविद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।**
**पित्र्ये कर्मणि विद्वद्भिः ग्राह्या कुतपकालिकी ।।**

इति बोधायनोक्तेरिति । कुतपस्तु-

**अह्नो मुहूर्ता विज्ञेया दश पञ्च च सर्वदा ।**
**तत्राऽष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ।।** इति मात्स्ये

दर्शे च मासिकवार्षिकादिश्राद्धप्राप्तौ कालादर्शे -

**दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ।**
**नित्यस्य चाब्दिकस्याऽपि दार्शिकाब्दिकयोरपि ।।** इत्युक्त्वा,

**सम्पाते देवताभेदात् श्राद्धयुग्मं समाचरेत् ।**
**निमित्तनियतिश्चाऽत्र पूर्वानुष्ठानकारणम् ।।** इति

**निर्णयदीपेऽपि-**

**नष्टचन्द्रे यदा काले क्षयाहदिवसो भवेत् ।**
**वैश्वदेवं क्षयश्राद्धं कुर्यात्प्राग्दर्शकर्मणः ।।**

अमाश्राद्धं अनुपनीतः भार्याहीनः प्रवासस्थोऽपि कुर्यात् । श्राद्धशूलपाणौ- 'अमावास्याष्टकाकृष्णपञ्चदशी' इत्युपक्रम्य,

**एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।**
**श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ।।**

**भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः ।**
**शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना बुधः ।।** इति मात्स्योक्तेः ।

## अथ पिण्डपितृयज्ञः

स च कात्यायनानां दर्शयागाङ्गं यागदिनात्पूर्वेद्युः कार्यः । नतु नियमेनामायुक्त एवापराह्णे । तैत्तिरीयादीनां तु निर्विगानं सन्धिमत्येवाहोरात्रे पिण्डपितृयज्ञः । आश्वलायनानामपि शेषपर्वणि पिण्डपितृयज्ञः । अत एव -

**मुहूर्तमप्यमावास्या प्रतिपद्यपि चेद्भवेत् ।**
**तद्दत्तमक्षयं पर्व ज्ञेयं शेषं तु पर्ववत् ।।**

इति हेमाद्रिवचनं पितृयज्ञपरमिति प्रयोगपारिजाते । अयञ्च पिण्डपितृयज्ञः स्मार्ताग्निमता सम्पूर्णे दर्शे श्राद्धे व्यतिषङ्गेण कार्यः । व्यतिषङ्गो नाम उभयोः सह अनुष्ठानम् । खण्डपर्वणि तु पूर्वदिने केवलश्राद्धं परदिने च केवलः पिण्डपितृयज्ञः कार्यः । पूर्वदिने च श्राद्धेऽग्नौकरणमेव न पाणिहोमः । आहिताग्निना तु सम्पूर्णे खण्डे वा दर्शे श्रौताग्नौ पृथगेव पितृयज्ञः । न तु दर्शश्राद्धव्यतिषङ्गेणेति ज्ञेयम् ।

सम्पूर्णदर्शे तु विशेषमाह लौगाक्षिः-

**पक्षान्तं कर्म निर्वर्त्य वैश्वदेवञ्च साग्निकः ।**
**पिण्डयज्ञं ततः कुर्यात् ततोऽन्वाहार्यकं बुधः ।।** इति

पक्षान्तं कर्म अन्वाधानम् । अन्वाहार्यकं दर्शश्राद्धम् । अयमेव साग्निकस्य जीवत्पितृकस्य पिण्डपितृयज्ञकालो ज्ञेयः । आहिताग्निः श्रौताग्निमान् अनाहिताग्निः केवलस्मार्ताग्निमानिति सम्प्रदायः ।

पितृपिण्डपितृयज्ञाकरणे प्रायश्चित्तमाह पराशरमाधवीये-

**पितृयज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।**
**भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ।।** इति

अमायां यागविशेषमाह शङ्खः-

**अमावास्या तु सोमेन सप्तमी भानुना तथा ।**
**चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ।**
**चतस्रस्तिथयस्त्वेताः सूर्यग्रहणसन्निभाः ।।**

## अथ ग्रहणम्

**वृद्धगार्ग्यः-**

**पूर्णिमाप्रतिपत्सन्धौ राहुः सम्पूर्णमण्डलम् ।**
**ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरे ।।**

**शङ्खः-** **वापीकूपतटाकेषु गिरिप्रस्रवणेषु च ।**
**नद्यां नदे देवखाते सरसीषु धृताम्बुनि ।**
**उष्णोदकेन वा स्नायाद् ग्रहणे चन्द्रसूर्ययोः ।।**

**मार्कण्डेयः-**

**शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् ।**
**भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ।।**

**ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् ।**
**तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् ।**
**ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिः ।।**

उष्णोदकं आतुरविषयम् ।

**आदित्यकिरणैः पूतं पुनः पूतश्च वह्निना ।**
**अतो व्याध्यातुरः स्नायात् ग्रहणे तूष्णवारिणा ।।** इति व्याघ्रोक्तेः

अत्र रात्रावपि स्नाानाद्याह देवलः-

**यथा स्नानञ्च दानञ्च सूर्यस्य ग्रहणे दिवा ।**
**सोमस्याऽपि तथा रात्रौ स्नानं दानं विधीयते ।।**

ग्रहणे पुण्यकालावधिमाह जाबालिः-

**संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।**
**चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ।।** इति

**वृद्धवासिष्ठः-**

**सूतके मृतके चैव न दोषो राहुदर्शने ।**
**तावदेव भवेच्छुद्धिः यावन्मुक्तिर्न दृश्यते ।।**

अत्र श्राद्धं कार्यमामेन वा, हेम्ना वा ।

**आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।**
**आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वा ।।** इति

अत्र स्नानादौ केवलं ग्रहणमेव निमित्तम् । तच्च ज्ञातमेव । तच्च ज्ञानं शास्त्रीय-मेव । न लौकिकम् । तत्र यस्मिन् यामे चन्द्रग्रहणं तस्मात्पूर्वं प्रहरत्रयं न भुञ्जीत । सूर्यग्रहे तु प्रहरचतुष्टयं न भुञ्जीत ।

**सूर्यग्रहे तु नाश्नीयात्पूर्वयामचतुष्टयम् ।**
**चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ।।** इति माधवीये

**ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः ।**
**भुञ्जीतावर्तनात्पूर्वं प्रथमे प्रथमादधः ।।** इति मार्कण्डेये

अधि ऊर्ध्वम् । ननु चन्द्रग्रहे यामचतुष्टयनिषेध उचितः न तु सूर्यग्रहे, सूर्योदयात्प्राग्भोजनाप्राप्तेः । मैवम् । वचनस्य प्रथमयामे सूर्यग्रहे सति पूर्वेद्युः पूर्वरात्रे भोजननिषेधपरत्वात् । चन्द्रग्रहे विशेषो माधवीये-

**ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्'' इति ।**

द्वयोर्ग्रस्तास्ते तु व्यासः-

**चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः ।**
**अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि ।।** इति

**भृगुरपि-**

**ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।**
**तदा परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ।।** इति

दृष्ट्वेति क्वचित् ।

**मदनरत्ने-**

**सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।**
**तदहर्नैव भोक्तव्यं रात्रावपि कदाचन ।।**

सायंसन्ध्यायां सूर्यस्य ग्रस्तास्ते पूर्वेऽह्नि रात्रौ च न भोक्तव्यम् । प्रातःसन्ध्यायां चन्द्रस्य ग्रस्तास्ते पूर्वरात्रौ उत्तरेऽह्नि च न भोक्तव्यमित्यर्थः । अहोरात्रनिषेधस्तु ग्रस्तास्तविषयो ज्ञेयः । चन्द्रग्रस्तास्ते दिने सन्ध्याहोमादौ न दोषः । तदाह उशनाः-

**ग्रस्ते चास्तङ्गते त्विन्दौ ज्ञात्वा मुक्त्यवधारणम् ।**
**स्नानहोमादिकं कार्यं भुञ्जीतेन्दूदये पुनः ।।**

एतदनाहिताग्निविषयम् । बालवृद्धातुराणां तु ग्रहणयामात्पूर्वं एको यामो निषिद्धः।

**सायाह्ने ग्रहणं चेत्स्यादपराह्ने न भोजनम् ।**
**अपराह्ने न मध्याह्ने सायाह्ने न तु सङ्गवे ।**
**भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भोजनक्रिया ।।** इति मार्कण्डेयोक्तेः

इदं बालादिविषयम् । 'बालवृद्धातुरैर्विना' इति पूर्वोक्तेः । वेधकाले ग्रहणे वा पक्वमन्नं त्याज्यम् ।

**सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।**
**स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ।।** इति हेमाद्रौ ।

शृतं पक्वम् ।

**चतुर्विंशतिमते–**

**सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।**
**सचैलश्च भवेत्स्नानं सूतकान्नञ्च वर्जयेत् ।।** इति

**मेधातिथिः–**

**आरनालं पयस्तक्रं दधिस्नेहाज्यपाचितम् ।**
**मणिकस्थोदकञ्चैव न दुष्येद्राहुसूतके ।।**

**मुक्तावल्याम्–**

**अन्नं पक्वमिह त्याज्यं स्नानं सवसनं ग्रहे ।**
**वारितक्रारनालादि तिलदर्भैर्न दुष्यति ।।**

जले दोषाभावो गाङ्गविषयः । 'ग्रहोषितं जलं पीत्वा पादकृच्छ्रं चरेत्' इति जलस्य दोषोक्तेः चतुर्विंशतिमते । वेधकाले, ग्रहणे भोजने प्रायश्चित्तमुक्तं कात्यायनेन–

**चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति ।**
**तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति ।।**

ग्रहणे उपवासः कार्यः ।

**एकरात्रमुपोष्यैव स्नात्वा दत्वा च शक्तितः ।**
**कञ्चुकादिव सर्पस्य निवृत्तिः पापकोशतः ।।**

इदं पुत्र्यतिरिक्तविषयम् ।

**आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।**
**पारणं चोपवासश्च न कुर्यात्पुत्रवान् गृही ।।**

इति जैमिनिवचनात् । अत्राद्यन्तयोः स्नानं कुर्यात् ।

**ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते ।**
**मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ।।** इति हेमाद्रिवचनात्

"स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम्" इति ब्रह्मवैवर्ते च । मोक्षस्नानम-कुर्वतां दोष उक्तः ।

**मुक्तौ यस्तु न कुर्वीत स्नानं ग्रहणसूतके ।**
**स सूतकी भवेत्तावत् यावत्स्यादपरो ग्रहः ।।**

इदं स्नानममन्त्रकं कार्यमित्युक्तम् । अत्र श्राद्धमाह ऋष्यशृङ्गः-

**सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ।**
**अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदति ।।**

इदञ्च आमेन हेम्ना वा कार्यम् ।

**आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।**
**आमश्राद्धं प्रकुर्वीत हेमश्राद्धं तथाऽपि च ।।**

इति शातातपोक्तेः । अत्र ग्रहणनिमित्तकश्राद्धेनैवामासंक्रान्त्यादिनैमित्तकानां सिद्धिः । 'दार्शिकालभ्ययोरपि' इति कालादर्शोक्तेः । अत्राशौचमध्येऽपि स्नान-श्राद्धादि कार्यमेव ।

अङ्गिराः- **सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने ।**
**स्नात्वा श्राद्धं प्रकुर्वीरन् दानं शाठ्यविवर्जितम् ।।**

रजस्वलायास्तु भार्गवार्चनदीपिकायाम्-

**न सूतकादिदोषोऽस्ति ग्रहे होमजपादिषु ।**
**ग्रस्ते स्नायादुदक्याऽपि तीर्थादुद्धृत्य वारिणा ।।** इति

अत्र-

**स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।**
**पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ।।**

इति मिताक्षरोक्तेः विधिर्ज्ञेयः । ग्रहणे रात्रावपि श्राद्धं कार्यम् ।

**ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।**
**दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते ।।**

इति अपरार्कोक्तेः । ग्रहणदिने वार्षिकश्राद्धप्राप्तौ प्रयोगपारिजाते-

**दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम् ।**
**अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः ।।** इति

अत्र दर्शरविग्रहपितृसुतशब्दाः निदर्शनार्थाः । न्यायसाम्यात् । तेन चन्द्रग्रहणे सपिण्डादिवार्षिकमन्नादिना तद्दिने एव कार्यमिति मदनपारिजाते व्याख्यातम् । ग्रहणे मन्त्रादिकं ग्राह्यमित्युक्तं ज्ञानार्णवे-

**मन्त्राद्यारम्भणं कुर्यात् ग्रहणे चन्द्रसूर्ययोः ।**
**ग्रहणाद्वापि देवेशि कालः सप्तदिनावधि ।।**

तत्रापि सूर्यग्रहणमेव मुख्यम् ।

**सूर्यग्रहणकालेन समो नाऽन्यः कदाचन ।**
**न मासतिथिवारादिशोधनं सूर्यपर्वणि ।।** इति तत्रैवोक्तेः

ग्रहणं जन्मराश्यादौ निषिद्धम्, पृथ्वीचन्द्रोदये-

**सूर्यस्य संक्रमो वाऽपि ग्रहणे चन्द्रसूर्ययोः ।**
**यस्य त्रिजन्मनक्षत्रे तस्य रोगोऽथवा मृतिः ।।**

**तस्य दानं च होमश्च देवार्चनजपौ तथा ।**
**उपरागाभिषेकश्च कुर्यात् शान्तिर्भविष्यति ।।**

**स्वर्णेन वाऽथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् ।**
**ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः ।।**

जन्मनक्षत्रं, तत्पूर्वनक्षत्रं, तदुत्तरनक्षत्रञ्च इति त्रिजन्मनक्षत्रम् । जन्मदशमैकोन-विंशतितारा इति केचित् । सर्पस्य तदाकारस्य राहोरित्यर्थः । ज्योतिःसागरे-

**सौवर्णं कारयेन्नागं पलेनाऽथ पलार्धतः ।**
**तदर्धेन तदर्धेन फणायां मौक्तिकं न्यसेत् ।।**

**ताम्रपात्रे निधायाऽथ घृतपूर्णे विशेषतः ।**
**कांस्ये वा कान्तलोहे वा न्यस्य दद्यात् सदक्षिणम् ।।**

**चन्द्रग्रहे तु रूप्यस्य बिम्बं दद्यात् सदिक्षणम् ।**
**नागं रुक्ममयं सूर्यग्रहे बिम्बं च हेमजम् ।।**

**कालविवेकेऽपि-**

**सुवर्णनिर्मितं नागं सतिलं कांस्यभाजनम् ।**
**सदक्षिणं सवस्त्रञ्च ब्राह्मणाय निवेदयेत् ।।**

**सौवर्णं राजतं वापि बिम्बं कृत्वा स्वशक्तितः ।**
**उपरागभवक्लेशच्छिदे विप्राय कल्पयेत् ।।**

मन्त्रस्तु-

**तमोमय महाभीम सोम सूर्यविमर्दन ।**
**हेमताराप्रदानेन मम शान्तिप्रदो भव ।।**

**विधुन्तुद नमस्तुभ्यं सिंहिकानन्दनाच्युत ।**
**दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ।।** इति

मङ्गलकृत्येषु वेधविशेषो हेमाद्रौ-

**त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।**
**माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ।।**

**प्रकारान्तरञ्च-**

**द्वदश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः ।**
**एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ।।**

इदञ्च पूर्णग्रासे- 'अहं खण्डग्रहे तयोः' इति तत्रैवोक्तेः । पुनश्चरणचन्द्रिकायां-

चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ।
स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्रं समाहितः ।।

जपाद्दशांशतो होमः तथा होमात्तु तर्पणम् ।
तर्पणस्य दशांशेन मार्जनं कथितं किल ।।

तत्रैव देवतारूपं ध्यात्वाऽत्मानं प्रपूज्य च ।
नमोऽन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधाम् ।।

द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ।
तोयैरञ्जलिना शुद्धैरभिषिञ्चेत्स्वमूर्धनि ।।

मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् ।
जपोऽर्चापूर्वको होमस्तर्पणञ्चाभिषेचनम् ।
भूदेवपूजनं पञ्चप्रकारोक्ताः पुरस्त्रियाः ।।

तथा–

होमाशक्तौ जपं कुर्यात् होमसंख्याचतुर्गुणम् ।
एवं कृते तु मन्त्रस्य जायते सिद्धिरुत्तमा ।। इति

अत्र ग्रहणे चाक्षुषज्ञानमेव निमित्तमिति केचित् तन्न । अन्धादेः कदाऽपि ग्रहणस्नानाद्यसम्भवापत्तेः ।

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ।।

इति मनुवचनविरोधाच्च । तस्मात् शास्त्रीयमेव ग्रहणज्ञानं स्नानादौ निमित्तम् । तेन मेघाच्छादनेऽपि अन्धादेश्च स्नानादि भवत्येव इति सिद्धम्

।। इति ग्रहणम् ।।

## अथ अमायां समुद्रस्नानम्

आश्वलायनः–

समुद्रे पर्वसु स्नायादमायाञ्च विशेषतः ।
पापैर्विमुच्यते सर्वैरमायां स्नानमाचरेत् ।।

भारते–

अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
अश्वत्थं मन्दवारे तु सागरं पर्वणि स्पृशेत् ।।

पृथ्वीचन्द्रोदये स्कान्दे–

पुनाति पर्वणि स्नानात्तर्पणैः सरितां पतिः ।
कदाचिदपि नैवाऽत्र स्नानं कुर्यादपर्वणि ।।

अस्यापवादस्तत्रैव–

पर्वकाले च सम्प्राप्ते नदीनाञ्च समागमे ।
सेतुबन्धे तथा सिन्धौ तीर्थेष्वन्येषु संयुते ।।

तथा–

विना मन्त्रं विना पर्व क्षुरकर्म विना नरैः ।
कुशाग्रेणाऽपि देवेशि न स्प्रष्टव्यो महोदधिः ।
न कालनियमस्सेतौ [१]समुद्रस्नानकर्मणि ।।

।। इति सामान्यतिथिनिर्णयः ।।

## अथ चैत्रमासदिगतविशेषतिथिनिर्णयः

चैत्रशुक्लप्रतिपदि वत्सरारम्भः, तत्रौदयिकी ग्राह्या ।

चैत्रे मासि जगद् ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ।। इति ब्राह्मोक्तेः ।

दिनद्वये उदयव्याप्तौ वा अव्याप्तौ वा पूर्वैव ।

---

१ समुद्रस्नानविधिः निर्णयसिन्धौ–

**वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।**
**पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ।।** इति बृहद्वसिष्ठोक्तेः ।

यदा चैत्रो मलमासो भवति । तदा ''शुक्लादेर्मलमासस्य सोऽन्तर्भवति चोत्तरे'' इति वचनादग्रिमवर्षान्तःपातात् । मलमासमारभ्यैव वर्षप्रवृत्तेः शुक्रास्तादाविव मलमास एव वत्सरारम्भः कार्यः । तैलाभ्यङ्गादि कार्यमिति निर्णयसिन्धौ । मयूखे तु यद्यपि वत्सरवसन्तयोः प्रवृत्तिर्जाता । तथापि

**षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः ।**
**पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रियाः ।।**

इति वचनेन पूर्वमासकृत्यस्योत्तरे कर्तव्यतोक्तेः । नवरात्रामनवम्यादिवत् । अतः तैलाभ्यङ्गाद्युत्सवः शुद्ध एव कार्य इति । अत्र तैलाभ्यङ्गो नित्यः ।

**वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।**
**तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ।।** इति

अस्यामेव नवरात्रारम्भः । तत्र परयुतैव ग्राह्या ।

**अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने ।**
**मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता ।।** इति देवीपुराणात् ।

चैत्रशुक्लतृतीयायां गौरीव्रतम् । इयं चतुर्थीयुता ग्राह्या । ''मुहूर्तमात्रसत्वेऽपि दिने गौरीव्रतं परा'' इति माधवोक्तेः ।

**कलाकाष्ठादि वा चैव द्वितीया सम्प्रदृश्यते ।**
**सा तृतीया न कर्तव्या कर्तव्या गणसंयुता ।।**

इति स्कान्दोक्तेः, गणश्चतुर्थी, तथा-

**चतुर्थीसंयुता या च तृतीया च कृतप्रदा ।**
**अवैधव्यकृता स्त्रीणां पुत्रसौभाग्यवर्धिनी ।।**

**इयं मन्वादिरपि-**

**आश्वयुक्शुक्लनवमी द्वादशी कार्तिकी सिता ।**
**तृतीया चैत्रमासस्य सिता भाद्रपदस्य च ।।**

**श्रावणस्याष्टमी कृष्णा पौष्यस्यैकादशी सिता ।**
**सिताषाढस्य दशमी माघमासस्य सप्तमी ।।**

**फाल्गुने चाप्यमावास्या ज्येष्ठे पञ्चदशी सिता ।**
**आषाढी कार्तिकी माघी चैत्री मन्वादयः स्मृताः ।।**

इति संग्रहोक्तेः । एताश्च मन्वादयः शुक्लपक्षस्थाः पूर्वाह्णव्यापिन्यः । कृष्णपक्षस्था अपराह्णव्यापिन्यः ।

**पूर्वाह्णे तु सदा ग्राह्या शुक्ला मनुयुगादयः ।**
**दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः ।।** इति गारुडात् ।

अत्र मन्वादिश्राद्धविचारः अक्षयतृतीयानिर्णये वक्ष्यामः । [1]चैत्रशुक्लतृतीया मत्स्य-जयन्ती । दशावतारजयन्त्यः तत्तदुपासकानां नित्याः । अन्येषां तु काम्याः । कृष्णाष्टम्यां विशेषं वक्ष्यामः । [2]चैत्रशुक्लनवमी रामजयन्ती । इयञ्च मध्याह्नयोगिनी ग्रह्या ।

**चैत्रे शुद्धे तु नवमी पुनर्वसुयुता यदि ।**
**सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ।।**

---

१ तृतीया परविद्धैव कार्या विष्णुपरायणैः ।
तस्मिन्दिने हरिः साक्षान्मत्स्यरूपी बभूव ह ।
मत्स्योत्सवं तत्र कार्यम्.....।। इति पञ्चरात्रागमोक्ततिथिनिर्णयः ।।

२ तथैव नवमी कार्या नात्र कार्या विचारणा ।
घटिका द्वादश यत्र द्वितीयेऽह्नि च दृश्यते ।।
तदा परदिने कार्या पूर्वविद्धा न शस्यते ।
तस्मिन् श्रीरामजननमुत्सवं तत्र कारयेत् ।।
श्रीरामनवमी प्रोक्ता परविद्धा प्रशस्यते ।
घटिका नवभिर्यत्र अधस्थादृश्यते तिथिः ।।
तदा सा पूर्वविद्धा च कार्या रामपरायणैः ।
भक्ष्यादिकैश्च नैवेद्यैः अपूपैर्घृतपाचितैः ।।
षड्रसान्नैः समायुक्तं कृत्वा देवाय भक्तितः ।
भोजयेद्विप्रवर्यांश्च स्वयं भुञ्जीत बान्धवैः ।।
उपोषणं नैव कार्यं श्रीरामजनने सुत ।
वैष्णवैर्भक्तिसंयुक्तैर्जयन्तीः सकलाः शुभाः ।
नोपोष्या विष्णुभक्तैश्च कलौ कृष्णाष्टमीं विना ।।

**वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।**
**पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः ।।** इति बृहद्वसिष्ठोक्तेः ।

यदा चैत्रो मलमासो भवति । तदा ''शुक्लादेर्मलमासस्य सोऽन्तर्भवति चोत्तरे'' इति वचनादग्रिमवर्षान्तःपातात् । मलमासमारभ्यैव वर्षप्रवृत्तेः शुक्रास्तादाविव मलमास एव वत्सरारम्भः कार्यः । तैलाभ्यङ्गादि कार्यमिति निर्णयसिन्धौ । मयूखे तु यद्यपि वत्सरवसन्तयोः प्रवृत्तिर्जाता । तथापि

**षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः ।**
**पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रियाः ।।**

इति वचनेन पूर्वमासकृत्यस्योत्तरे कर्तव्यतोक्तेः । नवरात्ररामनवम्यादिवत् । अतः तैलाभ्यङ्गाद्युत्सवः शुद्ध एव कार्य इति । अत्र तैलाभ्यङ्गो नित्यः ।

**वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।**
**तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ।।** इति

अस्यामेव नवरात्रारम्भः । तत्र परयुतैव ग्राह्या ।

**अमायुक्ता न कर्तव्या प्रतिपच्चण्डिकार्चने ।**
**मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता ।।** इति देवीपुराणात् ।

चैत्रशुक्लतृतीयायां गौरीव्रतम् । इयं चतुर्थीयुता ग्राह्या । ''मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परा'' इति माधवोक्तेः ।

**कलाकाष्ठादि वा चैव द्वितीया सम्प्रदृश्यते ।**
**सा तृतीया न कर्तव्या कर्तव्या गणसंयुता ।।**

इति स्कान्दोक्तेः, गणश्चतुर्थी, तथा–

**चतुर्थीसंयुता या च तृतीया च कृतप्रदा ।**
**अवैधव्यकृता स्त्रीणां पुत्रसौभाग्यवर्धिनी ।।**

**इयं मन्वादिरपि–**

**आश्वयुक्शुक्लनवमी द्वादशी कार्तिकी सिता ।**
**तृतीया चैत्रमासस्य सिता भाद्रपदस्य च ।।**

**श्रावणस्याष्टमी कृष्णा पौष्यस्यैकादशी सिता ।**
**सिताषाढस्य दशमी माघमासस्य सप्तमी ।।**

**फाल्गुणे चाप्यमावास्या ज्येष्ठे पञ्चदशी सिता ।**
**आषाढी कार्तिकी माघी चैत्री मन्वादयः स्मृताः ।।**

इति संग्रहोक्तेः । एताश्च मन्वादयः शुक्लपक्षस्थाः पूर्वाह्णव्यापिन्यः । कृष्णपक्षस्था अपराह्णव्यापिन्यः ।

**पूर्वाह्णे तु सदा ग्राह्या शुक्ला मनुयुगादयः ।**
**दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिकाः ।।** इति गारुडात् ।

अत्र मन्वादिश्राद्धविचारः अक्षयतृतीयानिर्णये वक्ष्यामः । [१]चैत्रशुक्लतृतीया मत्स्य-जयन्ती । दशावतारजयन्त्यः तत्तदुपासकानां नित्याः । अन्येषां तु काम्याः । कृष्णाष्टम्यां विशेषं वक्ष्यामः । [२]चैत्रशुक्लनवमी रामजयन्ती । इयञ्च मध्याह्नयोगिनी ग्रह्या ।

**चैत्रे शुद्धे तु नवमी पुनर्वसुयुता यदि ।**
**सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ।।**

---

१ तृतीया परविद्धैव कार्या विष्णुपरायणैः ।
तस्मिन्दिने हरिः साक्षान्मत्स्यरूपी बभूव ह ।
मत्स्योत्सवं तत्र कार्यम्.....।। इति पञ्चरात्रागमोक्ततिथिनिर्णयः ।।

२ तथैव नवमी कार्या नात्र कार्या विचारणा ।
घटिका द्वादश यत्र द्वितीयेऽह्नि च दृश्यते ।।
तदा परदिने कार्या पूर्वविद्धा न शस्यते ।
तस्मिन् श्रीरामजननमुत्सवं तत्र कारयेत् ।।
श्रीरामनवमी प्रोक्ता परविद्धा प्रशस्यते ।
घटिका नवभिर्यत्र अधस्थाद्दृश्यते तिथिः ।।
तदा सा पूर्वविद्धा च कार्या रामपरायणैः ।
भक्ष्यादिकैश्च नैवेद्यैः अपूपैर्घृतपाचितैः ।।
षड्रसान्नैः समायुक्तं कृत्वा देवाय भक्तितः ।
भोजयेद्विप्रवर्यांश्च स्वयं भुञ्जीत बान्धवैः ।।
उपोषणं नैव कार्यं श्रीरामजनने सुत ।
वैष्णवैर्भक्तिसंयुक्तैर्जयन्तीः सकलाः शुभाः ।
नोपोष्या विष्णुभक्तैश्च कलौ कृष्णाष्टमीं विना ।।

इति अगस्त्यसंहितोक्तेः । पूर्वेद्युरेव मध्याह्नयोगे कर्मकालव्याप्तेः सैव ग्राह्या । दिनद्वये मध्याह्नव्याप्तौ तदभावे वा पूर्वदिने पुनर्वसुयुतामपि त्यक्त्वा परैव कार्या । चैत्रशुक्लैकादश्यां दोलोत्सव उक्तः । ब्राह्मे–

**चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः ।**
**आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवैः ।।**

चैत्रशुक्लद्वादश्यां दमनोत्सवः ।

**द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ।**
**बोधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम् ।।**

इति रामार्चनचन्द्रिकोक्तेः ।

**उर्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् ।**
**चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ।।** इति पाद्मे

इदञ्च मलमासे न कार्यम्, शुक्रास्तादौ तु कार्यमेव । चैत्रपौर्णमी मन्वादिः ।

**।। इति चैत्रमासः ।।**

## अथ वैशाखमासः

**वैशाखे विधिना स्नानं देवनद्यादिके बहिः ।**
**हविष्यं ब्रह्मचर्यञ्च भूशय्यानियमस्थितः ।।**

**व्रतं दानं दमो देवि मधुसूदनपूजनम् ।**
**अपि जन्मसहस्रोत्थं पापं दहति दारुणम् ।।** मदनरत्ने

**प्रपा कार्या च वैशाखे [१]देवालयसमीपतः ।**
**उपानड् व्यजनं छत्रं सूक्ष्मवासांसि चन्दनम् ।।**

**जलपात्राणि देयानि तथा पुष्पगृहाणि च ।**
**पानकानि च चित्राणि द्राक्षारम्भाफलान्यपि ।।** इति

स्नानकाले तीर्थनाम ग्राह्यम्, अज्ञाते विष्णुतीर्थमिति वदेत् ।

---

१ "देवे देया गलन्तिका" । स्क.पु.ब्र.ख.धर्मारण्यखण्डे ७ अ.७४श्लोकः ।

**यदा न ज्ञायते नाम तस्य तीर्थस्य भो द्विजाः ।**
**तत्रेत्युच्चारणं कार्यं विष्णुतीर्थमिदं त्विति ।।**

**तीर्थस्य देवता विष्णुः सर्वत्रापि न संशयः ।।** इति पाद्मे

अत्र च मलमासश्चेदुक्तं सर्वं मासद्वयेऽपि कार्यम् । मासोपावासचान्द्रायणादि तु न मलमासे समापयेदित्युक्तं दीपिकायाम् ।

[१]वैशाखशुक्लद्वितीया कूर्मजयन्ती । [२]वैशाखशुक्लतृतीया अक्षय्यतृतीयोच्यते । सा पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वयेऽपि तद्व्याप्तौ परैव । उक्तञ्च निर्णयामृते -

**वैशाखे शुक्लपक्षे तु तृतीया रोहिणीयुता ।**
**दुर्लभा बुधवारेण सोमेनाऽपि युताऽथवा ।।**
**रोहिणी बुधयुक्ताऽपि पूर्वविद्धा विवर्जिता ।।**

इयं युगादिः । रत्नमालायां-

**माघे पञ्चदशी कृष्णा [३]भाद्रस्य च त्रयोदशी ।**
**तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः ।**
**कार्तिके नवमी शुक्ला माघमासे च पूर्णिमा ।।** इति नारदीये

---

१ "वैशाखपूर्णिमायां सायं कूर्मोत्पत्तिः" इति धर्मसिन्धुः ।
"तत्र वैशाखशुक्लद्वितीया कूर्मजयन्ती" इति स्मृत्यर्थसारः ।
मत्स्योऽभूद्धुतभुग्दिने मधुसिते कूर्मो विधौ माधवे
वाराहो गिरिजासुते नभसि यद्भूते सिते माधवे ।
सिंहो भाद्रपदे सिते हरितिथौ श्रीवामनो माधवे
रामो गौरितिथावतः परमभूद्रामो नवम्यां मधोः ।। इति निर्णयसिन्धौ पुराणसमुच्चयवचनम् ।
पञ्चरात्रागमोक्ततिथिनिर्णये तु ज्येष्ठशुक्लद्वादश्यां कूर्मजयन्ती उक्ता ।
ज्येष्ठशुक्ले तु द्वादश्यां कूर्मरूपधरो हरिः ।
परविद्धैव सा कार्या प्रातःकाले जजान ह ।
तस्मिन्महोत्सवं कार्यं ब्राह्मणान् भोजयेत्ततः ।।
पायसान्नेन यो भक्त्या सर्वपापाद्विमुच्यते ।। इति

२ अक्षय्या सा तिथिः प्रोक्ता अक्षय्यफलदा शुभा ।।
युगादिरिति विख्याता त्रेतायामादिमा तिथिः ।। इति पञ्चरात्रागमोक्ततिथिनिर्णयः

३ नभस्ये ।

चतस्रः युगादयः । मन्वादयः चतुर्दश । अत्र श्राद्धमुक्तं मात्स्ये -

**कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु ।**
**हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत् ।।** इति

**या मन्वाद्या युगाद्याश्च तिथयस्तासु मानवः ।**
**स्नात्वा हुत्वा च दत्वा वा जप्त्वाऽनन्तफलं लभेत् ।।** इति

श्राद्धेऽपि पूर्वाह्णव्यापिनी ग्राह्या ।

**पूर्वाह्णे तु सदा कार्या शुक्ला मनुयुगादयः ।**
**दैवे कर्मणि पित्र्ये च कृष्णे चैवापराह्णिका ।।** इति पाद्मोक्तेः

**द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।**
**शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ।।** इति नारदीये च

'ज्ञेयं पूर्वाह्णव्यापिनी' दिनद्वये पूर्वाह्णव्यापित्वे परैवेति हेमाद्रिमतम् । दिवोदासीये-

**वैशाखस्य तृतीयां यः पूर्वविद्धां करोति वै ।**
**हव्यं देवा न गृह्णन्ति कव्यञ्च पितरस्तथा ।।** इति वचनात्

**सवैधृतिव्यतीपातो युगमन्वादयस्तथा ।**
**सन्मुखा उपवासे स्युः दानादावन्तिमा स्मृताः ।।** इति

दानादाविति श्राद्धसङ्ग्रहः । स्थलान्तरे ''शुक्ले पौर्वाह्णकी ग्राह्या मध्याह्नात् पूर्वमेव'' इत्युक्तम् ।

**यामं दिनद्वये चेत्स्यात् तृतीया माधवे सिता ।**
**पूर्वविद्धा न कर्तव्या श्राद्धं कुर्यात्परेऽहनि ।।** इति

भविष्योत्तरे प्रकारान्तरमुक्तम्-

**मन्वादौ च युगादौ च ह्यष्टकासु तथैव च ।**
**मध्याह्नव्यापिनी ग्राह्या सङ्गवान्तमथापि वा ।।** इति

मन्वादियुगादिश्राद्धं मलमासे सति मासद्वयेऽपि कार्यम् ।

**यौगादिकं मासिकञ्च श्राद्धञ्चाऽपरपक्षिकम् ।**
**मन्वादिकं तैर्थिकञ्च कुर्यान्मासद्वयेऽपि च ।।** इति स्मृतिचन्द्रिकोक्तेः

अत्र पिण्डरहितं श्राद्धं कुर्यात्, तदुक्तं कालादर्शे–

**विषुवायनसंक्रान्तिमन्वादिषु युगादिषु ।**
**विहाय पिण्डनिर्वापं सर्वं श्राद्धं समाचरेत् ।।**

**अयनद्वितये श्राद्धं विषुवद्वितये तथा ।**
**युगादिषु च सर्वासु पिण्डनिर्वापणादृते ।।**

इति पुलस्त्यवचनाच्च । मन्वादिश्राद्धञ्च नित्यम् । श्राद्धमात्रस्य अपराह्णिकत्वं इति निर्णयामृतादिमतम् । इति सर्वयुगादिसर्वमन्वादिनिर्णयः ।।

[१]इयमेव तृतीया परशुरामजयन्ती । सा प्रदोषव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तौ अंशतः समव्याप्तौ च परा । अन्यथा पूर्वैव । वैशाखशुक्लत्रयोदशी वेदव्यासजयन्ती। वैशाखशुक्लचतुर्दशी नरसिंहजयन्ती । सा प्रदोषव्यापिनी ग्राह्या ।

**वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ।**
**[२]अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ।।**

---

१ तस्यां नारायणः साक्षादवतारं चकार ह ।
जयन्ती जामदग्न्यस्य मध्याह्ने जननं भवेत् ।।
तस्मिन् जयन्ती कर्तव्या यथाविभवसारतः ।। इति पञ्चरात्रागमोक्ततिथिनिर्णयः ।

२ चतुर्दशी पूर्वविद्धा कर्तव्या विष्णुतत्परैः ।
प्रदोषव्यापिनी ग्राह्या परविद्धा न शस्यते ।
तस्मिन् दिने हरिः साक्षादवतारं चकार ह ।
नारसिंह इति ख्यातो स्तम्भं निर्भिद्य चासुरम् ।।
सायाह्ने हननं कृत्वा भक्तैः सम्पूजितो हरिः ।
तस्मिन्महोत्सवं कार्यं सायाह्ने पूजयेद्धरिम् ।।
अपूपैः पूजयेद्देवं पानकं दानमाचरेत् ।
नैवेद्यादीन् समार्प्याऽथ ब्राह्मणान् भोजयेत्ततः ।।
नोपोष्या सा जयन्ती च उपोष्या तत्पराश्च ये ।
मध्याह्ने वाऽपि सायाह्ने नरसिंहं समर्चयेत् ।।
नैवेद्यमर्पयेत्तस्य अपूपं घृतपाचितम् ।

इति स्कान्दात् । अनिलर्क्षकं स्वाती । दिनद्वये तु तद्व्याप्तौ अंशतः समव्याप्तौ परा । विषमव्याप्तौ त्वधिका । दिनद्वये तु अव्याप्तौ परा ।

**।। इति वैशाखमासः ।।**

## अथ ज्येष्ठमासनिर्णयः

ज्येष्ठशुक्लैकादशी निर्जलैकादशी ।

**ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा ।**
**निर्जलं समुपोष्याऽत्र जलकुम्भान् सशर्करान् ।**
**प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसन्निधौ ।।**

ज्येष्ठपूर्णिमा मन्वादिः । पूर्वाह्णव्यापिनी ग्राह्या ।

**।। इति ज्येष्ठमासनिर्णयः ।।**

## अथ आषाढमासः

आषाढशुक्लदशमी पौर्णमासी च मन्वादिः । एकादश्यां विष्णुशयनोत्सव उक्तो ब्राह्मे-

**एकादश्यां तु शुक्लायामाषाढे भगवान्हरिः ।**
**भुजङ्गशयने शेते क्षीरार्णवजले सदा ।।** इति

इदञ्च मलमासे न कर्तव्यम्, ''ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम्'' इति ब्रह्मवैवर्ते निषेधात् । अत्रैव चातुर्मास्यव्रतारम्भ उक्तो वाराहे-

**चान्द्रो मासो द्विधा प्रोक्तो दर्शान्तः पौर्णिमान्तिकः ।**
**व्रतादौ गृह्यते तत्र पौर्णिमान्तो हि सूरिभिः ।।**

**भारते च- आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।**
**चातुर्मास्यव्रतं कुर्याद्यत्किञ्चिन्नियतो नरः ।।** इति

---

उपोषणञ्च तस्मिन्वै कृताकृतमिदं जगुः ।।
नोपोषणं मुख्यमेव नाऽत्र कार्या विचारणा ।
नरसिंहश्चतुर्दश्यां वैशाखे शुक्लपक्षके ।
अवतारं चकाराऽथ तस्यामुत्सवमाचरेत् ।। इति पञ्चरात्रागमोक्ततिथिनिर्णयः

**कालान्तरेऽपि–**

**एकादश्यां तु गृह्णीयात् संक्रान्तौ कर्कटस्य च ।**
**आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ।।** इत्युक्तम्

अस्य नित्यत्वं भारते उक्तम् ।

**वार्षिकांश्चतुरो मासान् वाहयेत्केनचिन्नरः ।**
**व्रतेन नो चेदाप्नोति किल्बिषं वत्सरोद्भवम् ।।**

आषाढशुक्लैकादश्यां पौर्णिमास्यां वाऽरम्भः, समाप्तिस्तु कार्तिकशुक्ल-द्वादश्यामेव, तदुक्तं भारते–

**चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।**
**कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ।।**

अस्यारम्भः शुक्रास्तादावपि ।

**न शैशवं न मौढ्यञ्च शुक्रगुर्वोर्न वा तिथेः ।**
**खण्डत्वं चिन्तयेच्चादौ चातुर्मास्यविधौ नरः ।।** इति हेमाद्रौ

**अशुचिर्वा शुचिर्वाऽपि यदि स्त्री यदि वा पुमान् ।**
**व्रतमेतन्नरः कृत्वा मुच्यते सर्वपातकैः ।।** इति स्कान्दे

आषाढप्रारम्भे मलमासश्चेत् तदतिक्रम्य शुद्ध एव व्रतारम्भः कार्यः । मध्ये चेन्मलमासः तदा मासद्वयेऽपि व्रतं कार्यम् । कालादर्शे–

**मध्ये चेन्मलमासश्च तदा मासद्वयेऽपि च ।**
**व्रतं कार्यं निश्चयेन द्विजेन्द्रैः भावितात्मभिः ।।**

मध्ये व्रतमध्ये इत्यर्थः ।

**मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।**
**द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ।।**

इति ब्रह्मवैवर्तोक्तेः । व्रतग्रहणप्रकारस्तु हेमाद्रौ भविष्ये च–

**महापूजां ततः कृत्वा देवदेवस्य चक्रिणः ।**
**जातीकुसुममालाभिः मन्त्रेणानेन पूजयेत् ।।**

सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदम् ।
विबुद्धे च विबुद्ध्येत प्रसन्नो मे भवाच्युत ॥

एवं तां प्रतिमां विष्णोः पूजयित्वा स्वयं नरः ।
प्रभाषेताऽग्रतो विष्णोः कृताञ्जलिपुटस्तथा ॥

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ।
इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ॥

गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् ।
तदा भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥

गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे म्रिये ह्यहम् ।
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥

इति नरसिंहपरिचर्यायाम् । भविष्ये च-

श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् ॥ इति

स्कान्देऽपि चातुर्मास्यकल्पे-

चत्वार्येतानि नित्यानि चतुराश्रमवर्णिनाम् ।
प्रथमे मासि कर्तव्यं नित्यं शाकव्रतं नरैः ॥

द्वितीये मासि कर्तव्यं दधिव्रतमनुत्तमम् ।
पयोव्रतं तृतीये तु चतुर्थेऽपि निशामय ।
द्विदलं बहुबीजञ्च वृन्ताकञ्च विवर्जयेत् ॥

तथा-

जम्बीरं राजमाषांश्च मूलकं रक्तमूलकम् ।
कूष्माण्डं चेक्षुदण्डञ्च चातुर्मास्ये त्यजेद् बुधः ॥

**तथा– विशेषाद्बदरीं धात्रीं कूष्माण्डं तिन्त्रिणीं त्यजेत् ।**
**जीर्णधात्रीफलं ग्राह्यं कथञ्चित्कायशोधनम् ।।**

एवं जीर्णतिन्त्रिणी च ग्राह्या शिष्टाचारदर्शनादित्याहुः । शाकशब्देन दशविधशाकाः ग्राह्याः ।

**मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः ।**
**त्वक्पुष्पं कुड्मलञ्चेति शाकं दशविधं स्मृतम् ।।**

इति क्षीरस्वामिना उक्तत्वात् । तथाऽन्यत्राऽपि–

**पत्रं पुष्पं फलं नालं मूलं कुड्मलमेव च ।**
**तिलपिष्टं पल्लवश्च छत्राकश्चाऽमिषं तथा ।।**
**शाकं दशविधं प्रोक्तं वर्ज्यं शाकव्रते शुभे ।।** इति

अधिरूढकं अङ्कुरः । करीरं पल्लवम् । वस्तुतस्तु–

**तत्तत्कालोद्भवाः शाका वर्जनीयाः प्रयत्नतः ।**
**बहुबीजमबीजञ्च विकारि च विवर्जयेत् ।।**

इति भविष्यद्वचनात् तत्कालोत्पन्नानां दशविधानां शाकानां निषेधः । अत्र तत्कालोद्भवजातीयत्वं विवक्षितम् । तेन आतपादिशोषितानां वर्षान्तरोद्भवानामपि निषेधः । अत्र तत्तत्कालोद्भवाः इति वीप्सावशात् स्वस्वकालोद्भवानामपि निषेधः इति निष्कर्षः । बहुबीजं अनेकबीजमित्यन्ये । इतरावयवापेक्षया बीजावयवाः यत्र बहवः तदित्यपि केचित् । अबीजं कदल्यादि । द्विदलं निरुच्यते ।

**बीजमेव समुद्भूतं द्विदलं चामुरं विना ।**
**दृश्यते यत्र साम्येषु द्विदलं तन्निरुच्यते ।।**

**शिलायां भिद्यमाने वा द्विदलं यत्र दृश्यते ।**
**द्विदलं तच्च विज्ञेयं तन्मे निगदतः श्रुणु ।।**

**माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः ।**
**निष्पावा राजमाषाश्च आढका द्विदलं स्मृतः ।**
**द्विदलान्यथ जीर्णानि सर्वाण्येतानि वर्जयेत् ।**

चातुर्मास्ये आमिषं वर्जयेदित्युक्तं पाद्मे–

**प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् ।**
**अयज्ञशिष्टमाषादि यद्विष्णोरनिवेदितम् ।।**

**दग्धमन्नं मसूरश्च मांसश्चेत्यष्टधाऽमिषम् ।**
**रुच्यं तत्तद्देशलब्धं सुप्ते देवे विवर्जयेत् ।।**

**पाद्मे चातुर्मास्ये–**

**गोछागीमहिषीदुग्धादन्यदुग्धादि चाऽमिषम् ।**
**धान्यं मसूरिकाः प्रोक्ता अन्नं पर्युषितं तथा ।।**

**द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ।**
**ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ।**
**आत्मार्थं पाचितश्चान्नमामिषं तत्स्मृतं बुधैः ।।**

**तथा–**

**निष्पावान् राजमाषांश्च मसूरं सन्धितानि च ।**
**वृन्ताकश्च कलिङ्गश्च सुप्ते देवे विवर्जयेत् ।।**

सन्धितानि लवणशाकादीनि । विष्णुधर्मे ''चतुर्ष्वपीह मासेषु हविष्याशी न पापभुक्'' हविष्याणि पृथ्वीचन्द्रोदये–

**हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः ।**
**कलायकङ्गुनीवारा वास्तुकं हिलमोचिका ।।**

**षष्ठिका कालशाकश्च मूलकं क्रमुकेतरत् ।**
**कन्दः सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ।।**

**पयोनुद्धृतसारश्च पनसाम्रहरीतकी ।**
**पिप्पली जीरकं चैव नागरङ्गश्च तिन्त्रिणी ।।**

**कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।**
**अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ।।** इति

सितास्विन्नं अनूष्मपक्कम्, धान्यं तण्डुलाः, अत्र पनसाम्रतिन्त्रीणीधात्रीफलानां हविष्यत्वोक्त्या यो निषेध उक्तः स नूतनानामेवेति ज्ञातव्यम्, अन्यथा विरोधात् । 'जीर्णधात्रीफलं ग्राह्यं कथञ्चित्कायशोधनम्' इत्युक्तेः । वाराहे च–

**सप्तमीरविवाराभ्यां विना तां भक्षयेत्सदा ।**
**न शाकव्रतहानिः स्यात्तस्य भक्षणतः क्वचित् ॥**

इति च । अन्यान्यपि व्रतानि ग्रन्थान्तरादवगन्तव्यानि । चातुर्मास्ये तप्तमुद्राधारणमुक्तं रामार्चनचन्द्रिकायां भविष्ये च–

**शयन्यां चैव बोधिन्यां चक्रतीर्थे तथैव च ।**
**शङ्खचक्रविधानेन वह्निपूतो भवेन्नरः ॥** इति

''अतप्ततनूर्न तदामो अश्नुते'' इति ऋग्वेदात् । ''स होवाच याज्ञवल्क्यः तस्मात् पुमानात्महिताय हरिं भजेत् । सुश्लोकमौले वर्माण्यग्निना सन्दधते'' इति शतपथश्रुतेः।

**प्रतद्विष्णो अब्जचक्रे सुतप्ते जन्माम्बोधिं तर्तवे चर्षणीन्द्राः ।**
**मूले बाह्वोर्दधतेऽन्ये पुराणा लिङ्गान्यङ्गे [१]तप्तायुधान्यर्पयन्ते ॥**

इति सामवेदात्

**अग्निहोत्रं यथा नित्यं वेदस्याऽध्ययनं यथा ।**
**ब्राह्मणस्य तथैवेदं तप्तमुद्रादिधारणम् ॥** इति पद्मपुराणाच्चेति

**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः ।**
**शंखचक्राङ्किततनुस्तुलसीमञ्जरीधरः ॥**
**गोपीचन्दनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः ॥** इति काशीखण्डात्

**यथा स्मशानजं काष्ठमनर्हं सर्वकर्मसु ।**
**तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥**

इत्यादीनि तप्तमुद्राधारणनिषेधकानि तानि तप्तायसमुद्राधारणनिषेधकानि ज्ञेयानि।

**शंखं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।**
**स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥** इति वचनात् । यच्च–

---

१ तावकान्यर्पयन्ति इति निर्णयसिन्धुपाठः ।

**शंखचक्राद्यङ्कनञ्च गीतं नृत्यादिकं तथा ।**
**एकजातेरयं धर्मः न जातु स्यात् द्विजन्मनः ।।**

इत्यादि तदपि तत्प्रायसमुद्राधारणं एकजातेरेव न द्विजन्मन इति व्याख्येयम् । अत एव 'शूद्रवद्बहिष्कार्यः' एव इत्युक्तम् । अन्यथा स्मृत्या श्रुतिबाधाऽयोगात् इति ।

आषाढपौर्णिमास्यां व्यासपूजोक्ता । तत्र 'त्रिमुहूर्ता चेत् परैव' इति सन्न्यासपद्धतौ। ''त्रिमुहूर्तादधिकं ग्राह्यं पर्वक्षौरप्रणामयोः'' ।।

**।। इति आषाढमासः ।।**

## अथ श्रावणमासः

श्रावणशुक्लचतुर्थी पूर्वयुता । नागचतुर्थी तु मध्याह्नव्यापिनी परविद्धा ग्राह्या ।

**युगं मध्यन्दिने यत्र तत्रोपोश्य फणीश्वरान् ।**
**क्षीरेणाप्याय्य पञ्चम्यां पूजयेत्प्रयतो नरः ।।** इति देवलोक्तेः

युगं चतुर्थी, श्रावणशुक्लपञ्चमी नागपूजादौ परैव, चमत्कारचिन्तामणौ –

**पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।**
**तस्यां तु तुषिता नागाः इतरा सचतुर्थिका ।।** इति

श्रावणशुद्धद्वादश्यां पवित्रारोपणमुक्तं हेमाद्रौ –

**श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।**
**द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ।।**

**द्वादश्यां श्रवणे वाऽपि पञ्चम्यामथवा द्विज ।**
**आनुकूल्येषु कर्तव्यं पञ्चदश्यामथापि वा ।।**

इति कालान्तरमुक्तम् । पवित्रकरणप्रकारमाह नारदः–

**हेमरौप्यताम्रक्षौमैः सूत्रैः कौशेय[१]पट्टकैः ।**
**कुशैः काशैश्च कार्पासैः ब्राह्मण्या कारितैः शुभैः ।।**
**कृत्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ।**

१ पद्मकैः इति निर्णयसिन्धुपाठः ।

पवित्रसंख्यया उत्तमत्वाद्याह–

**तत्रोत्तमं पवित्रं तु षष्ठ्या सह शतैस्त्रिभिः ।**
**सप्तत्या सहितं द्वाभ्यां शताभ्यां मध्यमं स्मृतम् ।।**

**साशीतिना शतैकेन कनिष्ठं तत्समाचरेत् ।**
**साधरणपवित्राणि त्रिभिः सूत्रैः समाचरेत् ।।**

ग्रन्थिसंख्यया उत्तमत्वाद्याह–

**उत्तमं तु शतग्रन्थि पञ्चाशद्ग्रन्थि मध्यमम् ।**
**कनिष्ठं तु पवित्रं स्यात् षट्त्रिंशद्ग्रन्थि शोभनम् ।।**

**षट्त्रिंशत् चतुर्विंशत् द्वादशेति च केचन ।**
**चतुर्विंशत् द्वादशाष्टावित्येके मुनयो विदुः ।।**

इति हेमाद्रौ । विष्णुरहस्ये तु अन्यथोक्तम्

**अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशदेव वा ।**
**सप्तविंशतिरेवाऽथ ज्येष्ठं मध्यं कनीयसम् ।।**

**पवित्राणि तथा कुर्यात् ज्येष्ठादीनि यथाविधि ।**
**प्रतिमायास्तथा पादजानुनाभिप्रमाणकम् ।।**

प्रकारान्तरञ्चाह–

**जानूरुनाभिलम्बीनि पवित्राण्यपराणि तु ।**
**आपादमौलिपर्यन्तं गङ्गामालाप्रमाणकम् ।।**

परिमाणतो नीचत्वाद्याह–

**अधमं नाभिमात्रं स्यादूरुमात्रं द्वितीयकम् ।**
**प्रलम्बतो जानुमात्रं प्रतिमायां निगद्यते ।।** इति हेमाद्रौ

**युगधर्मे–**

**कृते मणिमयं कार्यं त्रेतायां हेमसम्भवम् ।**

**पट्टजं द्वापरे प्रोक्तं कार्पासं तु कलौ स्मृतम् ।।**
**अतो देवेतिमन्त्रेण द्विजो विष्णौ निवेदयेत् ।**

**पवित्रधारणमन्त्रः**

**पवित्रं वैष्णवं तेज**[१]**स्सर्वविघ्नविनाशकम् ।**
**व्रतषाड्गुण्यसिद्ध्यर्थं ममाङ्गे धारयाम्यहम् ।।**

**ज्येष्ठादीनि पवित्राणि कुङ्कुमागरुचन्दनैः ।**
**रञ्जयेद्विष्णुसूक्तेन तदभावे हरिद्रया ।।**

एतच्च नित्यम् ।

**न करोति विधानेन पवित्रारोपणं तु यः ।**
**तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ।।**

**तस्माद्भक्तिसमायुक्तैः नरैर्विष्णुपरायणैः ।**
**वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं हरेः ।।** इति

## अथ उपाकर्म

**याज्ञवल्क्यः-**

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।**
**हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ।।** इति

हस्तेन युक्तायां पञ्चम्यामिति स्मृतिचन्द्रिकायाम् । हस्तयुतेऽन्यस्मिन् दिने इति तु हेमाद्रिः, इदमेव युक्तम् । श्रावणश्रावण्योरिवेति । ओषधीनामप्रादुर्भावे बह्वचकारि-कायाम्-

**अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु ।**
**अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् ।।**
**तदा भाद्रपदे मासि श्रवणेन करोति तत् ।।**

श्रवणस्याहर्द्वययोगे व्यासः -

---

१ ''सर्वतेजोऽभिवर्धकम्'' इत्यपि क्वचित्पाठः ।

धनिष्ठासंयुतं कुर्यात् श्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं ज्ञेयं उपाकरणसंज्ञितम् ।।

श्रवणेन तु यत्कर्म ह्युत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ।। इति

गर्गः–

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युः ग्रहसंक्रान्तिवर्जिते ।।

औदयिकं पर्व विशिनष्टि गोभिलः –

श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदा त्वौदयकी ग्राह्या नाऽन्या ह्यौदयिकी भवेत् ।।

पृथ्वीचन्द्रोदये तु–

उदये सङ्गवस्पर्शे श्रुतौ पर्वणि चार्कभे ।
कुर्युर्नभस्युपाकर्म ऋग्यजुःसामगाः क्रमात् ।।

विशेषमाह बृहस्पतिः–

हस्तश्रवणपर्वाणि ग्राह्याण्यौदयिकानि तु ।
हस्तर्क्षः सङ्गवस्पर्शैत्रिमुहूर्तात्तु वैष्णवी ।।
सङ्गवात्परतः सा चेत्पूर्णिमौदयिकी स्मृता ।।

श्रवणेऽपि विशेषमाह शंखः–

उदयादुदयं व्याप्ता त्रिमुहूर्ताधिका भवेत् ।
उपाकरणकार्ये तु श्रोणा ग्राह्या तदोत्तरा ।।

प्रयोगपारिजाते–

उदयव्यापि यद्यस्ति विष्ण्वर्क्षं घटिकाद्वयम् ।
तत्कर्म सफलं ज्ञेयं तस्य पुण्यं त्वनन्तकम् ।। इति

इदं तु पूर्वेद्युरुदयस्पर्शाभावे ज्ञेयम् । पूर्वेद्युरुत्तराषाढयोगे परेद्युः श्रवणाभावे घटिकाद्वयन्यूने वा पञ्चम्यादौ कार्यम् । नतु पूर्वविद्धायां सङ्गवमात्रे इति ज्ञेयम् ।

**मदनरत्ने–**

**यदि स्यात् श्रावणं पर्व ग्रहसंक्रान्तिदूषितम् ।**
**स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु ।।**

**तत्रापि प्रयोगपारिजाते–**

**अर्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं तदा ।**
**उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्** इति।

**यत्तु–**

**वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।**
**उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके ।।**

इति तत् छन्दोगपरम् । यदपि–

**नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।**
**कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ।।**

इति तदपि तान् प्रत्येव देशविशेषेण सिंहकर्कटव्यवस्थापरम् । एतच्च शुक्रास्तादावपि कार्यम् ।। 'उपाकर्मोत्सर्जनञ्च पवित्रदमनार्पणम्' इत्युक्तेः ।

**नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ।**
**उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ।।**

इति प्रयोगपारिजाते । पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभावं वक्तुमिदम् । तेन पर्वणि ग्रहणेऽपि चतुर्दश्यां श्रवणे कार्यमिति हेमाद्रिरिति निर्णयसिन्धौ । अस्ते प्रथमारम्भस्तु न भवति ।

**गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा ।**
**तथाऽधिमाससंसर्पे मलमासादिषु द्विज ।**
**प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् ।।**

इति काण्वोक्तेः ।

**सिंहे रवौ श्रावणे तु कन्यायां प्रोष्ठपादके ।**
**आषाढे कर्कटे वाऽपि वेदोपक्रममिष्यते ।।**

**श्रावणे मासि भाद्रे वा मूढे वा गुरुशुक्रयोः ।**
**तदाषाढ्यान्तु कर्तव्यमुपाकर्म द्विजातिभिः ।।**

**कौर्मे–**

**श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ।**
**आषाढ्यां प्रोष्ठपद्यां वा वेदोपकरणं स्मृतम् ।।** इति

आषाढ्यामिति प्रोष्ठपद्यामपि दोषे सतीति ज्ञेयम् । एतच्चापराह्णे कार्यम् । 'उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव तु' इति ।।

**अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णिके ।**
**पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः ।।**

इति च गोभिलोक्तेः । इदं तु सामगविषयम् ।

''भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु'' इति याजुषविषयम् । अत्रोपाकर्मणि उत्सर्गे च यतिव्यतिरिक्तानां सर्वेषामधिकारः ।

**प्रयोगपारिजाते गोभिलः–**

**उपाकर्मोत्सर्जनञ्च वनस्थानामपीष्यते ।**
**धारणाध्ययनाङ्गत्वात् गृहिणां ब्रह्मचारिणाम् ।।**

**उत्सर्जनञ्च वेदानामुपाकरणकर्म च ।**
**अकृत्वा वेदजप्येन फलं नाऽप्नोति मानवः ।।** इति

अथ प्रसङ्गादत्रैवोत्सर्जनमुच्यते ।

**पुष्ये तु छन्दसां कुर्यात् बहिरुत्सर्जनं द्विजः ।**
**माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ।।**

व्यवस्थितश्चायं विकल्पः ।

**श्रावण्यां प्रोष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।**
**युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ।।**

इति तेनैवोक्तत्वात् । पूर्वाह्णे प्रथमेऽहनीत्युभयत्र सम्बध्यते । एवञ्च यदा श्रावण्यां उपाकर्म तदा पौषशुक्लप्रतिपदि पूर्वाह्णे उत्सर्जनम् । यदा तु प्रोष्ठपद्यां उपाकर्म तदा माघशुक्लप्रतिपदि पूर्वाह्णे इति स्मृतिचन्द्रिकाकारादयः । आश्वलायनैस्तु 'अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते' इति कारिकोक्तेः माघ्यामेवोत्सर्जनं कार्यम् । सर्वैरुपाकर्मदिने वा कार्यम् । 'पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा' इति हेमाद्रावुक्तेः ।

श्रावणपौर्णमास्यां हयग्रीवजयन्ती । 'श्रावण्यां श्रावणे जातः पूर्वं हयशिरा हरिः' इति कल्पतरूक्तेः । आश्वलायनैस्तु श्रावण्यां श्रावणकर्म कार्यम् । श्रावण्यामेव सर्पबलिस्तैत्तिरीयाणाम् । अत्र प्रदोषव्यापिनी ग्राह्या । प्रदोषस्य कर्मकालत्वात् । दिनद्वये तद्व्याप्तौ अव्याप्तौ वा उत्तरदिने । एवं सर्पबलिरपि तस्यामेव पौर्णमास्याम् । तत्राप्ययमेव निर्णयः । अत्र गोप्रसवे नारदः-

**भानौ सिंहगते चैव यस्य गौः सम्प्रसूयते ।**
**मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥**

**तत्र शान्तिं प्रवक्ष्यामि येन सम्पद्यते शुभाम् ।**
**प्रसूतां तत्क्षणादेव तां गां विप्राय दापयेत् ॥**

**ततो होमं प्रकुर्वीत घृताक्तै राजसर्षपैः ।**
**आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥**

व्याहृतिभिश्चायं होम इति । तथा-

**सिंहराशौ गते सूर्ये गोप्रसूतिर्यदा भवेत् ।**
**पौषे च महिषीसूते दिवैवाश्वतरी तथा ॥**
**तदानिष्टं भवेत्किञ्चित् तच्छान्त्यै शान्तिकं चरेत् ।**

**गार्ग्यपरिशिष्टे-**

**माघे बुधे च महिषी श्रावणे वडवा दिवा ।**
**सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायकाः ॥** इति

अत्र शान्तिः कार्या ।

## अथ जन्माष्टमी

**अष्टमी श्रावणे मासि कृष्णपक्षे यदा भवेत् ।**
**कृष्णजन्माष्टमी ज्ञेया महापातकनाशनी ।।**

जन्माष्टमीव्रतं नित्यम्, अकरणे प्रत्यवायश्रवणात्, तथा हि भविष्ये-

**रटन्तीह पुराणानि भूयो भूयो महामुने ।**
**अतीतानागतं तेन कुलमेकोत्तरं शतम् ।**
**पातितं नरके घोरे भुञ्जता कृष्णवासरे ।।**

**तथा-**

**जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ।**
**त्रैलोक्यसम्भवं पापं तेन भुक्तं द्विजोत्तम ।।** इति

**ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् ।**
**ते भवन्ति नराः प्राज्ञ व्याला व्याघ्राश्च कानने ।।** इति स्कान्दे

**श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।**
**न करोति नरो यस्तु भवति क्रूरराक्षसः ।।** इति भविष्योक्तेश्च

**वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् ।**
**न करोति महाप्राज्ञ व्याला भवति कानने ।।**

इति स्कान्दे वीप्साश्रुतेश्च । नारीति स्त्रीलिङ्गमतन्त्रम्, न करोति नरो यस्त्विति पूर्वमुक्तेः । स्कान्दे फलमप्युक्तम् ।

**जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः ।**
**कारयत्यथवा लोकान् लक्ष्मीस्तेषां सदा स्थिता ।**
**सिद्ध्यन्ति सर्वकार्याणि व्रते जन्माष्टमीव्रते ।।** इति

अत्र उपवास एव प्रधानः ।

**केवलेनोपवासेन तस्मिन् जन्मदिने मम ।**
**सप्तजन्मकृतात्पापात् मुच्यते नाऽत्र सशंयः ।।** इत्युक्तेः

व्रतसङ्कल्पप्रकारस्तु–

**वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।**
**उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ।।** इति

अत्र निशीथव्यापिनी ग्राह्या ।

**श्रावणे मासि या कृष्णा अर्धरात्रयुताष्टमी ।**
**जन्माष्टमी भवेत्सैव जयन्ती रोहिणीयुता ।।** इत्युक्तेः

जन्माष्टमी चतुर्विधा । पूर्वेद्युरेव निशीथव्यापिनी, परेद्युरेव तादृशी, उभयेद्युः, नोभयेद्युश्च इति । तत्र प्रथमद्वितीयपक्षयोरसन्देह एव । "कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ..." इत्युक्तेः दिनद्वयेऽपि निशीथव्यापित्वे परैवोपोष्या । प्रातःसङ्कल्पकाले सत्वात् । सागरसंहितायामपि ।

**दिनद्वयेऽर्धरात्रौ तु यदा शुद्धाष्टमी भवेत् ।**
**परत्रोपोषणं कुर्याद्विष्णुपूजां च जागरम् ।।** इति

द्विनद्वयेऽप्यर्धरात्रं व्याप्त्यभावे तु प्रदोषव्यापिनी परैव । प्रातःसङ्कल्पकाले सत्वात् । यथोक्तं वाराहे–

**दिनद्वये यदा न स्यान्निशीथव्यापिनी तिथिः ।**
**तदोत्तरामुपवसेत् यतः सूर्योदयस्पृशा ।।** इति

**त्रिकाण्डमण्डनश्च–**

**दिनद्वयेऽर्धरात्रौ तु यदा कृष्णाष्टमी न हि ।**
**प्रदोषव्यापिनी ग्राह्या कृष्णजन्मव्रते परा ।।** इति

**अष्टमी ह्यर्धरात्रे तु यदि न स्याद्दिनद्वये ।**
**पूर्वविद्धां परित्यज्य परविद्धामुपावसेत् ।।**

**अष्टमी मध्यरात्रे तु यदि न स्याद्दिनद्वये ।**
**न सप्तम्या युता ग्राह्या नवमीसंयुता शुभा ।।** इति

**ब्रह्मवैवर्ते च–**

**वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।**
**किन्तु सा नवमीयुक्ता कुलकोट्याश्च मुक्तिदा ॥**

**अष्टमी नवमीमिश्रा कर्तव्या भूतिमिच्छता ।**
**सप्तम्या चाष्टमीयुक्ता न कर्तव्या शिखिध्वज ॥** इति

तथाच निशीथव्याप्तिः मुख्या, निशीथाव्याप्तिस्तु अमुख्येत्युक्तं भवति । इय-मेवाष्टमी कदाचित् रोहिणीयुक्ता चेज्जयन्तीत्युच्यते ।

**स्कान्दे–**

**प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत् ।**
**श्रावणे बहुले सा तु सर्वपापप्रणाशिनी ॥**
**जयं पुण्यञ्च कुरुते जयन्ती तां विदुर्बुधाः ॥** इति

**सनत्कुमारसंहितायाञ्च–**

**श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप ।**
**रोहिणी यदि लभ्येत जयन्ती नाम सा स्मृता ॥**

**विष्णुरहस्ये–**

**अष्टमी कृष्णपक्षस्य रोहिणीभेन संयुता ।**
**भवेत्प्रोष्ठपदे मासि जयन्ती नाम सा स्मृता ॥** इति

अत्र कृष्णाष्टम्याः शुक्लादिदर्शान्तिमासपक्षे श्रावणमासस्थत्वम् । कृष्णादिपौर्णमा-स्यन्तमासपक्षे भाद्रपदमासस्थत्वञ्च इत्याभिप्रायेणोभयथाऽपि प्रयोगः । केचित्तु उभयोर्मासयोरन्यतरस्मिन् जयन्तीयोग इत्याभिप्रायेणोभयथा प्रयोगः । तदुक्तं विष्णुधर्मोत्तरे-

**श्रावणे वा नभस्ये वा रोहिणीसहिताष्टमी ।**
**यदा कृष्णा नरैर्लब्धा जयन्ती सा प्रकीर्तिता ॥**

**श्रावणेन भवेद्योगो नभस्ये तु भवेद् ध्रुवम् ।**
**तयोरभावे योगस्य तस्मिन् वर्षे न सम्पदः ॥** इति

अत्रैकस्मिन्नेव वाक्ये उभयनिर्देशे वाशब्दद्वयादित्याहुः । अत्राष्टम्यां रोहिणीनक्षत्रस्य योगः निशीथ एव मुख्यः । कालतत्त्वविवेकाख्ये औत्तरग्रन्थे–

**सिंहार्के रोहिणीयुक्ता नराः कृष्णाष्टमी यदि ।**
**रात्र्यर्धपूर्वापरगा जयन्ती कलयाऽपि च ॥** इति वराहसंहितायामिति ।

**कृष्णाचार्यस्मृतौ विष्णुतीर्थीये–**
**सिंहमासे तु रोहिण्या युतां कृष्णाष्टमीं पुमान् ।**
**उपोष्य मध्यरात्रे च पूजयेन्नन्दनन्दनम् ॥**

इत्यादि जयन्तीनिर्णयप्रकरणे । अत्राष्टम्यां रोहिणीनक्षत्रस्य योगः निशीथ एव मुख्यः । तथा च वसिष्ठः–

**अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि ।**
**मुख्यकाल इति ख्यातस्तत्र जातो हरिः स्वयम् ॥** इति

**जन्माष्टमी रोहिणी च निशीथव्यापिनी यदि ।**
**तदैवोपोषणं कार्यं व्रतं तत्रैव कारयेत् ॥**

**भविष्ये च–**
**अर्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।**
**तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥**

**भविष्योत्तरे–**
**मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्षगे ।**
**शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके ।**
**योगेऽस्मिन् वसुदेवाद्धि देवकी मामजीजनत् ॥**

**तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः ।**
**ब्राह्मणान्भोजयेद्भक्त्या ततो दद्याच्चतुर्गुणम् ॥**

**हिरण्यं मेदिनीं गाश्च वासांसि कुसुमानि च ।**
**यद्यदिष्टतमं तत्र कृष्णो मे प्रीयतामिति ॥**

**नारदीये–**

**उपोष्य जन्मचिह्नानि कुर्याज्जागरणञ्च यः ।**
**अर्धरात्रयुताष्टम्यां सोऽश्वमेधफलं लभेत् ।।** इति

यस्मिन् वर्षे कृष्णाष्टम्यां निशीथे रोहिणीयोगस्तदा कृष्णाष्टमी जयन्त्यामन्तर्भूता ज्ञेया । तदुक्तं माधवीये–

**यस्मिन् वर्षे जयन्त्याख्यो योगो जन्माष्टमी तदा ।**
**अन्तर्भूता जयन्त्यां स्यादृक्षयोगप्रशस्तितः ।।**

इति जयन्तीयोगेन फलातिशयश्चोक्तः स्कान्दे–

**महाजयार्थं कुरुते जयन्तीयुक्तया यथा ।**
**धर्ममर्थञ्च कामञ्च मोक्षञ्च मुनिपुङ्गव ।।**
**ददाति वाञ्छितानर्थान् ये चान्येऽप्यतिदुर्लभाः ।।** इति

अत्र सङ्कल्पप्रकारस्तु–

**अथ कृष्णाष्टमीं देवीं नभश्चन्द्रं सरोहिणीम् ।**
**अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ।।** इति

अत्र पूर्वार्धरात्रावसानघटिका उत्तरार्धरात्रप्रथमघटिका चेति मिलित्वा घटिकाद्वयं निशीथाख्यं मुहूर्तम्, तत्र व्याप्तिर्नाम कियतीत्यत आह योगीश्वरः–

**अर्धरात्रादधश्चोर्ध्वं एकार्धघटिकान्विता ।**
**रोहिणी चाष्टमी ग्राह्या ह्युपवासव्रतादिषु ।।** इति

एकघटिकान्विता अर्धघटिकान्विता चेत्यर्थः । अर्धपदेन सप्तमीसंयुतायां रात्रि-पूर्वार्धावसानम् । उर्ध्वपदेन नवमीयुक्तायां रात्र्युत्तरार्धस्यादिः ग्राह्यः । तथाच सप्तमी-संयुतायां रात्रिपूर्वार्धावसाने अष्टम्या घटिकया व्याप्तिः, नवमीयुक्तायामुत्तरार्धादौ अर्धघटिकया अष्टम्या व्याप्तिः निशीथव्याप्तिरित्युक्तं भवति । रोहिणीयुताऽपि चतुर्धा । पूर्वेद्युरेव निशीथयोगवती, परेद्युरेव तादृशी, उभयेद्युः, नोभयेद्युश्चेति । तत्र पूर्वेद्युः निशीथयुता चेत्पूर्वैव । ''कार्या विद्धाऽपि सप्तम्या रोहिणीसहिताष्टमी'' इति पाद्मात् ।

**सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।**
**भविता साऽष्टमी पुण्या यावच्चन्द्रदिवाकरौ ।।** इति वह्निपुराणात्

**रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।**
**सप्तम्यामर्धरात्राधः कलयाऽपि यदा भवेत् ।।**

**तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ।**
**तमेवोपवसेत्कालं तत्र कुर्याच्च जागरम् ।।**

**अर्धरात्रे तु योगोऽयं तारापत्युदये सति ।**
**नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्तयेत् ।।**

**तथा–**

**रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।**
**अर्धरात्रादधश्चोर्ध्वं कलयाऽपि यदा भवेत् ।।**
**तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ।।** इति विष्णुधर्मोत्तरे

अवशिष्टत्रिषु पक्षेषु परदिने एव व्रतम् । ''सऋक्षाऽपि न कर्तव्या सप्तमीसंयुताऽष्टमी'' इति ।।

**दिनद्वयेऽर्धरात्रे तु रोहिणीसहिताऽष्टमी ।**
**जयन्तीनाम सा प्रोक्ता नवमीसंयुता यदि ।।**

**रोहिणीसहिता वाऽपि सप्तमीसहिताऽष्टमी ।**
**त्याज्या नभसि कृष्णायां कृष्णजन्मव्रते सति ।।**

**दिनद्वयेऽर्धरात्रे तु रोहिणीसहिता न चेत् ।**
**प्रदोषव्यापिनी ग्राह्या कृष्णजन्माष्टमी व्रते ।।**

पूर्वेद्युः रोहिणीरहिता निशीथगा च तिथिः, परेद्युः रोहिणीसहिता निशीथास्पृक्च तदा पूर्वैव ग्राह्या । कर्मकालशास्त्रस्य सर्वापेक्षया प्राबल्यस्य सर्वग्रन्थसिद्धत्वात् ।। रोहिणीयोगे तु प्राशस्त्यात्फलातिशयमात्रम् । न तु तस्य निर्णयोपयोगिता । नवमीबुधवारवत् । अन्यथा–

**प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः ।**
**यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ।।**

**किं पुनर्बुधवारेण सोमेनाऽपि विशेषतः ।**
**किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ।।**

इति पाद्मवचसा पूर्वेद्युरर्धरात्रे वर्तमानां सरोहिणीमप्यष्टमीं त्यक्त्वा बुधनवमीयुता परैव कार्याऽपद्येतेति । अत्र केचित् । सत्यम्, कर्मकालशास्त्रं सर्वापेक्षाया प्रबलम् । तथापि यस्मिन् व्रते परैव ग्राह्येत्येवंविधेन प्रातिस्विकेन बाध्यते । अत एव विष्णुरहस्ये–

**प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।**
**मुहूर्तमपि लभ्येत सोपोष्या सा महाफला ।।** इति

**वह्निपुराणेऽपि–**

**कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी स्मृता ।**
**जयन्ती नाम सा प्रोक्ता उपोष्यैव प्रयत्नतः ।।**

**स्कान्दे–**

**उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।**
**भवेत्तु बुधसंयुक्ता प्राजपत्यृक्षसंयुता ।**
**अपि वर्षशतेनाऽपि लभ्यते यदि वा न वा ।।**

इत्याहुः तन्न । तदेव हि प्रातिस्विकं शास्त्रं कर्मकालबाधकम्, यदनन्यथासिद्धं भवति । सम्भवति हि अस्य न्याय्योऽप्यन्योऽर्थः । तथाहि, यच्च स्कान्दे ''उदये चाष्टमी किञ्चित्'' इति तत्राप्युदयशब्दस्य ''तारापत्युदये सति'' इत्याद्येकमूल-कल्पनालाघवलिप्सायाः चन्द्रोदयपरतैव अङ्गीकार्या । न सूर्योदयपरता । यच्च विष्णुरहस्यस्थं, यदपि वह्निपुराणस्थं तत्र मुहूर्तपदं निशीथाख्यमुहूर्तपरम् । कलापदं तद्वृत्तिकालपरमिति न विरोधः । वस्तुतस्तु एतद्वाक्यद्वयं उभयदिने निशीथेऽ-ष्टमीव्याप्तौ एकदेशव्याप्तौ वा सावकाशम् । अतो न कर्मकालव्याप्तिबाधकम् । तस्मात्कर्मकालशास्त्राबाधात् पूर्वैव ग्राह्या । यदि तु जयन्तीव्रतं जन्माष्टमीव्रताद्भिन्न-मिति पक्षः कथं अष्टमीव्रतं नित्यम् । जयन्ती व्रतं नित्यं काम्यम् । अष्टमीव्रतं

तिथिमात्रनिमित्तकं जयन्तीव्रतं तु तिथिनक्षत्रनिमित्तकम्, एकत्र कृष्णाष्टमीति संज्ञा, इतरत्र जयन्तीति संज्ञा इत्यादिभेदात्, अत्र प्रमाणानि पूर्वमुदाहृतानि वचनानि ज्ञेयानि । यदा पूर्वदिने केवलाष्टम्या निशीथयोगे सत्यपि उत्तरदिने निशीथाव्यापिन्या अष्टम्या रोहिणीयोगे सति जयन्तीव्रतं कार्यं भवति ।

**मुहूर्तमप्यहोरात्रे यस्मिन् युक्तं हि लभ्यते ।**
**अष्टम्या रोहिणीऋक्षं तां सुपुण्यामुपावसेत् ॥**

**दिवा वाऽथ निशायां वा यत्र स्वल्पाऽपि रोहिणी ।**
**विशेषेण नभोमासे सैवोपोष्या मनीषिभिः ॥**

इत्यादिवसिष्ठसंहिताविष्णुरहस्यादिवचनादिति । तस्मात् अष्टमीव्रते सत्यप्युत्तरदिने निशीथाव्यापिन्या अष्टम्या रोहिणीयोगे पूर्वदिने केवलैव निशीथयोगे पूर्वैव ग्राह्येति । अत्र उभयोरपि व्रतयोर्नित्यत्वात् सर्वैरपि उपवासद्वयं कार्यमिति केचित् । कृष्णाष्टमीव्रतं सर्वैरपि कार्यम् । जयन्तीव्रतं तु तदुपासकानामेव नित्यमि-त्यन्ये । तिथिनक्षत्रयोर्निशीथयोगे सर्वेषामपि एक एवोपवास इति तत्र न काऽपि विप्रतिपत्तिरिति । व्रतानुष्ठानप्रकारस्तु मध्वाचार्यैर्जयन्तीकल्पे उक्तः ।

**रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।**
**जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥**

**तस्यां जातो हरिस्साक्षात् निशीथे भगवानजः ।**
**तस्मात्तद्दिनमत्यन्तं पुण्यं पापहरं परम् ॥**

**तस्मात्सर्वैरुपोष्या सा जयन्ती नाम वै सदा ।**
**द्विजातिभिर्विशेषेण तद्भक्तैश्च विधानतः ॥**

**यो भुङ्क्ते तद्दिने मोहात्पूयशोणितमत्ति सः ।**
**कृत्वा शौचं यथान्यायं स्नानं कुर्यादतन्द्रितः ॥**

**प्रभातकाले मेधावी योगायेति च मन्त्रतः ।**
**नित्याह्निकं प्रकुर्वीत भगवन्तमनुस्मरन् ॥**

**मध्याह्नकाले च पुनः सायङ्काले त्वतन्द्रितः ।**

**स्नायीत पूर्वमन्त्रेण वासुदेवमनुस्मरन् ।**
**यज्ञायेति च मन्त्रेण ततः पूजां समाचरेत् ।।**

**कृष्णं च बलभद्रं च वसुदेवं च देवकीम् ।**
**नन्दगोपं यशोदां च सुभद्रां तत्र कारयेत् ।।**

'पूजयेत्' इति क्वचित्पाठः । कृष्णार्घ्यमन्त्रः ''जातः कंसवधार्थाय भूभारोत्तारणाय च..'' इत्यादिः । चन्द्रार्घ्यमन्त्रः, 'क्षीरोदार्णवसम्भूत..' इत्यादिः । चन्द्रोपस्थानमन्त्रः।

**मृगिणे शितबिम्बाय सोमदेवाय चेन्दवे ।**
**रोहिणीसक्तचित्ताय तारकापतये नमः ।।** इति

**योगयज्ञविश्वसर्वधर्मेति हरिनामभिः ।**
**चतुर्थ्यन्तैः क्रमात् कुर्यात्स्नानार्चास्वापपारणाः ।**
**स्वस्थं च प्राप्नुयाद्धीमान् कृष्णजन्माष्टमीदिने ।।** इति

विशेषविधिस्तु भविष्योत्तरपुराणे-

**स्नात्वैवं नित्यकर्माणि निर्वर्त्यागत्य वै गृहम् ।**
**मण्डपं कारयेद्दिव्यं स्थाप्य रौग्मघटं ततः ।।**

**पञ्चरत्नसमोपेतं पवित्रोदकपूरितम् ।**
**तस्योपरि न्यसेत्पात्रं कर्पूरागरुसंयुतम् ।।**

**सुधूपवासितं दिव्यं पुष्पमालाभिशोभितम् ।**
**सौवर्णरौप्यताम्रं वा पात्रं वेणुमयं तु वा ।।**

**तस्योपरि न्यसेद्देवं हैमं लक्षणसंयुतम् ।**
**पिबमानं स्तनं चैकं पीड्यन्तं पाणिनापरम् ।।**

**अवलोकयन्तं प्रेम्णा तं मुखं मातुश्च निश्चलम् ।**
**क्षीरोदस्नापितं कृत्वा चन्दनेन विलेपितम् ।।**

**कुङ्कुमेन महाभाग कर्पूरागरुचर्चितम् ।**
**श्वेतवस्त्रयुगच्छन्नं पुष्पमालाविभूषितम् ।।**

  

मालतीमल्लिकापुष्पैश्चम्पकैर्बकुलैः शुभैः ।
बिल्वपत्रैरखण्डैस्तु कोमलैस्तुलसीदलैः ।।

फलैर्दाडिमखर्जूरैर्युक्तमन्नं घृतादियुक् ।
नैवेद्यं देवदेवाय भक्त्या सर्वं निवेदयेत् ।।

ततो नीराजनं कुर्यान्मन्त्रपुष्पं समर्पयेत् ।
गीतं वाद्यं च नृत्यं च कारयेद्यदि शक्तिमान् ।।

शान्तिसूक्तं च सौरं च विष्णोर्नामसहस्रकम् ।
पठेदेवं विधानेन पूजयेद्धरिमव्ययम् ।।

यो दद्याद्भक्तितो दानं गां महीं वस्त्रकाञ्चने ।
देवक्याः प्रसवे धीमाञ्जाते कृष्णे जगत्पतौ ।।

जातकर्मादि कर्तव्यं देवदेवस्य चक्रिणः ।
पुरोणोक्तेन मन्त्रेण कृष्णं सम्पूजयेन्निशि ।।

एवं सम्पूज्य देवेशं ततः सम्प्रार्थयेद्बुधः ।
तेऽवतारा असङ्ख्यातास्तान्न जानाति कश्चन ।।

तथा ब्रह्मदयो देवाः स्वरूपं न विदुस्तव ।
एवंविधं त्वामर्चिष्ये मातुरुत्सङ्गसंस्थितम् ।।

वाञ्छितं कुरु मे देव संसारार्तिहरो भव ।
एवं सम्प्रार्थ्य गोविन्दं पात्रे तिलमये शुभे ।।

चन्द्रोदये विनिर्गत्य स्थण्डिले समलंकृते ।
जानुभ्यामवनिं गत्वा कृष्णायार्घ्यं निवेदयेत् ।।

नारीकेलस्य तोयं तु शंखे कृत्वा विधानतः ।
कृष्णाय परया भक्त्या दद्यादर्घ्यं विचक्षणः ।।

जातः कंसवधार्थायेत्यादिमन्त्रेण वाग्यतः ।
ततः स्तोत्रं पठेद्विद्वान् वक्ष्यमाणं हि भक्तितः ।।

शौरिं गोविन्दमनघं वामनं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ।।

दामोदरं पद्मनाभं केशवं गरुडध्वजम् ।
अनन्तमच्युतं कृष्णमपराजितमेव च ।।

अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारणम् ।
अनादिनिधनं विष्णुं देवदेवं त्रिविक्रमम् ।।

नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ।
सौम्यं सौम्यगुणोपेतं वनमालाविभूषितम् ।।

श्रीवत्सवक्षसं श्रीशं श्रीधरं श्रीपतिं हरिम् ।
उपन्द्रं देवकीपुत्रं प्रणमामि प्रजापतिम् ।।

नामान्येतानि सङ्कीर्त्य प्रीत्यर्थं प्रार्थयेत्पुनः ।
पुष्कराक्ष निमग्नोऽहं महत्यज्ञानसागरे ।।

त्राहि मां देवदेवेश महासंसारसागरात् ।
इति सम्प्रार्थ्य देवेशं देवकीं प्रार्थयेत्ततः ।।

अदिते देवमातस्त्वं सर्वपापप्रणाशिनि ।
अतस्त्वां पूजयिष्यामि भीतो भवभयादहम् ।।

पूजितासि यथा देवैः प्रसन्ना त्वं वरानने ।
पूजिता तु यथा भक्त्या प्रसादं कुरु सुव्रते ।।

यथा पुत्रं हरिं लब्ध्वा प्राप्ता ते निर्वृतिः पुरा ।
तथैव निर्वृतिं देवि सुपुत्रं दर्शयस्व मे ।।

इति प्रार्थ्य ततः शंखे दुग्धं संस्थाप्य तेन तु ।
क्षीरोदार्णवसम्भूतेत्यादिमन्त्रेण वाग्यतः ।
चन्द्रायार्घ्यं प्रदायाथ ह्युपतिष्ठेत्ततो द्विजः ।।

ज्योत्स्नापते नमस्तुभ्यं नमस्ते ज्योतिषांपते ।

नमस्ते रोहिणीकान्त सुधाकुम्भ नमोऽस्तु ते ।।

ततो जागरणं कुर्याद्यावच्चोदेति भास्करः ।
गीतशास्त्रकथालापैर्हरिवंशकथादिभिः ।।

प्रातरुत्थाय विप्रेन्द्र ह्यर्चयित्वा च पूर्ववत् ।
विसर्गान्तं ततः कृत्वा विप्राय प्रतिपादयेत् ।।

स्त्रीबालसहितस्तत्र मित्रबन्धुसमन्वितः ।
ततस्तु स्वयमश्नीयात् दीनानन्धांश्च भोजयेत् ।।

एवं यः कुरुते विद्वान् कृष्णजन्माष्टमीव्रतम् ।
विष्णुस्तूत्तारयेद्देवः कुलानामेकसप्ततिम् ।।

संसर्गेणाऽपि यः कुर्यात्कृष्णजन्माष्टमीव्रतम् ।
यः कुर्यात्पापनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ।। इति

हेमाद्रौ च–

ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले ।
सुदेशे शोभनं कुर्यात् देवक्याः सूतिकागृहम् ।।

तन्मध्ये प्रतिमा स्थाप्या सा चाप्यष्टविधा स्मृता ।
काञ्चनी राजती ताम्री पैत्तली मृण्मयी तथा ।।

वार्क्षी मणिमयी चैव वर्णकैर्लिखिता तथा ।
सर्वलक्षणसम्पूर्णा पर्यङ्के च पटावृते ।।

देवकीं तत्र चैकस्मिन् प्रदेशे सूतिकागृहे ।
प्रस्तुतां च प्रसूतां च स्थापयेन्मञ्चकोपरि ।।

मां तत्र बालकं सुप्तं पर्यङ्के स्तनपायिनम् ।
यशोदां तत्र चैकस्मिन् प्रदेशे सूतिकागृहे ।।

तद्वच्च कल्पयेत्पार्थ प्रसूतां कन्यकां तथा ।
काश्यपो वसुदेवोऽयं अदितिश्चैव देवकी ।।

**शेषो वै बलभद्रोऽयं यशोदा क्षितिरन्वभूत् ।**
**नन्दः प्रजापतिर्दक्षः गर्गश्चाऽपि चतुर्मुखः ।**
**गौर्धेनुः कुञ्जरश्चैव दानवाः शस्त्रपाणयः ।।**

**लेखनीयश्च तत्रैव कालीयो यमुनाह्रदे ।**
**इत्येवमादि यत्किञ्चित् शक्यते चरितं मम ।**
**लेखयित्वा प्रयत्नेन पूजयेत् भक्तितत्परः ।।** इति

**शंखे तोयं समादाय सपुष्पकुशचन्दनम् ।**
**जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ।।**

क्षीरोदार्णवसम्भूतेति मन्त्रः ।

**ततः पुष्पाञ्जलिं दत्वा यामे यामे प्रपूजयेत् ।**
**प्रभाते ब्राह्मणान् शक्त्या भोजयेत् भक्तिमान्नरः ।।** इति

**अथ पारणम्–**

तिथिनक्षत्रसंयोगनिमित्तकजयन्त्युपवासाङ्गपारणं तिथिनक्षत्रयोरन्ते अन्यतरान्ते वा कार्यम् ।

**उक्तञ्च नारदीये–**

**तिथिनक्षत्रसंयोगे तूपवासो यदा भवेत् ।**
**पारणं नैव कर्तव्यं यावन्नैकस्य संक्षयः ।।**

**स्कान्देऽपि–**

**तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् ।**
**अतोऽन्यथा पारणे तु व्रतभङ्गमवाप्नुयात् ।।**

**तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा ।**
**अर्धरात्रेऽपि वा कुर्यात्पारणं त्वपरेऽहनि ।।**

अपरेऽहनि पारणदिने अर्धरात्रेऽपीत्यन्वयः । भविष्योत्तरे रात्रिपारणे विशेष उक्तः।

**न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् ।**
**तत्र निश्यपि तत्कुर्यात् वर्जयित्वा महानिशाम् ।।**

महानिशा तु गर्गः- ''महानिशा तु विज्ञेया मध्यं मध्यमयामयोः'' इति । स्मृत्यन्तरे- ''मध्यमप्रहरे रात्रेर्विज्ञेया तु महानिशा'' इति ततश्च रात्रौ सार्धप्रहरमध्ये पारणं कार्यम् । वृद्धशातातपस्तु- ''महानिशा द्वे घटिके रात्रौ मध्यमयामयोः'' इति।

एवं तिथिनक्षत्रसंयोगनिमित्तकजयन्त्युपवासाङ्गपारणस्य उभयान्तेऽन्यतरान्ते च विधानात्, अर्थात् तिथिमात्रान्ते कार्यम्, नतु उभयान्ते कार्यमिति सिद्धम् ।

**तदुक्तं वह्निपुराणे-**

**जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च ।**
**एताः पूर्वयुताः कार्या तिथ्यन्ते पारणं भवेत् ॥**

**कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।**
**एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥**

भृगूक्तेश्च माधवीये स्कान्दे-

**तीथीनामेव सर्वासामुपवासव्रतादिषु ।**
**तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ॥** इति

**याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसंयुताः ।**
**ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणी ॥** इति च

**अष्टमीमतिवाह्यैव पारणं द्विजसत्तम ।**
**कुर्यात्तु श्रावणे मासि विना श्रवणरोहिणीम् ॥** इति च

**ब्रह्मवैवर्ते-**

**तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ।**
**तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् ॥** इति

इदं तु जयन्तीपरम् । एवमेव तिथिनक्षत्रान्तपारणविधायकवाक्यानि । जयन्ती-व्रतनियमवतामेवेति ज्ञेयम् । तिथिभान्ते पारणेऽपि विशेषः विष्णुधर्मोत्तरे -

**तिथ्यन्ते चैव भान्ते च पारणं यत्तु चोदितम् ।**
**यामत्रयादुपरि चेत्प्रातरेव हि पारणम् ॥** इति

इदं अशक्तपरमित्याहुः ।

**तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथाऽपि वा ।**
**अर्धरात्रेऽपि वा कुर्यात्पारणं त्वपरेऽहनि ।।**

**न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् ।**
**तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम् ।।**

इति रात्रिपारणविधायकस्कान्दभविष्योत्तरवचनात् । यत्तु-

**सर्वेष्वेवोपवासेषु दिवापारणमिष्यते ।**
**अन्यथा पुण्यहानिः स्यादृते धारणपारणम् ।।** इति

**अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा ।**
**तामसे पारणं कुर्वन् तामसीं गतिमश्नुते ।।**

इति दिवापारणविधायकरात्रिपारणनिषेधकब्रह्मवैवर्तवाक्यं, तत्तु जन्माष्टमी-व्यतिरिक्तविषयमिति ।

तिथ्यन्तपारणपक्षे विशेषः-

**तिथ्यन्ते वोत्सवान्ते वा बालवृद्धातुरादयः ।**
**अशक्ताः पारणं कुर्युरिति वेदविदो विदुः ।।** इति ब्रह्मवैवर्ते

उत्सवान्ते प्रातः पूजाद्युत्सवान्ते इति । जयन्तीपारणे विशेषमाह-

**तिथ्यृक्षयोर्द्वयोरन्ते उत्तमं पारणं भवेत् ।**
**एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम् ।।** इति

**।। इति जन्माष्टमी ।।**

श्रावणामावास्यायां कुशग्रहणमुक्तं हारीतेन-

**मासे नभस्यमावास्यां तस्यां दर्भोच्चयो मतः ।**
**अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ।।** इति

## अथ भाद्रपदमासः

भाद्रपदशुक्लतृतीयायां गौरीव्रतम् । तत्र परा ग्राह्या-

**मुहूर्तमात्रसत्वेऽपि दिने गौरीव्रतं परे ।**
**शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ।।** इति माधवोक्तेः

## गणेशचतुर्थी

भाद्रपदशुद्धचतुर्थी गणेशचतुर्थी, सा मध्याह्नव्यापिनी ग्राह्या । 'प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप' इति भविष्ये मध्याह्नपूजोक्तेः । परदिने मध्याह्नव्याप्त्यभावे पूर्वा, तथाच बृहस्पतिः-

**चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।**
**मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि ।।** इति

**मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके ।**
**मध्याह्ने परतश्चेत्स्यान्नागविद्धा प्रशस्यते ।।** इति माधवीये

मयूखे विनायकव्रते तृतीयायुतैव ग्राह्या ।

**चतुर्थी तु तृतीयायां महापुण्यफलप्रदा ।**
**कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ।।** इति देवलोक्तेः

सा मध्याह्नव्यापिनी पूर्वविद्धा ग्राह्या । पूर्वदिने मध्याह्नव्यापिन्यभावे परैव 'चतुर्थी गणनाथस्य' इति वचनात् इति । गणेशचतुर्थ्यां चन्द्रं न पश्येदित्याह मार्कण्डेयः-

**भाद्रे मासि सिते पक्षे चतुर्थी स्वातियोगिनी ।**
**मिथ्याभिशापं कुरुते दृष्टचन्द्रा न संशयः ।।**

**तद्दोषशान्तिस्तु-**

**ततश्चतुर्थ्यां रात्र्यां यो प्रमादाद्वीक्ष्य मानवः ।**
**पठेत्पौराणिकं वाक्यं प्राङ्मुखो वा उदङ्मुखः ।।**

**सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।**
**सुकुमारक मा रोदीः तव ह्येषः स्यमन्तकः ।।** इति

भाद्रपदशुक्लपञ्चमी ऋषिपञ्चमी, सा चतुर्थीयुतैव ग्राह्या-

**चतुर्थीसंयुता कार्या पञ्चमी परया नतु ।**
**दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथा सिते ।।** इत्युक्तेः ।

भाद्रपदशुक्लैकादशी विष्णुपरिवर्तनैकादशी । सन्ध्यायां विष्णुं सम्पूज्य प्रार्थयेत्। मन्त्रस्तु-

**वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ।**
**पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ।।** इति

भाद्रपदशुक्लद्वादशी वामनजयन्ती, इयमेव कदाचित् श्रवणद्वादशी च, इयमप्युपोष्या, तथाचोक्तं कृष्णामृतमहार्णवे-

**द्वादशीं श्रवणोपेतां यो नोपोष्यात्स मन्दधीः ।**
**पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ।।**

**एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत् ।**
**न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ।।**

श्रवणद्वादश्योर्मध्याह्नव्यापित्वे एवोपवासः कार्यः ।

**नभस्यशुक्लपक्षे तु माघे कृष्णे च फाल्गुणे ।**
**द्वादशी श्रवणे स्यातामुभे मध्यङ्गते रवौ ।।**

**श्रवणं द्वादशीयुक्तं मध्याह्नाद्वर्तते यदि ।**
**तत्रैवोपोषणं कार्यं मुहूर्ते सप्तमेऽधिके ।।**

**उदयादभिजिल्लग्नगामिन्यौ श्रुतिवासरौ ।**
**तत्रैवोपोषणं कार्यं मुहूर्ते सप्तमेऽपि चेत् ।।**

**श्रवणं द्वादशी यत्र मध्याह्नादूर्ध्वमप्युभे ।**
**तद्दिने चोपवासश्च न्यूनं चेन्न च कारयेत् ।।**

उत्तराषाढमिश्रितं न कार्यम् ।

उत्तराषाढकणिका कलया यत्र दृश्यते ।
सा जयन्ती परित्याज्या शुना स्पृष्टं हविर्यथा ।।

उत्तराषाढमिलितं श्रवणद्वादशीव्रतम् ।
सुराया बिन्दुना स्पृष्टं तीर्थवत्तूभयं त्यजेत् ।।

उत्तरावेधरहितः श्रवणे द्वादशीयुतः ।
यदि व्याप्नोति मध्याह्नं कुर्यात्तस्यामुपोषणम् ।।

अस्यापवादः-

विष्णुऋक्षं यदा पूर्णं द्वादशी विषमा भवेत् ।
उपवासो न कर्तव्यो गार्ग्यस्य वचनं तथा ।।

विषमा मध्याह्नतो न्यूनेत्यर्थः ।

ह्रासे मध्यन्दिने श्रोणे नोपोष्या द्वादशीदिने ।
सम्पूर्णषष्ठिनाड्यां तु निःसन्देहमुपोषणम् ।।

द्वादश्यामुदयद्वन्द्वस्पर्शी श्रोणा भवेद्यदि ।
तथाऽप्युपवसेद्विष्णुतत्परो नेतरत्र तु ।।

तथा-

औदयात्पूर्णश्रवणं प्रभाते दृश्यते यदि ।
द्वादश्यामुपवासः स्यान्नेतरस्मिन्नुपोषणम् ।। इति

द्वादश्यामथ श्रोणायामुभयोः षष्ठिनाडिकाः ।
उपवासद्वयं कुर्यादन्यथा नरकं व्रजेत् ।। इति

नृसिंहपारिजाते नारदः-

द्वादशी तु जयायुक्ता श्रवणं चाष्टयामिकम् ।
उपवासः प्रयत्नेन कर्तव्यः स तु मे व्रतम् ।।

नारदः-

नभस्यैकदशी भद्रा मिश्रीभूता यदा भवेत् ।
श्रवणं तु द्वितीयेऽह्नि सम्पूर्णं दृश्यते नृप ।।

**त्रयोदश्यां च संयुक्तां द्वादशीं समुपोषयेत् ।**
**श्रवणेन समायुक्ता नाऽस्तं प्राप्नोति द्वादशी ।।**

**विजया श्रवणोपेता कर्तव्या नारदोऽब्रवीत् ।**
**सम्पूर्णा द्वादशी ज्ञेया जयायुक्ता भवेद्यदि ।।**
**प्रभायाः श्रवणस्यैव हर्याज्ञा परमेश्वरी ।।** इति

अत्रैव विष्णुपञ्चकव्रतारम्भः कार्यः । तथाचाऽह भविष्योत्तरे-

**प्रोष्ठपद्याः सिते पक्षे द्वादश्यां श्रवणं यदि ।**
**विष्णुपञ्चकमादद्याद् व्रतं मत्प्रीतये नरः ।।**

आद्यपञ्चकस्य विद्धत्वे व्रतारम्भो न कार्य इत्यस्य वाक्यस्य पर्वद्वयस्य विद्धत्वे अपि श्रोणावेधेऽस्य व्रतस्य वैष्णवत्वात्तदारम्भः कार्य इत्याहुः ।

**एकादशीद्वयं चैव दर्शश्चैवाऽथ पूर्णिमा ।**
**श्रवणर्क्षसमायुक्तमित्येतद्विष्णुपञ्चकम् ।।**

तथा-

**मध्याह्नव्यापिनी श्रोणा पौर्णमासी तु यामिका ।**
**उदयस्पर्शिनी दर्शा उपोष्या विष्णुतत्परैः ।।**

**दिनमानस्य तुर्यांशो याम इत्युच्यते बुधैः ।**
**याममात्रं भवेद्या तु पौर्णिमा वैष्णवो नरः ।।**

**उपावसेत्ततो न्यूनघटिकैका तिथिर्भवेत् ।**
**व्रती विद्धां नोपवासेत् पौर्णमासीममामपि ।।**

**अमावास्यां कलामात्रामवशिष्टामुपोषयेत् ।**
**भूतविद्धा नोपवसेत् पौर्णमासीममामपि ।।**

**उत्तरामिश्रिता श्रोणा नोपोष्या व्रतिनो भवेत् ।**
**नाऽपि मध्याह्नतो न्यूना लंघनार्हा भवेद्व्रते ।।**

**एकोनषष्ठिघटिका त्रयस्त्रिंशत्पलाधिका ।**
**श्रोणा च पौर्णमासी च नोपोष्या विष्णुतत्परैः ।।**

तथा-

**यदि शुद्धा पूर्वदिने चतुर्दश्या न विद्धयते ।**
**सूर्योदये तदा कुर्यादुपवासं व्रती नरः ।।**

तथा-

**दशम्यां श्रवणे प्राप्ते व्रतभीत्या युधिष्ठिर ।**
**उपोषणं यः करोति व्रतच्युतिमवाप्नुयात् ।**
**मृतो नरकमाप्नोति युगानां पञ्चविंशतिः ।।** इति

श्रवणर्क्षे विष्णुपञ्चकव्रतेऽपि आर्यभटो ग्राह्यः ।

**दशम्यां श्रवणर्क्षे तु आर्यभट्टमथोच्यते ।**
**तथैव विष्णुधर्मेषु एकादश्यां विशेषतः ।।** इत्युक्तेः

भाद्रपदशुक्लैकादशीद्वादश्योरन्यतरस्मिन् श्रवणयोगे 'विष्णुशृंखलसंज्ञा'। हेमाद्रौ मात्स्ये-

**एकादशी द्वादशी च वैष्णवव्यापि तच्च चेत् ।**
**तद्विष्णुशृंखलं नाम विष्णुसायुज्यकृद्भवेत् ।।** इति

**द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदि ।**
**स एव वैष्णवो योगो विष्णुशृंखलसंज्ञितम् ।।** इत्युक्तेश्च

अत्रैकादश्यामेव दुग्धव्रतं संकल्पयेत्, अत्रेदं चिन्त्यते । दुग्धव्रते पायसादि वर्ज्यं न वेति । नहि प्रकृतिवर्जने विकारवर्जनं युक्तम् । दधिघृतादीनामपि वर्जनापत्तेरिति । अत्रोच्यते । यत्र विकारे प्रकृतिरसोपलम्भः तत्प्रत्यभिज्ञायां तत्र विकारस्यापि निषेध इति । तस्मात्पायसे दुग्धरसोपलम्भाद्वर्जनम् । दध्यादिषु तदभावादवर्जनमिति । भाद्रपदशुक्लचतुर्दश्यामनन्तव्रतम् । तत्र त्रिमुहूर्ताप्यौदयिकी ग्राह्येति माधवः । 'उदये त्रिमुहूर्ताऽपि ग्राह्याऽनन्तव्रते तिथिः' इति माधवीयवचनात् ।

**तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम ।**
**पौर्णमास्याः समायोगे व्रतं वाऽनन्तकं चरेत् ।।** इति भविष्योक्तेः

**मुहूर्तमपि चेद्भाद्रे पौर्णिमायां चतुर्दशी ।**
**सम्पूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ।।** इति स्कान्दाच्च

**उदयव्यापिनी ग्राह्या मुहूर्तमपि या भवेत् ।**
**अन्यथैव त्रयोदश्या युक्ता ग्राह्या न चान्यथा ।।** इति

**वाराहे–**

**दिनद्वये व्यापिनी ग्राह्या मुहूर्तमपि या भवेत् ।**
**अन्यथैव त्रयोदश्या युक्ता ग्राह्या न चान्यथा ।।**

औदयिकीत्वे पूर्णत्वात्पूर्वैव–

**परविद्धैव कर्तव्या पूर्वविद्धा न कर्हिचित् ।**
**जयायुक्ता न कर्तव्या ह्यनन्तस्य चतुर्दशी ।।** इति विशेषवचनात्

अत्र द्व्यह्ने औदयिकत्वे पूर्णत्वात् पूर्वैवेति युक्तम् । भाद्रे पौर्णमास्यां प्रपिताम-हात्परान् त्रीन् पितृपितामहप्रपितामहानुद्दिश्य श्राद्धं कार्यम् । तदुक्तं ब्राह्ममा-र्कण्डेययोः–

**नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।**
**पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ।।** इति

प्रपितामहस्य पितृपितामहप्रपितामहानां नान्दीमुखनामकत्वं चोक्तं ब्राह्मे–

**पिता पितामहश्चैव तथैव प्रपितामहः ।**
**त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ।।**

**तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।**
**ते तु नान्दीमुखा नान्दीसमृद्धिरिति कथ्यते ।।**

तथा ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विति । एतत् श्राद्धं प्रत्यब्द मित्युक्तेः । पक्षश्राद्धपक्षे सकृन्महालयपक्षे चावश्यकमिति प्रयोगपारिजाते । अत्र मातामहा अपि पूज्याः । 'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि' इति धौम्योक्तेः । अत्र मातुः पितृपितामहप्रपितामहाः पूज्या इति केचित् । इदं सपिण्डकं श्राद्धमिति निर्णयदीपे–

**पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।**
**वर्जयित्वा प्रोष्ठपदीं यथा दर्शस्तथैव सा ।।** इति

तथाच अमावास्याश्राद्धवदेव प्रोष्ठपदीश्राद्धविधिः द्रष्टव्यः ।

## अथ महालयः

तत्र पृथ्वीचन्द्रोदये वृद्धमनुः-

**आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।**
**कांक्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ।।**

कन्यायोगे पुण्यतमत्वमाह, शाट्यायनिः- "कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्यमुच्यते" अत्र विशेषमाह वृद्धमनुः-

**मध्ये वा यादि वाऽप्यन्ते यत्र कन्यां व्रजेद्रविः ।**
**स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति ।।**

**तथा ब्रह्माण्डे-**

**कन्यागते सवितरि दिनानि दश पञ्च च ।**
**पार्वणेनेह विधिना श्राद्धं तत्र विधीयते ।।**

तत्रैव षोडशदिनान्युक्तानि ।

**कन्यागते सवितरि यान्यहानि तु षोडश ।**
**क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ।।**

अत्र हेमाद्रिः षोडशत्वं त्रेधा व्याचख्यौ । तिथिवृद्ध्या पक्षस्य षोडशदिनात्मकत्वे श्राद्धवृद्ध्यर्थमित्येकः पक्षः । भाद्रपौर्णिमया सहेति द्वितीयः । आश्विनशुक्लप्रतिपदा सहेति तृतीयः इति । अन्त्य एव तु युक्तः ।

**अहःषोडशकं यत्तु शुक्लप्रतिपदा सह ।**
**चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता ।।**

इति देवलोक्तेरिति निर्णयसिन्धौ । एकादशीश्राद्धस्यासत्वात्तद्व्यतिरेकेण प्रोष्ठपदीमारभ्य शुक्लप्रतिपत्पर्यन्तानि षोडशदिनानि ज्ञेयानि ।

**पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।**
**वर्जयित्वा प्रोष्ठपदीं यथा दर्शस्तथैव सा ।।**

इति निर्णयदीपे प्रोष्ठपद्या अपि दर्शतुल्यत्वोक्तेः ।

**नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।**
**पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ।।**

इत्यत्र प्रत्यब्दमित्यनेन पक्षश्राद्धे तस्या अप्यावश्यकतोक्तेः । एवञ्च कन्याराशि-स्थिते सूर्ये क्रमेण षोडशाहानि लभ्यन्ते ।

**कन्यागते सवितरि यान्यहानि तु षोडश ।**
**क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ।।**

इत्युक्तेरिति भाति, अत्र तत्त्वं विमृश्यम् । कालादर्शे विशेष उक्तः ।

**पक्षादि च दर्शान्तं पञ्चम्यादि दिगादि च ।**
**अष्टम्यादि यथाशक्ति कुर्यादपरपक्षिकम् ।।**

पक्षादिः प्रतिपत्, दिक् दशमी, दर्शान्तमिति सर्वात्रान्वयः । प्रतिपदादि दर्शान्तं, पञ्चम्यादि दर्शान्तं, अष्टम्यादि दर्शान्तं वा दशम्यादिदर्शान्तं इति । एवं यथाशक्ति अपरपक्षश्राद्धं कुर्यादिति । तथैकस्मिन्नपि दिने श्राद्धमुक्तं च हेमाद्रौ–

**आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।**
**यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ।।**
**तस्य संवत्सरं यावत् सन्तृप्ताः पितरो ध्रुवम् ।।** इति

सकृन्महालये वर्ज्यं तिथ्यादि उक्तम् माधवप्रयोगपारिजातादिषु वसिष्ठः–

**नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु ।**
**एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ।।**

जन्मनक्षत्रं तत्पूर्वोत्तरे चेति त्रिजन्मानि, जन्मनक्षत्रं तदपेक्षया दशमं एकोनविंशतिभं चेति त्रिजन्मानीति च ।

वृद्धगार्ग्यः-

**प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा ।**
**यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति ।।**

प्राजापत्यं रोहिणी, पौष्णं रेवती, पित्र्यं मघा ।

**त्रयोदशीचतुर्दश्योर्हानिर्धनकलत्रयोः ।**
**रेवती रोहिणी चैव विशाखा च पुनर्वसुः ।**
**त्रिरुत्तराऽपि सार्पेषु कुलक्षयकरं स्मृतम् ।।**

एतत्सर्वं सकृन्महालयविषयम् ।

**सकृन्महालये काम्ये पुनःश्राद्धेऽखिलेषु च ।**
**अतीतविषये चैव सर्वमेतद्विचिन्तयेत् ।।**

इति पृथ्वीचन्द्रोदयोक्तेः । अस्यापवादः हेमाद्रौ -

**अमापाते भरण्यां च द्वादश्यां पक्षमध्यके ।**
**तथा तिथिं च नक्षत्रं वारं च न विचारयेत् ।।** इति

निर्णयदीपिकायां तु पितृमृताहनि निषिद्धदिनेऽपि सकृन्महालयः कार्य इत्युक्तम्।

**आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।**
**मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः ।**
**तस्य संवत्सरं यावत् सन्तृप्ताः पितरो ध्रुवम् ।।** इति नागरखण्डोक्तेः

**या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते ।**
**सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः ।।**

**तिथिच्छेदो न कर्तव्यो विनाशौचं यदृच्छया ।**
**पिण्डश्राद्धं च कर्तव्यं विच्छित्तिं नैव कारयेत् ।।**

**अशक्तः पक्षमध्ये तु करोत्येकदिने यदा ।**
**निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि ।।** इति कात्यायनोक्तेश्च

पक्षश्राद्धकरणपक्षेऽपि न नन्दादिषु पिण्डनिषेध इत्याह कार्ष्णाजिनिः-

**नभस्यस्यापरे पक्षे श्राद्धं कुर्यात् दिने दिने ।**
**नैव नन्दादिवर्ज्यं स्यान्नैव निन्द्या चतुर्दशी ।।**

तथा–

**महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।**
**कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वापणं सदा ।।** इति

अत्र पक्षे श्राद्धासम्भवे गौणकालमाह यमः–

**हंसे कन्यासु वर्षास्थे शाकेनाऽपि गृहे वसन् ।**
**पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः ।।**

आश्विनकृष्णशुक्लपञ्चम्योर्मध्ये इत्यर्थः, तत्राप्यसम्भवे भारते–

**यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।**
**शून्यं प्रेतपुरं तावद् वृश्चिकं यावदागतः ।।**

**ब्राह्मे–**

**वृश्चिके समतिक्रान्ते पितरो देवतैः सह ।**
**निःश्वस्य प्रतिगच्छन्ति शापं दत्वा सुदारुणम् ।।** इति

इदं च श्राद्धं अन्नेनैव कार्यं न आमान्नादिना ।

**मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।**
**आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ।।** इति गालवोक्तेः

**अत्र देवताः संग्रहे–**

**ताताम्बात्रितयं सपत्नजननी मातामहादित्रयं**
**सस्त्रि स्त्रीतनयादि तातजननी स्वभ्रातरः [१]तत्स्त्रियः ।**
**ताताम्बात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः**
**शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ।।**

ताताम्बात्रितयं पितृत्रयो मातृत्रयी च । अत्र विशेषः स्मृतिदर्पणे गालवः–

---

१ सत्स्त्रियः इति पाठः साधुरिति केचित् ।

**अनेका मातरो यस्य श्राद्धे चापरपक्षिके ।**
**अर्घ्यदानं पृथक्कुर्यात् पिण्डमेकं तु निर्वपेत् ।।** इति

मातामहादित्रयं सस्त्रि स्त्रीसहितं मातामहानां सपत्नीकत्वेऽपि विभवे सति मातामहीनां पृथक्कार्यम् ।

**महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।**
**ज्ञेयं द्वादशदैवत्यं तीर्थे प्रौष्ठे मघासु च ।।**

इति निगमोक्तेरिति । हेमाद्रिमते तु अत्र नवदैवत्यमेव ।

**महालये गयाश्राद्धे वृद्धावन्वष्टकासु च ।**
**नवदैवत्यमत्रेष्टं शेषं षाट्पौरुषं विदुः ।।** इति विष्णुधर्मोक्तेः

तातभ्राता पितृव्यः, जननीभ्राता मातुलः, तत्स्त्रियः पितृव्यस्त्रीमातुलानी भ्रातृजायाः । पितृष्वसृमातृस्वसृभगिन्यः अपत्यभर्तृयुक्ताः । तेन सपत्यायै सधवायै इति प्रयोगो ज्ञेयः । एतासु सतीषु न तद्भर्त्रादिग्रहणम्, द्वारलोपात् । एवं च सकृन्महालयश्राद्धं सर्वदैवत्यम् । पक्षश्राद्धं सर्वदैवत्यं द्वादशदैवत्यं नवदैवत्यं वा इति ज्ञेयम् । अत्र पार्वणैकोद्दिष्टव्यवस्थोक्ता हेमाद्रौ-

**उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः ।**
**श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्शिष्यपोषकाः ।।**

**भगिनी स्वामिदुहितृजामातृभगिनीसुताः ।**
**पितरौ पितृपत्नीनां पितुर्मातुश्च या स्वसा ।।**

**सखिद्रव्यदशिष्याद्याः तीर्थे चैव महलये ।**
**एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः ।।** इति

इतरेषां पित्रादीनां पार्वणमर्थसिद्धम् । पित्रादिक्रमस्तु आश्वलायनेनोक्तः ।

**पित्रादयस्त्रयश्चादौ तिस्रो मात्रादयस्ततः ।**
**सापत्नजननीमातामहादयस्त्रयस्ततः ।।**

**मातामह्यादयस्तिस्रः स्त्रीसुतभ्रातरस्ततः ।**
**पितृव्यो मातुलश्चैव दुहिता भगिनी तथा ।।**

**दौहित्रो भागिनेयश्च पितुर्मातुश्च वै स्वसा ।**
**श्वशुरो गुरुरर्थी च मित्रश्चैवेति केचन ।।**

**पुत्रादयः सपत्नीकाः स्त्रियश्चैव हि केवलाः ।**
**तर्पणे विहिता तीर्थे गयायां च महालये ।।** इति

एकोद्दिष्टस्वरूपं चाह याज्ञवलक्यः-

**एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम् ।**
**आवाहनाग्नौकरणरहितं त्वपसव्यवत् ।।**

अत्र धूरिलोचनौ विश्वेदेवौ । ''अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ'' इति हेमाद्रावुक्तेः । एतच्च सन्यस्तपितृकादिना जीवत्पितृकेणापि कार्यम् ।

**वृद्धौ तीर्थे च सन्यस्ते ताते च पतिते सति ।**
**येभ्य एव पिता दद्यात् तेभ्यो दद्यात्सुतः स्वयम् ।।**

इति कात्यायनोक्तेः । एतच्च जीवत्पितृकेण पिण्डरहितं कार्यम् ।

**मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।**
**न जीवत्पितृकः कुर्याद् गुर्विणीपतिरेव च ।।**

इति दक्षेण पिण्डनिषेधात् । छागलेयः-

**पिण्डो यत्र निवर्तेत मघादिषु कथञ्चन ।**
**सांकल्पं तु तदा कार्यं नियमाद् ब्रह्मवादिभिः ।।**

सांकल्पस्वरूपञ्च वक्ष्यते । विधवायास्तु विशेषः स्मृतिसंग्रहे-

**चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैव हि ।**
**स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ।**
**ततो मातामहानां च श्राद्धदानमुपक्रमेत् ।।**

तथा-

**श्वश्रूणां च विशेषेण मातामह्यास्तथैव च ।।** इति

अशक्तौ तु स्मृतिरत्नावल्याम्-

**स्वभर्तृप्रभृति त्रिभ्यः स्वपितृभ्यस्तथैव च ।**
**विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ।।** इति

**स्वभर्तृपितृकस्त्रिभ्यः स्वपितृभ्यस्तथैव च ।**
**विधवा कारयेत् श्राद्धं दर्शे तीर्थे महलये ।।** इति

अत्र श्राद्धांगतर्पणं पक्षश्राद्धे प्रतिदिनं श्राद्धोत्तरम् । सकृन्महालये तु परेऽह्नि कार्यम्, तदुक्तं नारदीये-

**पक्षश्राद्धं यदा कुर्यात्तर्पणं तु दिने दिने ।**
**सकृन्महालये चैव परेऽहनि तिलोदकम् ।।**

गर्गोऽपि-

**पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ।।**

तथा प्रयोगपारिजाते गर्गः-

**कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।**
**पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ।**
**सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि ।।** इति

एतच्च श्राद्धं मलमासे न कर्तव्यम्, तदाह भृगुः-

**वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् ।**
**राज्याभिषेकं काम्यं च न कुर्यात् भानुलंघिते ।।**

**नभो वाथ नभस्यो वा मलमासो यदा भवेत् ।**
**सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः ।।**

[१]एतच्च पित्रोर्मरणे प्रथमाब्दे कृताकृतं इति भट्टाः । इदं च नित्यं, काम्यम् ।

---

१ दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम् ।
प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने ।।
अस्यापवादः- अस्थिक्षेपं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम् ।
प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः ।। इति श्राद्धकल्पलतायाम्

अकरणे शापं दत्वा सुदारुणम्' इति प्रत्यवायोक्तेः । पुत्रादिरूपफलश्रुतेश्च । अत्र भरण्यां श्राद्धं अतिप्रशस्तम् । उक्तं च मात्स्ये-

**भरणी पितृपक्षे तु महती परिकीर्तिता ।**
**अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ।।**

**बृहस्पतिः-**

**नभस्यापरपक्षस्य द्वितीया यदि याम्यभे ।**
**तृतीया वाग्निताराभिः सहिता प्रीतिदा पितुः ।।** इति

भरणीश्राद्धं षड्दैवत्यम्-

**दर्शे नित्ययुगादौ च मन्वादौ ग्रहणे तथा ।**
**संक्रान्तिषु भरण्यां च षड्दैवत्यं विधीयते ।।** इति

अत्र विशेषः ।

**आनन्दयोगः पञ्चम्यां यमर्क्षस्थे दिवाकरे ।**
**भोजयेद्यः पितॄंस्तत्र पुत्रपौत्रधनं लभेत् ।।**

एतत्पक्षे षष्ठियोगविशेषे कपिलासंज्ञा, तदुक्तं वाराहे-

**नभस्य कृष्णपक्षे तु रोहिणी पातभूसुतैः ।**
**युक्ता षष्ठी पुराणज्ञैः कपिला परिकीर्तिता ।।**

**दिवैव योगः शस्तोऽयं सूर्यपर्वशताधिकम् ।**
**योगः स्याद्यदि चेद्रात्रौ चन्द्रषष्ठीति सा स्मृता ।।** इति पुराणसमुच्चये ।

**भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते ।**
**पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ।।**

हस्तार्कस्तु फलातिशयार्थः । ''संयोगे तु चतुर्णां वै निर्दिष्टा परमेष्ठिना'' इति तत्रैवोक्तेः । पृथ्वीचन्द्रोदये-

**आषाढ्याः पञ्चमे पक्षे गया [१]मध्याष्टमी स्मृता ।**
**त्रयोदशी गजच्छाया गयातुल्या तु पैतृके ।।**

१ ''माध्याष्टमी'' इति निर्णयसिन्धुः ।

अथ अविधवानवमी श्राद्धम्, इदञ्च जीवत्पितृकेणाऽपि कार्यम्, तदुक्तं निर्णयामृते–

**आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।**
**मातुः श्राद्धं सुतः कुर्यात् पितर्यपि च जीवति ।।** इति

इदञ्च पार्वणश्राद्धम् ।

**आन्वष्टक्यञ्च यन्मातुः गयाश्राद्धं महालये ।**
**पितृपत्नीषु च श्राद्धं कार्यं पार्वणवद्भवेत् ।।** इति बृहन्मनूक्तेः

अत्र अनेकमातृपक्षे सर्वासां नामनिर्देशेन एको ब्राह्मणोऽर्घ्यः पिण्डश्च । ''मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति'' इति वचनान्तराच्च, इति निर्णयसिन्धौ, अन्यत्र तु–

**अनेका मातरो यस्य श्राद्धे चापरपक्षिके ।**
**अर्घ्यं चैव पृथग्दद्यात्पिण्डमेकं तु निर्वपेत् ।।**

इत्यर्घ्यस्य पृथक्त्वमुक्तम् ।

**सर्वासामेव मातृणां श्राद्धं कन्यागते रवौ ।**
**नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ।।**

इति सूत्रोक्तत्वात् सर्वासामपि मातृणां श्राद्धं कार्यम् । भर्तृमरणोत्तरं नवमीश्राद्धं न कार्यम् । [१]''श्राद्धं नवम्यां यः कुर्यान्मृते भर्तरि लुप्यते'' इत्युक्तेः । इदञ्च

१ अत्र भर्तृमरणोत्तरं पूर्वमृतमातृश्राद्धं न कार्यमिति केचिदाहुः । पठन्ति च श्राद्धं नवम्यां कुर्यात्तन्मृते भर्तरि लुप्यते इति, तदेतन्निर्मूलत्वान्मूर्खप्रतारणमात्रम् । श्राद्धदीपकलिकायां ब्राह्मे पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः । श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रदीयते । इति । अत्र देशाचाराद् व्यवस्था । इति निर्णयसिन्धुः ।

सर्वासामेव सौभाग्यवतीनामस्यां नवम्यां श्राद्धं कार्यम्, भर्तुरग्रे मृतानां तत्तद्भर्तृमरणोत्तरं च न कार्यम्, अत एवास्या अविधवानवमीत्वप्रसिद्धिः ।। इति धर्मसिन्धुः ।

''मृते भर्तरि लुप्यते'' इत्यस्याकरोऽनुपलब्ध इति निर्णयसिन्धुः । परन्तु प्रमाणवचनमिदं व्याघ्रपादस्मृतावुपलभ्यते तदवधेयम् ।

न जीवत्पितृकः कुर्याच्छ्राद्धं मातृक्षयादृते ।
क्रान्ते च नवमीश्राद्धं मृते भर्तरि लुप्यते ।। इति व्याघ्रपादस्मृतिः १२९ ।।

अनुपनीतेनापि कार्यम् । तदुक्तं मात्स्ये- ''अमावास्याष्टका कृष्णपक्षे पञ्चदशीषु च'' इत्यभिधाय एतच्च अनुपनीतेनापि कुर्यात् सर्वेषु पर्वसु ।

**श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ।**
**भार्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः ।।**
**शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना बुधः ।।** इति

इदं जीवत्पितृकेणाऽपि सपिण्डकं कार्यम् । विष्णुधर्मोत्तरे-

**अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च ।**
**पिण्डनिर्वपणं कार्यं तस्यामपि नृसत्तम ।।** इति

अत्र सुवासिनीभोजनमुक्तं मार्कण्डेये-

**मातुः श्राद्धे तु सम्प्राप्ते ब्राह्मणैस्सह भोजनम् ।**
**सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् ।।**

**पितामहः- अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।**
**विप्रः श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ।।**

एतत्पक्षे द्वादश्यां विशेष उक्तः वायवीये-

**[१]यतीनां तु वनस्थानां वैष्णवानां विशेषतः ।**
**द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषतः ।।** इति

अथ मघात्रयोदशी चन्द्रिकायाम्-

**त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया ।**
**तृप्यन्ति पितरस्तस्यां स्वयं पञ्चशतं समाः ।।**

**मघायुतायां तस्यां तु जलाद्यैरपि तोषिताः ।**
**तृप्यन्ति पितरस्तद्वद्वर्षाणामयुतायुतम् ।।**

---

१ सन्यासिनामपरपक्षश्राद्धमपरपक्षद्वादश्यां पार्वणविधानेन कर्तव्यम् । तदुक्तं वायुपुराणे-
सन्यासिनोऽप्याब्दिकानि पुत्रः कुर्याद्यथाविधि ।
महालये तु तच्छ्राद्धं द्वादश्यां पार्वणं भवेत् ।। इति ।।
इदं हंसविषयम् । ''परमहंसे न किञ्चन'' इत्यादिस्मृतेः । इति स्मृतिमुक्तावली

शंखः- **हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी ।**
**तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु ।।**

**अपि नः स्वकुले भूयाद्यो नो दद्यात् त्रयोदशीम् ।**
**पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ।।** इति

एतत्पिण्डरहितं कार्यम् ।

**मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः ।**
**ससन्तानो नैव कुर्यान्नित्यं ते कवयो विदुः ।।** इति बृहत्पराशरोक्तेः

**पिण्डदानं न कुर्वीत युगादि भरणी मघे ।**
**ज्ञेयं द्वादशदैवत्यं प्रौष्ठपद्यां मघासु च ।।** इत्युक्तेः

इदं मलमासेऽपि कार्यम्, ''मघात्रयोदशीश्राद्धं कर्तव्यं स्यान्मलिम्लुचे'' इति काठकगृह्योक्तेः, यत्तु-

**त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः ।**
**पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम् ।।**

इत्यादि त्रयोदशीश्राद्धनिषेधकं तत् पुत्रवद्विषयकम्, पुत्रवतः महालयनिषेधकं वा ।

**असन्तानस्तु यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी ।**
**सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत् ।।** इति हेमाद्रावुक्तेः

अत्र त्रयोदशीश्राद्धनिषेधकानि पुत्रवतः महालयनिषेधकानि । नापुत्रवतः तस्य सपिण्डकमेव श्राद्धम् । मघायुक्तश्राद्धं तु ससन्तानस्य अपिण्डकम् । असन्तानस्य तु सपिण्डकमिति विवेकः । वाराहे-

**श्राद्धाहेषु च सर्वेषु वरिष्ठा सा त्रयोदशी ।**
**पिण्डदानेन जायन्ते पितरः प्रीतमानसाः ।।**

अत्र मघात्रयोदशी महालययुगादिश्राद्धानां तन्त्रेण प्रयोगः । न तु प्रसंगसिद्धिरिति ज्ञेयम् ।

# अथ घातचतुर्दशी

**पृथ्वीचन्द्रोदये प्रचेताः–**

**वृक्षारोहणलोहाद्यैः विद्युज्जलविषाग्निभिः ।**
**नखिदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी ।।**

**नागरखण्डे–**

**अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।**
**श्राद्धं तेषां प्रकर्तव्यं चतुर्दश्यां नराधिप ।।**

एतच्च उदकोद्बन्धनप्रपतनादिदुर्मरणोपलक्षणम् । एकयोगनिर्देशात् ।

**सर्वेषां तुल्यधर्माणामेकस्यापि यदुच्यते ।**
**सर्वेषां तत्समं ज्ञेयं एकरूपा हि ते स्मृताः ।।** इत्युक्तेः

अत्र स्त्रीणामपि शस्त्रादिहतानामेकोद्दिष्टं कार्यमिति श्रीदत्तः । इदं विषादि-हतानामेव, न प्रसवादिमृतानामिति वाचस्पतिः । एतच्च श्राद्धमेकोदिष्टं दैवयुक्तं कार्यमित्युक्तं प्रयोगपारिजाते–

**प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टं विधानतः ।**
**दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत् ।।**

**तच्छ्राद्धं दैवहीनं चेत्पुत्रदारधनक्षयः ।**
**एकोद्दिष्टं दैवयुक्तमित्येवं मनुरब्रवीत् ।।**

**भविष्ये–** **समत्वमागतस्यापि पितुःशस्त्रहतस्य च ।**
**चतुर्दश्यां तु कर्तव्यमेकोद्दिष्टं महालये ।।**

**चतुर्दश्यां तु यच्छ्राद्धं सपिण्डीकरणे कृते ।**
**एकोद्दिष्टविधानेन तत्कार्यं शस्त्रघातिनः ।।** इति

हारीतः– **विश्वेदेवांश्च तत्रापि पूजयित्वादितोऽमरान् ।**
**ये वै शस्त्रहतास्तेषां श्राद्धं कुर्यादतन्द्रितः ।।** इति

अत्र शस्त्रहतस्यैव चतुर्दश्यामिति नियमः, नतु चर्तुदश्यामेव शस्त्रहतस्येति । ''श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये'' इति कालादर्शात् । वार्षिकादीनाम-

करणापत्तेश्च इति । अत्र पितामहोऽपि शस्त्रहतश्चेदेकोद्दिष्टद्वयं कार्यम् । त्रिषु शस्त्रहतेषु पार्वणमेव कार्यम् ।

**पित्रादयस्त्रयो यस्य शस्त्रैर्यातास्त्वनुक्रमात् ।**
**स भूते पार्वणं कुर्यादाब्दिकानि पृथक् पृथक् ।।** इति बृहत्पाराशरोक्तेः

**एकस्मिन्वा द्वयोर्वाऽपि विद्युच्छस्त्रेण वा हते ।**
**एकोद्दिष्टं सुतः कुर्यात् त्रयाणां दर्शवद्भवेत् ।।**

इति बृहत्पराशरोक्तेः, अमायां विशेषमाह अपरार्के, यमः-

**हंसे करस्थिते या तु अमावास्या करान्विता ।**
**सा ज्ञेया कुञ्जरच्छाया इति बोधायनोऽब्रवीत् ।।**

**वनस्पतिगते सोमे छाया या प्राङ्मुखी भवेत् ।**
**गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ।।**

आश्विनशुक्लप्रतिपदि दौहित्रस्य मातामहश्राद्धमुक्तं हेमाद्रौ संग्रहे च-

**जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।**
**कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ।।** इति

इयं संगवव्यापिनी ग्राह्या इति निर्णयदीपे उक्तम् ।

**प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।**
**श्राद्धं मातामहं कुर्यात्सपिता संगवे सदा ।।**

**जातमात्रोऽपि दौहित्रो जीवत्यपि च मातुले ।**
**प्रातः संगवयोर्मध्ये आर्यस्य प्रतिपद्भवेत् ।।** इति

इदं च जीवपितृकेणैव कार्यम्, ''सपिता संगवे'' इत्युक्तेः । इदं च शिष्टाचारात् सपिण्डकं कार्यमिति केचित्, पिण्डरहितं तु युक्तं जीवपितृकस्य ।

**मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।**
**न जीवपितृकः कुर्यात् गुर्विणीपतिरेव च ।।**

इति दक्षेण पिण्डनिषेधात्, अन्वष्टक्यवत् विशेषवचनाभावाच्च, वार्षिकं तु वचनाद्भविष्यति ।

# अथ अश्विनमासः

अश्विनशुक्लप्रतिपदि नवरात्रारम्भः । इयं प्रतिपत् अमायुक्ता न ग्राह्या । मार्कण्डेये–

**पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी ।**
**नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता ।।**

**देशभंगो भवेत्तत्र दुर्भिक्षं चोपजायते ।**
**नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम् ।।**

**न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने ।**
**उदये द्विमुहूर्ताऽपि ग्राह्या सोदयगामिनी ।।** इति देवीपुराणे

**या चाश्वयुजि मासे स्यात् प्रतिपद्भद्रयान्विता ।**
**शुद्धा ममार्चनं तस्यां शतयज्ञफलप्रदम् ।।**

**रुद्रयामले च–**

**अमायुक्ता सदा चैव प्रतिपन्निन्दिता मता ।**
**तत्र चेत्स्थापयेत्कुम्भं दुर्भिक्षं जायते ध्रुवम् ।**
**प्रतिपत्सद्द्वितीया तु कुम्भारोपणकर्मणि ।।**

यदा तु पूर्वदिने सम्पूर्णा दर्शयोगरहिता च भूत्वा परदिने किञ्चित् वर्धते प्रतिपत् तदा पूर्वैव, सम्पूर्णत्वात् अमायोगाभावाच्च । तस्यां प्रतिपदि ।

**आद्याः षोडशनाडीस्तु लब्ध्वा यः कुरुते नरः ।**
**कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम् ।।** इति देवीपुराणे

आद्यषोडशघटीषु कलशस्थापननिषेधात् । आद्यषोडशद्वादश वा नाडिकाः त्यक्त्वा अपराह्णे कलशं स्थापयेत् ।

**शुद्धे तिथौ प्रकर्तव्या प्रतिपच्चोर्ध्वगामिनी ।**
**आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा ।**
**अपराह्णे च कर्तव्यं शुद्धसन्ततिकांक्षिभिः ।।** इति वचनात्

यानि च

**द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने ।**
**मोहादथोपदेशाद्वा कृतं पुत्रविनाशनम् ।।**

इत्यादीनि द्वितीयायोगनिषेधकानि, तानि दर्शयोगरहितसम्पूर्णप्रतिपत्सत्व-पराणीति ज्ञेयम् । परदिने प्रतिपदोऽत्यन्तासत्वे तु दर्शयुताऽपि पूर्वैव ग्राह्या, तदाह लल्लः- "तिथिः शरीरं तिथिरेव कारणं तिथिः प्रमाणं तिथिरेव साधनम्" इति प्रमुखे तु प्रतिपत्पूर्वाह्णव्यापिनी ग्राह्या ।

**आश्विनस्य सिते पक्षे नवरात्रमुपोषितः ।**
**सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेत् शिवाम् ।।** इति देवीपुराणे

तस्य कर्मकालतोक्तेः । अमायोगनिषेधकानि द्वितीयायोगनिषेधकानि उभय-विधान्यापि वाक्यानि हेमाद्र्याद्यलिखितत्वेन निर्मूलानि परस्परसत्प्रतिपक्षत्वा-दनिर्णायकानीत्युक्तम् इति । प्रतिपदि वैधृत्यादियोगनिषेधो भार्गवार्चनदीपिकायां-

**त्वाष्ट्रवैधृतियुक्ता चेत् प्रतिपच्चण्डिकार्चने ।**
**तयोरन्ते विधातव्यं कलशारोपणं गृहे ।।**

चित्रावैधृतियुतापि द्वितीयायुता चेत् सैव ग्राह्येत्युक्तम्, दुर्गोत्सवे-

**भद्रान्विता चेत् प्रतिपत्तु लभ्यते विरुद्धयोगैरपि संगता सती ।**
**सैवापराह्णे विविधैर्विधेया श्रीपुत्रराज्यादिविवृद्धिहेतुः ।।** इति

यदा तु वैधृत्यादिपरिहारेण प्रतिपत् न लभ्यते । तदोक्तं कात्यायनेन-

**प्रतिपद्याश्विने मासि भवेत् वैधृतिचित्रयोः ।**
**आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम् ।।** इति

**मात्स्ये-**

**सम्पूर्णा प्रतिपद्देव चित्रायुक्ता यदा भवेत् ।**
**वैधृत्या वापि युक्ता स्यात्तदा मध्यन्दिने रवौ ।**
**अभिजित्तु मुहूर्तं यत् तत्र स्थापनमिष्यते ।।**

कलशस्थापनं तु दिवैव । "न रात्रौ स्थापयेत्कुम्भं न च कुम्भाभिषेचनम्, इति तत्रैवोक्तेः ।

**भास्करोदयमारभ्य यावत्तु दशनाडिकाः ।**
**प्रातःकाल इति प्रोक्तः स्थापनारोपणादिषु ।।** इति विष्णुधर्मोत्तरे

अत्रोपवासादिकमुक्तं हेमाद्रौ-

**एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः ।**
**एकभुक्तेन नक्तेन तथैवायाचितेन च ।।**

**पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।**
**गृहे गृहे शक्तिपरैः ग्रामे ग्रामे वने वने ।।**

तच्च पूजनं रात्रौ कार्यम् ।

**आश्विने मासि मेघान्ते प्रतिपद्या तिथिर्भवेत् ।**
**तस्यां नक्तं प्रकुर्वीत रात्रौ देवीं प्रपूजयेत् ।।**

केचित्तु नायं नियमः, ''त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः'' इत्युक्तेरित्याहुः । अत्र नवरात्रे वेदपारायणमप्युक्तं रुद्रयामले-

**एवं चतुर्वेदविदो विप्रान् सर्वान् प्रसादयेत् ।**
**तेषां च वरणं कार्यं वेदपारायणाय वै ।।** इति, तथा

**एकोत्तराभिवृद्ध्या तु नवमी यावदेव हि ।**
**चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः ।।**

**वाराहे च-**

**इषशुक्लप्रतिपदमारभ्य नवमीदिनम् ।**
**यावत्तावत् महापुण्यं दिनानां नवकं स्मृतम् ।।**

**तस्मिन् कस्यापि मन्त्रस्य यां काञ्चिद्देवतां प्रति ।**
**जपोऽयं क्रियते तस्मिन् सफलः स भवेद् ध्रुवम् ।।**

**अन्यदा यत्कृतं स्नानं दानहोमौ जपादिकम् ।**
**तस्मिंस्तु नवके तत्स्यात् सर्वलक्षणसंयुतः ।।**
**नरः कुर्वीत यत्नेन फलं बहुगुणं भवेत् ।।**

तथा **आधारे स्थापयित्वा तु पुस्तकं पूजयेत्सुधीः ।**
**हस्तसंस्थापनादेव यस्माद्वै विफलं भवेत् ।।**

अत्र विशेषो हेमाद्रौ-

**यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम् ।**
**द्विगुणं तद्द्वितीयेऽह्नि त्रिगुणं तत्परेऽहनि ।।**
**नवमीतिथिपर्यन्तं वृद्ध्या पूजादिकं भवेत् ।।** इति

तथा कन्यापूजा चोक्ता ।

**एकैकां पूजयेत्कन्यां एकवृद्ध्या तथैव च ।**
**एकवर्षा तु या कन्या पूजार्थे तां विवर्जयेत् ।।**

तिथिह्रासे तु तिथिद्वयनिमित्तं पूजादि महालयश्राद्धवदेकदिने आवृत्या कार्यम् । वृद्धौ तद्वदेवावृत्तिः । स्वस्योपवासपूजाद्यशक्तौ नवरात्रोपवासादिसंकल्पं कृत्वा अन्येन कारयेत्, 'स्वयं वाऽप्यन्यतो वाऽपि पूजयेत्पूजयीत वा' इति देवीपुराणात् । इदं देवीपूजनं शुक्रास्तादावपि कार्यम्, तदुक्तं धर्मप्रदीपे-

**नष्टे शुक्रे तथा जीवे सिंहस्थे च बृहस्पतौ ।**
**कार्या चैव स्वदेव्यर्चा प्रत्यब्दं कुलधर्मतः ।।**

मलमासे तु वचनाभावान्न भवति । अत्र स्त्रीव्रते विशेषः परिभाषायां ज्ञेयः । अथाशौचे विशेषो निर्णयामृते-

**आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके ।**
**शावाशौचे समुत्पन्ने क्रिया कार्या कथं बुधैः ।।**

**सूतके वर्तमाने च तत्रोत्पन्ने सदा बुधैः ।**
**देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः ।।**

**सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।**
**देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यत ।।** इति कालादर्शे

**पूर्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः ।**
**तत्कर्तव्यं नरैः शुद्धं दानार्चनविवर्जनम् ।।** इति

आरब्धं स्वयमेव कार्यम्, अनारब्धं तु अन्येन कारयेदिति दिवोदासः । रजस्वला तु अन्येन कारयेत् सूतकादिवद्विशेषवचनाभावात् । स्त्रीणां च नवरात्रे ताम्बूलादिचर्वणं भवति, उक्तश्च गारुडे-

**गन्धालंकारताम्बूलपुष्पमालानुलेपनम् ।**
**उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ।।** इति

एतत् सभर्तृकोपवासविषयम् । अन्यो विशेषः परिभाषायामुक्तः । आश्विन-शुक्लपक्षे मूलानक्षत्रे पुस्तकस्थापनं कार्यमित्युक्तं निर्णयामृते-

**मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम् ।**
**उत्तरासु बलिं दद्यात् श्रवणेन विसर्जयेत् ।।**

**रुद्रयामलेऽपि-**

**मूलऋक्षे सुराधीश पूजनीया सरस्वती ।**
**पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम् ।।**

**नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।**
**पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः ।।**

मूलस्याद्यपादे आवाहनमिति शिष्टाः, श्रवणाद्यपादे च विसर्जयेत् ।

**आदिभागो निशायां तु श्रवणस्य यदा भवेत् ।**
**संप्रेषणं तदा देव्या दशम्यां च महोत्सवः ।।**

इति ब्रह्माण्डपुराणे । [१]''मूलेनावाहयेद्देवीं श्रवणादौ विसर्जयेत्'' इत्युक्तेश्च ।

---

१ अत्र कानिचित्प्रमाणचनानि पञ्चरात्रागमोक्ततिथिनिर्णये एकोनसप्ततितमेऽध्याये सन्ति तानि यथा-

मूलेनावाहयेद्देवीमष्टम्यां विष्णुतत्परः ।
पूजयेद्विधिना मर्त्यो लभते वैष्णवं पदम् ।।६९.१४।।
मूले चावाहयेद्देवीं श्रवणान्ते विसर्जयेत् ।
सूर्योदये यदा मूला तदा आवाहनं स्मृतम् ।।६९.१५।।
रात्रौ तु व्यापिनी मूला नैव ग्राह्या कदाचन ।
सूर्योदये यदा शून्या रात्रौ मूला यदा भवेत् ।।६९.१६।।
तदा परदिने देवीं मूले चावाहयेद् द्विजः ।

अत्र प्रतिपदादिनवतिथिषु उपवासादिकरणासामर्थ्ये सप्तम्यादिदिनत्रये वा कुर्यात् । तदाह धौम्यः-

**आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम् ।**
**प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ।**
**त्रिरात्रं वाऽपि कर्तव्यं सप्तम्यादि यथाक्रमम् ।।**

अत्रैकरात्रमप्युक्तं देवीपुराणे-

---

यदा कदापि मूलायामावाह्यात्रैव पूजयेत् ।।६९.१७।।
आदौ मध्ये तथा चान्ते तथा सन्धिषु लभ्यते ।
तदा आवाह्य सम्पूज्य श्रवणन्ते विसर्जयेत् ।।६९.१८।।
ब्रह्मणा सहितां देवीं मत्समीपे समर्चयेत् ।
आवाहनविधिं वक्ष्ये श्रुणुष्व कमलासन ।।६९.१९।।
सरस्वतीं महाभागामावाह्यादौ तदन्तरे ।
ब्रह्माणं वायुसहितमावाह्यान्तर्गतां रमाम् ।।६९.२०।।
रमां चावाह्य भक्त्या तु तस्यां नारायणं परम् ।
वेदव्यासं तथा दत्तं कपिलं हरिणीपतिम् ।।६९.२१।।
महिदासं महाभागं नरसिंहं जगत्पतिम् ।
ध्यानमन्त्रेण एतान्वै आवाह्यात्रैव पूजयेत् ।।६९.२२।।
सच्छास्त्रं भारतश्चैव श्रीमद्भाग्वतं तथा ।
अष्टादशपुराणनां रहस्यं पञ्चरात्रकम् ।।६९.२३।।
एतत्पुस्तकमादाय स्थापयित्वा यथार्थतः ।
धन्वन्तरिश्च देवेशं सर्वानेतान्समाहितः ।।६९.२४।।
आवाह्य पुस्तके तस्मिन् पूजयेत्पुरुषेण च ।
सूक्तेन पूजयेद्विद्वान् हरिण सहितं परम् ।।६९.२५।।
पुस्तकं पूजयेद्यस्तु मुक्तो मोक्षपथं व्रजेत् ।
देवीपूजा प्रकर्तव्या नात्र कार्या विचारणा ।।६९.२६।।
वागत्मिका महादेवी विष्णोर्देवस्य नामता ।
सरस्वती त्रिलोकेषु गीयते मुनिभिः परम् ।।६९.२७।।
तस्मात्सरस्वतीपूजा विष्णुना सह कारयेत् ।
नहि देवी ब्रह्मपत्नी अभिमन्नेन सा स्थिता ।।६९.२८।।
तारतम्येन सा पूज्या नहि मुख्यत्वतः सुत ।
तस्माद्विष्णुं परं देवमावाह्यात्रैव पूजयेत् ।।६९.२९।।

नवरात्रव्रतेऽशक्तः त्रिरात्रश्चैकरात्रकम् ।
व्रतं चरति यो भक्तः तस्मै दास्यामि वाञ्छितम् ।।

युधिष्ठिर उवाच–

कस्मिन् काले महादेवी पूज्या पुस्तकधारिणी ।
विद्यामूर्तिर्वरास्माकमाख्याहि त्वं व्रतं शुभम् ।।

भीष्म उवाच–

अहो वदामि वै देव्याः पूजां सर्वसमृद्धिदाम् ।
सर्वदा पूजयेद्देवीं भारतीं सर्वमातरम् ।।

महानवम्यां प्रातस्तु पूजां कुर्वीत यत्नतः ।
प्राप्ते चाश्वयुजे मासे शुक्लपक्षे समुद्भवा ।।

या तिथिर्नवमी प्रोक्ता सा महानवमी स्मृता ।
उषस्यथाचरेत्तत्र तत्तिथौ च सुधीः पुमान् ।।

आचरिष्ये जगत्पूज्यां शारदां विशदप्रभाम् ।
सितपद्मासनां देवीं त्रिपक्षां शशिभूषणीम् ।।

विद्यामूर्तिं विशालाक्षीं मौक्तिकादामभूषिताम् ।
वज्रवैडूर्यवलयां नानाभूषासमन्विताम् ।।

इति ध्यात्वा तु संकल्प्य स्नात्वा तु सुसमाहितः ।
आवाह्य पूजयेद्देवीं विद्यापुस्तकमण्डले ।।

मेधादेव्यनुवाकेन ह्युपचारान् प्रकल्प्य च ।
अर्चयेत् प्रयतः प्रातः तिलपायससर्पिषा ।।

मेधादेव्यनुवाकेन प्रत्यृचं जातशाल्मली ।
शालायां देवतायाश्च गृहमध्येऽथ वा बुधः ।।

पूजितायां तु भारत्यामेतेन विधिना नृप ।
पूजकस्य च ये कामास्ते सर्वे वशवर्तिनः ।।

सेवन्ते तं नृपश्रेष्ठ सेवका इव हि ध्रुवम् ।
ब्राह्मणान् भोजयेद्भक्त्या स्वयं भुञ्जीत वाग्यतः ।।

विप्राग्निहुतशेषेण तुरंगान् भोजयेद्व्रती ।
अर्चयेदात्मरक्षार्थं शुभैर्नीराजनादिभिः ।।

अस्य व्रतस्य माहात्म्यं को वदेत सुधीः पुमान् ।
सोमदत्ते पुरा दृष्टं व्रतस्य सुमहत्फलम् ।।

युधिष्ठिर उवाच–

सोमदत्ते यथा दृष्टं भवता व्रतमुत्तमम् ।

इति शेषधर्मे त्रिचत्वारिंशदध्याये । तथा विष्णुतीर्थीये–

एवं ह्याश्वयुजे मासे नवम्यां सितपक्षके ।
ग्रन्थानेकत्र संस्थाप्य वस्त्रे सञ्छाद्य सर्वशः ।।

व्यासं परशुरामं च पूजयेत्तेषु भक्तितः ।
द्वाविंशभेन यद्युक्ता उपवासो विधीयते ।।

बादरिं जैमिनिं चैव सुमन्तुं वैशम्पायनम् ।
अश्मरथ्यं च पैलं च काशकृत्स्नं च लोमशम् ।।

पुरैता लोकपालेभ्यो यजेद् व्यासस्य शिष्यकान् ।
प्रतिमायां चैवमेव यजेदेता हरेस्तनूः ।।

यजनं परिवाराणामेकदा वा भवेद्द्वयोः ।
विद्यां भक्तिं गुरौ विष्णौ तयोरात्मन्यनुग्रहम् ।।

वृण्वीत वरमर्चा तु प्रातरप्येवमिष्यते ।
एवं हरिं समानर्च्य सुनित्यानित्ययोगतः ।।

अनूचानो वैष्णवानां ग्रन्थानां प्रीणयेद्धरिम् ।
विद्यादानेन भक्त्या च पूजाध्यानजपैः सदा ।
नतिस्तुतिभ्यां कृष्णोऽस्य सुप्रीतो मुक्तिदो भवेत् ।। इति

अत्रायं विशेषः सम्प्रदायप्राप्तः । सच्छास्त्रपुस्तकेषु सरस्वतीभारती अभिमानित्वेन ध्यात्वा, तत्र तेजोमयप्रतिमां ध्यात्वा, तत्र श्रीवेदव्यासं, हयग्रीवं, दत्तात्रेयं, परशुरामं, महिदासं, ऐतरेयं च तत्तन्मंत्रैरावाह्य, 'ग्रहा वै प्रतिष्ठासूक्तम्' इति प्रतिष्ठाप्य, प्रत्यहं षोडशोपचारैः पूजयेत् । एवं पुष्पमहानैवेद्यादिभिः सम्पूज्य श्रवणादिभागे ''उत्तिष्ठ ब्रह्मणस्पते'' इति विसर्जयेत् ।

**वेदव्यासं हयग्रीवं दत्तात्रेयं च भार्गवम् ।**
**आवाहयेत्पुस्तकेषु महिदासं च नामभिः ।।** इति श्लोकः

अथ तिथियौगपद्ये तन्त्रेणोपवासः । तिथिद्वयनिमित्तं पूजादिकं तु भेदेन इति ज्ञेयम् । महानवमी तु पूर्वयुता ग्राह्या ।

**श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।**
**पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ।।** इति पाद्मोक्तेः

वेधश्च मुहूर्तत्रयैणैव ज्ञेयः । तेन अष्टम्यां सायं त्रिमुहूर्तं नवमीयोगे पूर्वा नवमी पूर्वोक्तवचनात् । ''न कुर्यान्नवमीं तात दशम्यां तु कदाचन'' इति स्कान्दे परनिषेधाच्च । त्रिमुहूर्तयोगाभावे तु निषिद्धापि परैव कार्या इति निष्कर्षः इति निर्णयसिन्धौ । अन्ये तु–

**आश्वयुक् शुक्लनवमी अनन्तस्य चतुर्दशी ।**
**जयायुक्ता न कर्तव्या पूर्णायुक्ता प्रशस्यते ।।**

**जयायुक्ता न कर्तव्या संगवं स्पृश्यते यदि ।**
**संगवात्तु भवेन्न्यूनं जयायुक्तां तु कारयेत् ।।** इत्याहुः

अत्र नवम्यामेव दुर्गापूजनबलिदानादि कार्यम् । नवम्यां च जपं होमं समाप्य श्रवणेऽपि वा । इति संग्रहोक्तेः । व्रतञ्च जागरश्चैव नवम्यां विधिवद्बलिः । इति देवीपुराणाच्च ।

**नवम्यामपराह्णे तु बलिदानं प्रशस्यते ।**
**दशमीं वर्जयेत्तत्र नात्र कार्या विचारणा ।।** इति ब्रह्मवैवर्ते

**कालिकापुराणे च–**

**नवम्यां बलिदानं तु कर्तव्यं तु यथाविधि ।**
**जपं होमं च विधिवत् कुर्यात्तत्र विभूतये ।।** इति

तेन नवम्यामुपक्रम्य नवम्यामेव समापयेत् । केचित् अष्टम्यामारभ्य नवम्यां समापयन्ति, तत्र शिष्टाचार एव मूलम् । होमे च विशेष उक्तः ।

**रुद्राध्याये यथा होमं मंत्रेणैकेन साधयेत् ।**
**तथा स्तोत्रजपे होमं श्लोकेनैकेन साधयेत् ।।** इति

## अथ नवरात्रपारणा

सा च दशम्यां कार्या, प्रतिपदादिक्रमेण नवमीपर्यन्तं वृद्ध्या पूजाजपादेः प्रधानकर्मणः पूर्वोक्तवचनेषु उक्तत्वात्, उपवासादेश्चांगत्वेन नवमीपर्यन्तत्वात्, त्रिरात्रव्रतेन नवम्यामप्युपोष्यत्वाच्च, नवरात्रसमाख्यातनवम्या अपि उपोष्यत्वाच्च, तिथिह्रासेऽपि नवतिथीनामुपोष्यत्वान्नवरात्रत्वाक्षतेः । केचित्–

**अष्टम्यां जागरं कुर्यान्नवम्यां पारणं तथा ।**
**दशम्याञ्च विसर्गः स्यादभिषेकश्च माधव ।।**

**निर्णयदीपे–**

**आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः ।**
**नवम्यां पारणं कुर्यात् दशमीमिश्रिता न चेत् ।।**

**दशमीमिश्रिता यत्र पारणे नवमी भवेत् ।**
**सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ।।**

**नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति ।**
**दशम्यां पारिता देवी कुलनाशं करोति वै ।।**
**तस्मात्तु पारणं कुर्यान्नवम्यां विबुधाधिप ।।** इत्यादिवचनात्

नवम्यामेव नवरात्रपारणमित्याहुः, तन्न ।

**एवं च विन्ध्यवासिन्यां नवरात्रोपवसातः ।**
**एकभुक्तेन नक्तेन स्वशक्त्यायाचितेन वा ।**

**अथवा नवनक्तैश्च नवरात्रं समापयेत् ।।**

इति भविष्यादिवचोभिः उपवासादिषु शक्त्या विहितस्य नवतिथ्यादिकरणकत्वस्य बाधापत्तेः । नवमीपारणाविधायकानि दशमीनिषेधकानि च वचांसि हेमाद्र्यादि-महाप्रबन्धेष्वदर्शनात् प्रायो निर्मूलान्येव । समूलत्वेऽपि तेषां पूर्वेद्युरष्टमीविद्धत्वेन नवमीप्रयुक्तोपवासे जाते परेद्युश्चावशिष्टकिञ्चिन्नवमीसत्वे नवमीमध्ये एव पारणा कार्या । न तु नवम्यनन्तरं दशम्यामित्येवंपरत्वम् । न तु प्राप्तोपवासबाधकत्वमिति । अत्र सूतकेऽपि पारणं कार्यमित्युक्तम् रुद्रयामलेऽपि-

**सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।**
**तदन्ते भोजयेद्विप्रान् दानं दद्याच्च शक्तितः ।।** इति

तदन्ते सूतकान्ते । एवं स्त्रीभिरपि रजोदर्शनमध्ये कर्तव्यमेव पारणम् ।

**प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।**
**न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ।।** इति सत्यव्रतोक्तेः

दशम्यां देवीं विसर्जयेत् तदुक्तं देवीपुराणे-

**ततः प्रातः पूजयित्वा दशम्यां विधिपूर्वकम् ।**
**सम्प्रेषणं तु कर्तव्यं गीतवादित्रनिःस्वनैः ।।** इति

इयमेव विजयदशमी, सा तु शमीपूजाप्यत्रादौ नक्षत्रोदयव्यापिनी ग्रह्या, रत्नकोशे-

**ईषत्सान्ध्यामतिक्रन्तः किञ्चिदुद्भिन्नतारकः ।**
**विजयो नाम कालोऽयं सर्वकामार्थसिद्धिदः ।।** इति

**आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।**
**स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ।।**

दिनद्वये तद्व्याप्तौ पूर्वेव ।

**या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता ।**
**क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः ।।**

**नवमीशेषयुक्तायां दशम्यामपराजिता ।**
**ददाति विजयं देवी पूजिता जयवर्धिनी ।**
**एकादश्यां न कुर्वीत पूजनं चाऽपराजितम् ।।** इति स्कान्दे

**दशमीं यः समुल्लंघ्य प्रस्थानं कुरुते नरः ।**
**तस्य संवत्सरं राज्ये न कोऽपि विजयो भवेत् ।।**

दिनद्वये तारकोदयकालाभावे परदिने एकादशमुहूर्ते यात्रा कार्या ।

**आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु ।**
**सायङ्काले शुभा यात्रा दिवा वा विजयक्षणे ।।**

**एकादशमुहूर्तोऽपि विजयः परिकीर्तितः ।**
**तस्मिन् सर्वे विधातव्या यात्रा विजयकाङ्क्षिभिः ।।** इति भृगूक्तेः

परदिने एकादशमुहूर्तव्याप्त्यभावेऽपि श्रवणयोगश्चेत् तदैव यात्रा कार्या । पूजा तु पूर्वदिने एव ।

**उदये दशमी किञ्चित्सम्पूर्णैकादशी यदि ।**
**श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा ।।** इति दक्षोक्तेः

**श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।**
**उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ।।**

इति भविष्योक्तेश्चेति मयूखे । निर्णयसिन्धौ तु अपराह्णः मुख्यः कर्मकालः ।

**दशम्यां तु नरैः सम्यक् पूजनीयाऽपराजिता ।**
**ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः ।।** इति स्कान्दे

तत्रैव पूजाद्युक्तेः । प्रदोषो गौणः । तत्र दिनद्वये अपराह्णव्यापित्वे पूर्वा । प्रदोषव्याप्तेराधिक्यात् । दिनद्वये प्रदोषव्यापित्त्वे परा । अपराह्णव्याप्तेराधिक्यात् । श्रवणस्तु रोहिणीवदप्रयोजकः । दिनद्वये पराह्णस्पर्शे तद्व्याप्तौ वा श्रवणयुता पूर्वा । तत्रापि परदिने अपराह्णे श्रवणसत्त्वे परैवेति दिक् । इति ।

अत्र विशेषो भविष्ये -

**शमीयुक्तं जगन्नाथं भक्तानामभयङ्करम् ।**
**अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः ॥**

मन्त्रस्तु-

**अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च ।**
**दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥**

**शमी शमयते पापं शमी लोहितकण्टका ।**
**धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥**

**करिष्यमाणयात्रायां यथाकालं सुखं मया ।**
**तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥** इति

तथा

**गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।**
**गीतवादित्रनिर्घोषैरानयेत् स्वगृहं प्रति ।**
**ततो भूषणवस्त्रादि धारयेत्स्वजनैस्सह ॥** इति

आश्विनशुक्लैकादश्यां कार्तिकव्रतारम्भः, भार्गवार्चने-

**प्रारभ्यैकादशीं शुक्लामाश्विनस्य तु मानवः ।**
**प्रातःस्नानं प्रकुर्वीत यावत्कार्तिकभास्करः ॥** इति

तथा

**आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।**
**कार्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः ॥** इति

हेमाद्रौ आदित्यपुराणे च ''पूर्ण आश्वयुजे मासि पौर्णमास्यां समाहितः'' इत्युक्त्वा ''मासं समग्रं परया च भक्त्या समाप्यते कार्तिकपौर्णमास्यां'' इत्यन्ते अभिधानाच्च । आश्विनशुक्लैकादश्यां पौर्णमास्यां वा आरभ्य कार्तिकशुक्लद्वादश्यां पौर्णमास्यां वा समापयेदित्याहुः । कार्तिके द्विदलव्रतं कुर्यात्, कार्तिके द्विदलं त्यजेदिति प्रागुक्तम् ।

**राजिकामाढकीञ्चैव नैवाद्यात् कार्तिके व्रती ।**
**द्विदलं तिलतैलं च तथान्यन्मतिदूषितम् ।।**

**स्कान्देऽपि–**

**कार्तिके वर्जये तद्वत् द्विदलं बहुबीजकम् ।**
**माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः ।।**

**निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् ।**
**नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् ।।**

अत्र केचित् उत्पत्तिसमये दलद्वयं यस्य भवति तत् भूतपूर्वगत्या द्विदलमुच्यते इत्याहुः, उदाहरन्ति च ।

**बीजमेव समुद्भूतं द्विदलं चांकुरं विना ।**
**दृश्यते यत्र सस्येषु द्विदलं तं निगद्यते ।।** इति

अन्ये तु लक्षणायां मानाभावात् वचनस्य च निर्मूलत्वात् द्विदलात्मकं यस्य स्वरूपं दृश्यते तदेव वर्जयेत् इत्याहुः । ग्राह्यधान्यमुक्तं स्कान्दे–

**व्रीहयो यवगोधूमाः प्रियंगुतिलशालयः ।**
**एते हि सात्विकाः प्रोक्ताः स्वर्गमोक्षफलप्रदाः ।।**

**पृथ्वीचन्द्रोदये–**

**ऊर्जे यवान्नमश्नीयात् देवान्नमथवा पुनः ।**
**वृन्ताकं सूरणञ्चैव शूकशिम्बी वर्जयेत् ।।**

**नारदीये–** **अव्रतेन क्षिपेद्यस्तु मासं दामोदरप्रियम् ।**
**तिर्यग्योनिमवाप्नोति नात्र कार्या विचारणा ।।**

**कार्तिके कृच्छ्रसेवी यः प्राजापत्यपरोऽथवा ।**
**एकान्तरोपवासी वा त्रिरात्रोपोषितोऽपि वा ।।**

**षड्वा द्वादश पक्षं वा मासं वा वरवर्णिनी ।**
**एकभुक्तेन नक्तेन तथैवायाचितेन च ।**
**उपवासेन भैक्षेण व्रजते परमं पदम् ।।** इति

अत्र आकाशदीपं दद्यादित्युक्तम्, निर्णयामृते–

**तुलायां तिलतैलेन सायङ्काले समागते ।**
**आकाशदीपं यो दद्यान्मासमेकं हरिं प्रति ।**
**महतीं श्रियमाप्नोति रूपसौभाग्यसम्पदम् ।।** इति

**तद्विधिश्च हेमाद्रौ–**

**दिवाकरेऽस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणम् ।**
**यूपाकृतिं यज्ञियवृक्षदारुमारोप्य भूमावथ तस्य मूर्ध्नि ।।**

**यवाङ्गुलच्छिद्रयुतास्तु मध्ये द्विहस्तदीर्घा अथ पट्टिकास्तु ।**
**कृत्वा चतस्रोऽष्टदलाकृतीस्तु याभिर्भवेदष्टदिशानुसारी ।**
**तत्कर्णिकायां तु महाप्रकाशो दीपः प्रदेयो दलगास्तथाष्टौ ।।** इति

आश्विनपौर्णमासी परा ग्राह्या । अत्रैवाश्वयुजी कर्म, तच्छेषपर्वणि कार्यम्, विकृतित्वात् । आग्रयणं तु पर्वणि कार्यम्, "शरद्याग्रयणं नाम पर्वणि स्यात्तदुच्यते" इति शौनकोक्तेः । तत्रापि शेषपर्वणि कार्यमिति प्रागुक्तम् । तच्च दर्शपूर्णमासयोः एककर्मत्वेनैकद्रव्यनियमात् । दर्शेष्ट्याः परं पौर्णमासेष्ट्याश्च प्राग्भवति इति हेमाद्र्यादयः । तच्चाग्रयणं त्रेधा, व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणं च इति–

**श्यामाकैः व्रीहिभिश्चैव यवैश्चान्योन्यकालतः ।**
**प्राग्यष्टुं युज्यते वश्यं नह्यत्राग्रयणात्ययः ।।** इति परिशिष्टे

अस्य अकरणे प्रायश्चित्तमुक्तं कात्यायनेन–

**नित्ययज्ञात्यये चैव वैश्वदेवद्वयस्य च ।**
**अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ।**
**भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ।।**

**ऋग्विधाने तु–**

**[१]समिन्द्राराया मन्त्रश्च वर्षे वर्षे जपेच्छतम् ।**
**आग्रायणं यदा न्यूनं तदा सम्पूर्णमेति तत् ।।** इत्युक्तम्

---

१ १९ ऋ.सं. १.५३.५ ।।

## अथ दीपावलीनिर्णयः

ज्योतिर्निबन्धे नारदः–

आश्विने कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु ।
तिथिषूक्तः पूर्वरात्रे नृणां नीराजनाविधिः ।।

नीराजयेयुर्देवांश्च विप्रान् गाश्च तुरङ्गमान् ।
ज्येष्ठान् श्रेष्ठान् जघन्यांश्च मातृमुख्याश्च योषितः ।।

स्कान्दे–

कार्तिकस्याऽसिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ।।

मन्त्रस्तु–

मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह ।
त्रयोदश्यां दीपदानात् सूर्यजः प्रीयतां मम ।। इति

चतुर्दश्यादिदिनत्रयं दीपावली इत्युच्यते इत्याह नारदः ।

इषासितचतुर्दश्यामिन्दुक्षयतिथावपि ।
ऊर्जादौ स्वातिसंयुक्ते तदा दीपावली भवेत् ।
कुर्यात्संलग्नमेतच्च दीपोत्सवदिनत्रयम् ।।

आश्विनकृष्णचतुर्दशी नरकचतुर्दशी इत्युच्यते, वाराहे–

नरकश्च हतो दैत्यः तिथौ तस्यां ततो हि सा ।
ख्याता लोके महापुण्या नरकाख्या चतुर्दशी ।।

नहि व्रतं विलुप्येत कार्तिकं व्रतिनां नृणाम् ।
विधवानां यतीनां च तस्यां तैलस्य सेवनात् ।।

न यस्तु कुरुते तस्यां तैलस्नानं विमूढधीः ।
सप्तजन्म दरिद्रः स्यान्नारी च विधवा भवेत् ।।

तस्यां यः स्नापयेद्विप्रान् तैलेनोष्णेन वारिणा ।
तस्य गेहे सदा लक्ष्मीः भवेज्जन्मनि जन्मनि ।। इति

तस्यां चन्द्रोदयेऽभ्यंगः कार्यः । तदुक्तं भविष्ये -

**आश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये ।**
**तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ।।** इति

**कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ।**
**अवश्यमेव कर्तव्यं स्नानं नरकभीरुभिः ।।** इति

इनः चन्द्रः ।

**पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे ।**
**पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः ।।** इति स्कान्दे

अत्र पौर्णमास्यन्तमासापेक्षया कार्तिक इति प्रयोगः । अत्र चन्द्रोदयो मुख्यकालः, सूर्योदयो गौणः, उत्तरभावित्वात् । मण्डनः "स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः" इति । एवञ्च अभ्यङ्गे मुख्या चन्द्रोदयव्यापिनी । दिनद्वये तव्द्याप्तौ पूर्वा, पूर्वोक्तस्कान्दात् । दिनद्वये व्याप्त्यभावेऽपि पूर्वैव गौणकाले सत्वात् ।

**तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।**
**तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ।।**

इति वाक्येन त्रयोदश्यन्ते चतुर्दशीह्रासदर्शप्रक्षेपेण चन्द्रोदये पारिभाषिक-चतुर्दशीसद्भावात् । चन्द्रप्रकाशे-

**त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी ।**
**रात्रिशेषे त्वमावास्या तदाभ्यंगे त्रयोदशी ।।** इति वचनाच्च

**विधूदये यदा न स्यादिषासितचतुर्दशी ।**
**जयान्वितायां रिक्तायां नरः स्नायाद्विधूदये ।।** इति च

इति मयूखे । निर्णयसिन्धौ च ।

दिनद्वयेऽपि चन्द्रोदये चतुर्दशीसत्वे तदभावेऽपि अरुणोदये सम्पूर्णे खण्डे वा दिनद्वये चतुर्दश्याः साम्ये च पूर्वदिने अभ्यंगं कुर्यात् । "पूर्वविद्धचतुर्दश्याम्" इति वचनात् । पूर्वदिने परदिने एव वा सत्वे सैव ग्राह्या । दिनद्वयेऽपि असत्वे अरुणोदव्यापिनी ग्राह्या । "पक्षे प्रत्यूषसमये" इत्युक्तेः । तदभावे तु चतुर्थयाम-गामिनी ग्राह्या । तथा च नारायणः-

**तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा ।**
**यामिन्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यते ।।** इति वचनात्

तेनाऽयमर्थः । यथाग्निहोत्रे यावज्जीवं सायंप्रातःकालेषु व्याप्यकालस्य गुरुत्वम्। तथा चतुर्दशी चतुर्थयामारुणोदयचन्द्रोदयानामूत्तरोत्तरस्य व्याप्यत्वात् गुरुत्वमिति ।

**मृगाङ्कोदयवेलायां त्रयोदश्यां यदा भवेत् ।**
**दर्शे वा मङ्गलस्नानं दुःखशोकभयप्रदम् ।।**

इति कालादर्शे त्रयोदशीनिषेधाच्च । 'त्रयोदशी यदा प्रातः' इति वचनं तु हेमाद्रावलिखितत्वेन निर्मूलम् । समूलत्वेऽपि अरुणोदयात् चतुर्थयामाद्वा यदा ह्रासः तत्परमिदम् । अत एव चतुर्थयाममात्रे स्नानमुक्तम् ।

**अरुणोदयतोऽन्यत्र रिक्तायां स्नाति यो नरः ।**
**तस्याब्दिकभवो धर्मो नश्यत्येव न संशयः ।।** इति भविष्यवचनाच्च ।

त्रयोदशीमध्ये स्नानं निषिद्धम् । अरुणोदयस्तु चतुर्घटिकात्मक इत्युक्तं प्राक् इति ।। चतुर्दश्यां स्नानकाले विशेषः पाद्मे -

**अपामार्गमथो तुम्बीं प्रपुन्नाटमथाऽपरम् ।**
**भ्रामयेत् स्नानमध्ये तु नरकस्य क्षयाय वै ।।**

मन्त्रस्तु-

**सीतालोष्ठसमायुक्त सकण्टकदलान्वित ।**
**हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ।।** इति

अस्यामेव प्रदोषे दीपान् दद्यात् । तदुक्तं स्कान्दे-

**ततः प्रदोषसमये दीपान्दद्यान्मनोरमान् ।**
**ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ।।** इति

**ब्राह्मेऽपि-**

**अमावस्याचतुर्दश्योः प्रदोषे दीपदानतः ।**
**यममार्गान्धकारेभ्यो मुच्यते कार्तिके नरः ।।**

चतुर्दश्यां यमतर्पणमुक्तं वृद्धमनुना–

**दीपोत्सवचतुर्दश्यां कार्यं तु यमतर्पणम् ।।**

**ब्राह्मे च–**

**अपामार्गस्य पत्राणि भ्रामयेत् शिरसोपरि ।**
**ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ।।**

**मन्त्रः–**

**यमाय धर्मराजाय मृत्यवे चान्तकाय च ।**
**वैवस्वताय कालाय सर्वभूतक्षयाय च ।।**

**औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।**
**वृकोदराय चित्राय चित्रगुप्ताय वै नमः ।।** इति
**यज्ञोपवीतिना कार्यं प्राचीनावीतिनाऽथवा ।।** इति

इदं जीवत्पितृकेणाऽपि कार्यम् । ''जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः'' इति पाद्मोक्तेः ।

**।। इति नरकचतुर्दशी ।।**

दर्शे प्रातः अभ्यङ्गं कुर्यादित्युक्तं कालादर्शे–

**प्रत्यूषे आश्वयुग्दर्शे कृताभ्यङ्गा[१]दिमङ्गलः ।**
**भक्त्या प्रपूजयेद्देवीमलक्ष्मीविनिवृत्तये ।।**

इदं च स्नानं स्वातीनक्षत्रयोगे एवेति ब्राह्मे उक्तम्–

**इषे भूते च दर्शे च कार्तिके प्रथमे दिने ।**
**यदा स्वाती तदाभ्यङ्गस्नानं कुर्यादिनोदये ।।**

**स्वात्यर्क्षं द्विविधं चैव पूर्वे भागे विशेषतः ।**
**कनिष्ठमुत्तरार्धं च तदा दीपावली भवेत् ।।**

**स्वात्यादौ चोत्तमं स्नानं मध्यकाले तु मध्यमम् ।**
**स्वात्यन्तघटिकायां तु न स्नायाज्जीवनार्थिना ।।**

---

१ आदिपदात् पञ्चत्वगुदकस्नानादेः उपसंग्रहः ।

**मात्स्ये–**

**दीपैर्नीराजनादत्र सैषा दीपावली स्मृता ।।**

सा आमावास्या ।

**एवं प्रभातसमये त्वमावास्यां नराधिप ।**
**कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः ।।**

**दीपान् दत्वा प्रदोषे तु लक्ष्मीं पूज्य यथाविधि ।**
**स्वलंकृतेन भोक्तव्यं सितवस्त्रोपशोभिना ।।**

अत्रापराह्णे श्राद्धं प्रदोषे दीपोत्सव इत्युक्तम् ।

**अपराह्णे प्रकर्तव्यं श्राद्धं पितृपरायणैः ।**
**प्रदोषसमये राजन् कर्तव्या दीपमालिका ।।** इति

चतुर्दश्यमावास्ययोः उल्कैर्दीपः कर्तव्य इत्युक्तं ज्यौतिषे–

**तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः ।**
**उल्कहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ।।** इति

अत एव लोके रात्रौ उल्कान् हस्तेन भ्रामयन्तः क्रीडन्ति ।

## अथ कार्तिकमासः

कार्तिकशुक्लप्रतिपदि प्रातः अभ्यङ्गं कुर्यात् ।

**वाराहे–**

**[१]प्रतिपद्यपि तैलेन प्रातः स्नायाद् बलेर्दिने ।**

---

१. वाराहोक्ताः केचिदन्ये श्लोकाः स्मृतिमुक्तावल्यामुदाहृताः ते च
वरं तु दत्तवानस्मै यो नरः प्रतिपद्दिने ।
हर्षेण वाऽथ रोषेण दुःखेनाऽथ सुखेन वा ।।
युक्तोऽवतिष्ठते तद्वत्प्रायो वर्षं क्रमेदसौ ।
अतस्तत्र प्रकुर्वीत विशेषान्मङ्गलोदयम् ।
ब्राह्मणेभ्यस्तथा दानं महापुण्यफलप्रदम् ।
वस्त्राण्यश्वान् गजान् गाश्च रथान् दिव्यपरिच्छदान् ।।
ब्राह्मणेभ्यः प्रदद्याच्च विविधानि धनानि च ।

पूर्वं बलिः स्वर्गराज्यं प्राप्तवान् कृपया मम ॥

गार्ग्यः– अरुणोदयवेलायां स्वातीयुक्ते निशाकरे ।
तदा दीपावलीस्नानं गार्ग्यस्य वचनं यथा ॥ इति
कार्तीके शुक्लपक्षादौ नारी नीराजनं चरेत् ॥

अत्रैव तु रात्रौ बलेः पूजा कर्तव्या ।

तदुक्तं भविष्ये–

कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः ।
पूजां कुर्यात् नृपः साक्षाद् भूमौ मण्डलके शुभे ॥

बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः ।
गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् ॥

अत्र मन्त्रः पाद्मे–

बलिराज नमस्तुभ्यं दैत्यदानववन्दित ।
इन्द्रशत्रोऽमराराते विष्णुसान्निध्यदो भव ॥ इति

इयं पूर्वविद्धा ग्राह्या ।

[१]पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् । इति पाद्मोक्तेः ।

...नपि वर्तेत प्रतिपत्कार्तिके सिते ।
उत्सवादिककृत्येषु कर्तव्या शुभकांक्षिभिः ॥

प्रतिपत्सर्वथाऽल्पापि यदि न स्यात्परेऽहनि ।
पूर्वविद्धा तदा कार्या सिते पक्षे च कार्तिके ॥

मदनरत्ने–

कार्तिके शुक्लपक्षे तु विधानद्वितयं भवेत् ।
नारीनीराजनं प्रातः सायं मङ्गलमालिका ॥

---

यथा यथोत्सवं तस्यां कुर्याद्भक्त्या नरोत्तमः ।
तथा तथा भवेत्तस्य ह्युत्सवो जन्मजन्मनि ॥ इति

१ अस्य श्लोकस्य पूर्वार्धः स्मृतिमुक्तावल्यामुदाहृतः।''श्रावणी दुर्गनवमी तथा दुर्गाष्टमी च या''

ब्राह्मे च–

यदा च प्रतिपत्स्वल्पा नारीनीराजनं भवेत् ।
द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम् ।।

भविष्ये च–

लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम् ।
तस्यां नीराजनं कार्यं सायं मङ्गलमालिकाम् ।। इति

देवीपुराणे च–

कार्तिके शुक्लपक्षादौ त्वमावास्या घटीद्वयम् ।
देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम् ।। इति

कार्तिकशुक्लद्वितीया यमद्वितीया, सा प्रतिपद्युता ग्राह्या इत्युक्तं निर्णयामृतादौ । "सा पूर्वविद्धा च मध्याह्नव्यापिनी" इति हेमाद्रिः, अत्र विशेषः स्कान्दे-

ऊर्जे शुक्लद्वितीयायां अपराह्णेऽर्चयेद्यमम् ।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति ।।

अत्र भगिनीगृहे भोक्तव्यम्, भविष्ये-

कार्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ।।

अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः ।।

स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम् ।।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ।
स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः ।
सर्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नकाः ।।

प्रतिपन्नकाः मातृभगिन्यः इति हेमाद्रिः ।

ब्रह्माण्डपुराणे–

या तु भोजयते नारी भ्रातरं युग्मके तिथौ ।

**अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् ।**
**भ्रातुरायुःक्षयो राजन् न भवेत्तत्र कर्हिचित् ।**

कार्तिकशुक्लनवमी युगादिः सा पौर्वाह्निकी इत्युक्तं प्राक् । कार्तिक-शुक्लैकादश्यां भीष्मपञ्चकव्रतमुक्तं नारदीये-

**अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपञ्चकम् ।**
**कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः ॥**
**एकादश्यां तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् ॥** इति

कार्तिकशुक्लद्वादश्यां सायं देवपूजा उक्ता ।

**अतः कार्तिकमासस्य द्वादश्यां परमोत्सवम् ।**
**प्रातर्विधाय कुर्वीत सायं दामोदरार्चनम् ॥**

**वृन्दावने ततः कुर्यान्मण्टपं चतुरस्रकम् ।**
**पुष्पमाल्यैः फलैर्दिव्यैः नारिकेलादिभिस्तथा ॥**
**पूगीफलैरिक्षुदण्डैः रम्भास्तम्भैश्च शोभितम् ॥**

अत्रैव देवोत्थापनं च भविष्ये वाराहे च-

**तुलसीसन्निधौ कृत्वा मण्टपं पूजयेद्धरिम् ।**
**नैवेद्यैः विविधैः स्तम्भैर्जलेन च सुगन्धिना ॥**

**पुष्पाणि च विचित्राणि सुगन्धीनि बहूनि च ।**
**दक्षिणां चापि विधिवदर्चयित्वा दलैः शुभैः ॥**

**तुलस्याश्चापि धात्र्याश्च फलैश्चापि प्रपूजयेत् ।**
**ततो नीराजयेन्मां च लक्ष्मीसहितमीश्वरम् ॥**

**ततो गुरून्ब्राह्मणांश्च पूजयेच्चोपचारतः ।**
**कार्तिके शुक्लपक्षे तु एकादश्यां पृथासुत ॥**
**मन्त्रेणानेन राजेन्द्र देवमुत्थापयेद् द्विजः ॥**

एकादश्यां=द्वादश्यां ''पारणाहे पूर्वरात्रे घण्टादीन्वादयेन्मुहुः'' इति रामार्चन-चन्द्रिकोक्तेः-

**तत्रैव देवदेवस्य स्नानं पूर्वं महद्भवेत् ।**
**महापूजां ततः कृत्वा देवमुत्थापयेत्सुधीः ।।** इति

मन्त्रास्तु वराहपुराणे उक्ताः-

**ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दितवन्दनीय ।**
**बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव ।।**

**इयं तु द्वादशी देव प्रबोधार्थं विनिर्मिता ।**
**त्वयैव सर्वलोकानां हितार्थं शेषशायिना ।।**

**उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।**
**त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ।।**

**उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव ।**
**गता मेघा वियच्चैव निर्मलं निर्मला दिशः ।।**

**शारदानि च पुष्पाणि गृहाण मम केशव ।**
**इदं विष्णुरिति प्रोक्तो मन्त्र उत्थापने हरेः ।।** इति

एवं देवमुत्थाप्य तदग्रे चातुर्मास्यव्रतसमाप्तिं कुर्यात् । तदुक्तं भारते-

**चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ।**
**कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ।।**

**मन्त्रश्च सनत्कुमारेणोक्तः-**

**इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।**
**न्यूनं सम्पूर्णतां यातु त्वत्प्रसादाज्जनार्दन ।।** इति

**ब्राह्मे-** **चतुरो वार्षिकान् मासान् नियमं यस्य यत्कृतम् ।**
**कथयित्वा द्विजेभ्यस्तद्दद्यात् भक्त्या सदक्षिणम् ।।**

यस्य भक्षस्य नियमः कृतः तद्दद्यादित्यर्थः । इदं शुक्रास्तादावपि कार्यम् । आशौचे तु पूजामन्येन कारयेत् । इयं द्वादशी मन्वादिः, सा पौर्वाह्णिकी ग्राह्या । कार्तिकपौर्णमासी परा ग्राह्या । अत्र विशेषो ब्राह्मे ''पुण्या महा कार्तिकी स्यात् जीवेन्दोः कृत्तिकासु च'' तथा-

**आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् ।**
**महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ।।**

**यदा तु याम्यं भवति ऋक्षं तस्यां तिथौ क्वचित् ।**
**तिथिः साऽपि महापुण्या मुनिभिः परिकीर्तिता ।।**

**प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।**
**सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा ।।** इति

अस्यामेव सायं मत्स्यावतारो ज्ञेयः, काशीखण्डे-

**कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।**
**सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ।।** इति

कार्तिकपौर्णमासी मन्वादिः, सा पौर्वाह्णिकीत्युक्तम् । अत्र वनभोजनमुक्तम् ।

**ततस्तिथौ पौर्णमास्यां धात्रीवृक्षोपशोभिते ।**
**वने दामोदरं विष्णुं चित्रान्नैस्तोषयेद्विभुम् ।।**

**कल्पोक्तविधिना तत्र होमं कुर्याद्विशेषतः ।**
**ब्राह्मणान् भोजयेत्पश्चात् स्वयं भुञ्जीत बन्धुभिः ।।**

**पञ्चरात्रे च-**

**द्वादश्यां वा चर्तुदश्यां पौर्णमास्यामथापि वा ।**
**पञ्चम्यां वा महाप्राज्ञ वनभोजनमाचरेत् ।।**

**।। इति कार्तिकमासः ।।**

## अथ मार्गशीर्षमासः

मार्गशीर्षशुक्लपञ्चम्यां नागपूजोक्ता, स्कान्दे-

**शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी ।**
**स्नानदानैर्बहुफला नागलोकप्रदायिनी ।।**

इयं नागपूजायां षष्ठीयुतैव ग्राह्या ।

**पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।**
**तस्यां तु तुषिता नागा इतरा सचतुर्थिका ।।** इति मदनरत्नात्

मार्गशीर्षशुक्लषष्ठी चम्पाषष्ठी, सा उत्तरायुता ग्राह्या ।

**प्रातःसङ्गवमध्याह्ने चापराह्ने च सायके ।**
**अहिं कुमारं देवांश्च पितॄन् दुर्गां प्रपूजयेत् ।।**

युग्मवाक्यात् ब्रह्माण्डे-

**मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता ।**
**विशाखाभौमयोगेन सा चम्पेतीह विश्रुता ।।** इति

इयमेव स्कन्दषष्ठी, सा पूर्वयुता ग्राह्या ।

**कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।**
**एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ।।** इति भृगूक्तेः

मार्गशीर्षपौर्णमासी दत्तात्रेयजयन्ती । मार्गशीर्षकृष्णसप्तम्यादिदिनत्रयेषु श्राद्धं कार्यमित्युक्तं कालादर्शे-

**अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।**
**श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ।।** इति विष्णूक्तेः

मार्गशीर्षे भाद्रपदे चेत्यपि द्रष्टव्यम्, कालादर्शे च-

**मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुणे ।**
**कृष्णपक्षे च पूर्वेद्युः अन्वष्टक्यं तथाष्टका ।।** इति

अन्वष्टका तु प्रागेव निर्णीता । तत्राष्टमी अपराह्णव्यापिनी ग्राह्या । पूर्वेद्युः श्राद्धान्वष्टकाश्राद्धयोरष्टम्यनुरोधेन निर्णयः । ''पूर्वेद्युः पितृभ्यो दद्यात् अपरेष्वान्वष्टक्यम्'' इति सूत्रात् । अत्र कामकालौ विश्वेदेवौ । ''इष्टिश्राद्धे क्रतूदक्षावष्टम्यां कामकालकौ'' इति शङ्खोक्तेः । मार्गशीर्षमासादिषु मलमासे सति तत्राष्टका न कार्या ।

**महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ।**
**स्पष्टमासविशेषाख्या विहितं वर्जयेन्मले ।।** इति काठकगृह्योक्तेः

## अथ पौषमासः

पौष्यशुक्लैकादशी मन्वादिः, सा च उक्तैव प्राक् । पौष्यकृष्णसप्तम्यष्टमीनवम्यः तिस्रोऽष्टकाः प्रागुक्ताः । पौषामावास्यायामर्धोदयो योगविशेषः । तदुक्तं भारते-

**अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः ।**
**अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ।।** इति

तथा "दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन" इति । इदं निर्मूलमित्याह रात्रावपि अर्धोदयो भवत्येव ।

**मघामायां व्यतीपाते आदित्ये विष्णुदैवते ।**
**अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समम् ।।**

"किञ्चिदूनो महोदयः" इति पाठमाहुः ।

**स्कान्दे-**

**अर्धोदये तु सम्प्राप्ते सर्वं गङ्गासमं जलम् ।**
**शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसम्मिताः ।**
**यत्किञ्चिद्दीयते दानं तद्दानं मेरुसन्निभम् ।।**

**।। इति पौषमासः ।।**

## अथ माघमासः

अत्र माघमासव्रतारम्भः पौष्यशुक्लैकदश्यां कुर्यात् । तदुक्तं ब्राह्मे-

**एकादश्यां शुक्लपक्षे पौष्यमासे समारभेत् ।**
**द्वादश्यां पौर्णिमास्यां वा शुक्लपक्षे समापनम् ।।** इति

अत्राधिकारिणः भविष्ये-

**ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।**
**बालवृद्धयुवानश्च नरनारीनपुंसकाः ।**
**स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ।।**

अत्र स्नानं अरुणोदये इति ब्राह्मे–

**अरुणोदयमारभ्य प्रातःकालावधि प्रभो ।**
**माघस्नानवतां पुण्यं क्रमात्तत्रावधारणा ।।**

**उत्तमं तु सनक्षत्रं मध्यमं लुप्ततारकम् ।**
**सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् ।।** इति

**माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ ।**
**मकरस्थे रवौ यो हि न स्नात्यभ्युदिते रवौ ।।** इति

**सम्प्राप्ते माघमासे तु तपस्विजनवल्लभे ।**
**क्रोशन्ति सर्ववारीणि समुद्गच्छति भास्करे ।**
**पुनीतः सर्वपापानि त्रिविधानि न संशयः ।।**

इत्यादिषु सूर्योदये स्नानमुक्तम्, तेनात्र शक्त्यपेक्षया व्यवस्था । मासपर्यन्तं स्नानासम्भवे त्र्यहमेकाहं वा स्नायात् । ''अस्मिन् मासे त्वशक्तोऽपि स्नायादपि दिनत्रयम्'' इति पाद्मे ।

अत्र मकरसंक्रमण-रथसप्तमी-माघीति त्र्यह इत्येके । माघशुक्लदशम्यादि इत्यन्ये । मकरमारभ्य दिनत्रयमित्यपरे । माघस्याद्यः त्र्यह इति केचित् । त्रयोदश्यादि इति बहवः । ''महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम्'' इति पाद्मोक्तेः ।

एतस्यार्थवादत्वात् यत्किञ्चिद्दिनत्रयमिति केचित् । तत्त्वं तु ''सन्दिग्धेषु वाक्यशेषात्'' इति न्यायात् त्रयोदश्याद्येवेति । माघशुक्लसप्तमी रथसप्तमी, सा अरुणोदयव्यापिनी ग्राह्या ।

**सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।**
**अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।।** इति चन्द्रिकोक्तेः

दिनद्वयेऽरुणोदये चेत् पूर्वैव इयं मन्वादिः इत्यपि । सा च पौर्वाह्णिकी ग्राह्या । यदा माघो मलमासो भवति तदा मासद्वयं मन्वादिश्राद्धं कुर्यात् । प्रमाणं तु उक्तम्। माघशुक्लाष्टमी भीष्माष्टमी । तदुक्तं पाद्मे–

**माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।**
**श्राद्धं च ये नराः कुर्युः ते स्युः सन्ततिभागिनः ।।** इति

**तर्पणमन्त्रः-**

**वैय्याघ्रपाद्यगोत्राय सांकृत्यप्रवराय च ।**
**अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ।।**

एतत् जीवत्पितृकस्यापि । "जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः" इति पाद्मे । माघशुक्ला द्वादशी भीमद्वादशी । इयं पूर्वयुता युग्मवाक्यात् । माघी पौर्णिमा-परा । भविष्ये-

**वैशाखी कार्तिकी माघी तिथयोऽतीव पूजिताः ।**
**स्नानदानविहीनास्ता न नेयाः पाण्डुनन्दन ।।**

माघकृष्णाष्टमी माघी अष्टका तन्निर्णयः । तत्पूर्वेद्युः अन्वष्टक्यनिर्णयः प्रागुक्तः। माघकृष्णचतुर्दशी शिवरात्रिः । सा निशीथव्यापिनी ग्राह्या ।

**अर्धरात्रियुता यत्र माघकृष्णचतुर्दशी ।**
**शिवरात्रिव्रतं तत्र वाजिमेधफलं लभेत् ।।**

दिनद्वये निशीथव्याप्तावव्याप्तौ वा परैव ।

**आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी ।**
**तद्रात्रिः शिवरात्रिः स्यात् सा भवेदुत्तमोत्तमा ।।** इत्युक्तेः

**प्रदोषव्यापिनी ग्राह्या शिवरात्रिश्चतुर्दशी ।** इति स्मृतेश्च

प्रदोषव्याप्त्याधिक्याच्च पूर्वदिन एव प्रदोषनिशीथोभयव्याप्तौ पूर्वैव । परेद्युरेव तादृशी चेत् परैव । "निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा" इत्युक्तेः । यदा पूर्वेद्युर्निशीथे परेद्युश्च प्रदोषे तदा पूर्वेद्युरेव ।

**अर्धरात्रात्परस्ताच्चेत् जयायोगो यदा भवेत् ।**
**पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैः ।।** इति पाद्मात्

**त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तङ्गते सति ।**
**महानिशा च मध्यस्थयामस्थघटिकाद्वयम् ।।**

पारणं तु माधवीये स्कान्दे-

**तिथीनामेव सर्वासामुपवासव्रतादिषु ।**

**तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशी ।।** इति वचनात्

चतुर्दशीमध्य एव पारणम् ।

**उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् ।**
**कृतैः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा ।।** इत्युक्तेः

इदं व्रतं शिवभक्तैरेव कार्यम् । ''शिवभक्तैश्चतुर्दश्यां कर्तव्यं समुपोषणम्'' इति भविष्योत्तरात् ।

**अर्धरात्रे यदा न स्यान्माघेऽसितचतुर्दशी ।**
**त्रयोदश्या युता कार्या नरैः शिवपरायणैः ।।**

इत्यादिवाक्येषु शिवभक्तग्रहणाच्च । न तु वैष्णवैः ।

**माघमाससिते पक्षे चतुर्दश्यां द्विजोत्तम ।**
**शिवरात्रिव्रतं नैव कुर्याद्विष्णुव्रता जनाः ।** इति निषेधात्

**भविष्योत्तरे च–**

**माघमासे चतुर्दश्यां कृष्णायां तु पृथासुत ।**
**युक्तायां श्रवणेनाऽपि न कुर्यात्समुपोषणम् ।।**

**विष्णुव्रताभिमानाद्वा श्रवणे वाऽभिमानतः ।**
**यः कुर्याद्विष्णुभक्तस्तु विष्णुद्रोही न संशयः ।।**

**उदासीनोऽथवा राजन् सङ्गदोषेण वा पुनः ।**
**द्रव्यलोभाद्भयाद्वापि यः कुर्यात्समुपोषणम् ।।**

**स तत्फलं शिवे दत्वा याति घोरं महास्वनम् ।**
**कुम्भीपाकं ततो राजन् षण्ढो भवति भूतले ।।**
**जन्मजन्मान्तरे राजन् विष्णुद्रोही न संशयः ।।** इति

**स्मृत्यन्तरे च–**

**यद्यपि श्रवणोपेता माघे कृष्णचतुर्दशी ।**
**तथापि नैव सोपोष्या विष्णुभक्तैः कदाचन ।।** इति

**यस्मिन् दिने यदा शैवकर्म सम्प्राप्यते तदा ।**
**तद्दिनं विष्णुकर्मापि त्याज्यं सुफलकांक्षिभिः ।।** इति च

**गारुडे–**

**माघमासेऽसिते पक्षे चतुर्दश्यां शिवव्रते ।**
**यद्यपि श्रवणोपेता नोपोष्या विष्णुतत्परैः ।।**

**शिवरात्रिः क्रियाकाले श्रवणं तु करोति यः ।**
**आसुरं भावमाश्रित्य अन्धे तमसि मज्जति ।।**

माघामावास्या युगादिः । प्रमाणं तूक्तम् ।

## अथ फाल्गुणमासः

फाल्गुनी पौर्णमासी होलिका, सा च सायाह्नव्यापिनी ग्राह्या । "सायाह्ने होलिकां कुर्यात् पूर्वाह्ने क्रीडनं गवाम्" इति वचनात् । नारदीये तु प्रदोषव्यापिनीत्युक्तम्।

**प्रदोषव्यापिनी ग्राह्या पौर्णिमा फाल्गुनी सदा ।**
**तस्यां भद्रामुखं त्यक्त्वा पूज्या होली निशागमे ।।** इति

तेनेयं पूर्वविद्धा ।

**श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।**
**पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ।।** इति ब्रह्मवैवर्तोक्तेः

दिनद्वये प्रदोषव्याप्तौ परैव । पूर्वदिने भद्रासत्वात् । तत्र होलिकानिषेधात् । पूर्वदिन एव प्रदोषव्यापिनी चेत् पूर्वेद्युरेव ।

**राका यामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत् ।**
**होलां भद्रावसाने तु निशीथान्तेऽपि दीपयेत् ।।** इति

इयं मन्वादिरपि, सा च पौर्वाह्निकी ग्राह्या ।

।। इति फाल्गुणमासः ।।

।। इति प्रथमः परिच्छेदः ।।

## अथ द्वितीयः परिच्छेदः

अथ षोडशसंस्कारा निर्णीयन्ते ते च-

**गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।**
**जातकृत्यं नामकर्म निष्क्रामोऽन्नाशनं परम् ।।**

**चौलकर्मोपनयनं व्रतानां च चतुष्टयम् ।**
**स्नानोद्वाहौ च संस्कारा नियता वै द्विजन्मनः ।।** इत्युक्ताः

बलिः विष्णुबलिः ।

**तत्रादौ गर्भाधानम् ।**
तत्र प्रथमरजोदर्शने दुष्टमासादिफलमुच्यते, वसिष्ठः-

**आद्यर्तौ पौषशुक्लोर्जमधुशुचि नभस्याश्वयुक् पापवारा**
**रिक्ताऽमार्काष्टषष्ठ्यः पितृपरसदने रात्रिसन्ध्यापराह्णे ।**
**मिश्रोग्रा मूलतीक्ष्णं विवरमनरुणाल्पाधिकास्तं च राष्ट्रो-**
**त्पातः पापस्य लग्नं न सदरुणजरन्नीलरक्ताम्बरं च ।।**

शुक्लः आषाढः, ऊर्जः कार्तिकः, मधुः चैत्रः, शुचिः ज्येष्ठः, नभस्यः भाद्रपदः।

**नारदः-**

**अमारिक्ताष्टमी षष्ठी द्वादशी प्रतिपत्स्वपि ।**
**परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ ।**
**सन्ध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्तवम् ।।**

**तिथिफलम्**

**वैधव्यं सुतलाभश्च मैत्रं शत्रुविवर्धनम् ।**
**मित्रलाभः शत्रुवृद्धिः कुलर्धिर्बन्धुनाशनम् ।।**

**मरणं वंशवृद्धिश्च निराहारः कुलक्षयः ।**
**तेजश्च सुतनाशश्च कुलहानिः तिथिक्रमात् ।।**

अथ वारफलम्

रोगी पतिव्रता दुःखी पुत्रिणी भोगभोगिनी ।
पतिव्रता क्लेशभागी सूर्यवारादिषु क्रमात् ।।

अथ नक्षत्रफलम् गर्गः–

सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता ।
धर्मयुक्ता व्रतघ्नी च परसन्तानमोदिनी ।।

सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरता सदा ।
दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी ।।

साध्वी पतिप्रिया नित्यं सुपुत्रा कष्टचारिणी ।
स्वकर्मनिरता हिंस्रा पुण्या पुत्रादिसंयुता ।।

नित्यं धनचयासक्ता पुत्रधान्यसमन्विता ।
मूर्खा चाऽज्ञा पुण्यवती दस्रर्क्षादेः क्रमात्फलम् ।।

नारदः–

कुलीरवृषचापान्त्यनृयुक्कन्यातुलाघटाः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ।।

योगफलम्

आद्यर्तौ दुर्भगा नारी विष्कम्भे चेद्रजस्वला ।
वन्ध्या चैवातिगण्डे च शूले शूलवती भवेत् ।।

गण्डे तु पुंश्चली नारी व्याघाते [१]बालघातिनी ।
वज्रे च स्वैरिणी प्रोक्ता पाते च पतिघातिनी ।।

परिघे मृतवन्ध्या च वैधृतौ पतिमारिणी ।
शेषाः शुभावहा योगा यथानामफलप्रदाः ।।

वस्त्रफलम् । गर्गः–

सुभगा श्वेतवस्त्रा स्याद् दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यात् नववस्त्रा सुखान्विता ।।

---

१ आत्मघातिनी इति निर्णयसिन्धुपाठः ।

**दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससी ।**
**नीलाम्बरधरा नारी पुष्पिता विधवा ततः ।।**

**वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ।**
**समाश्चेत् कन्यकां चेति फलं स्यात् प्रथमार्तवे ।।**

निषिद्धमाससंक्रान्तितिथिवारनक्षत्रयोगग्रहणेषु प्रथमरजोदर्शने शान्तिं कुर्यात् । शान्तिदिनं तु शौनकः-

**सार्तवानां तु नारीणां शान्तिं वक्ष्यामि शौनकः ।**
**पञ्चमेऽह्नि चतुर्थे वा ग्रहयज्ञपुरस्सरम् ।।** इति

अत्र स्त्रीसङ्गं वर्जयेदित्याह वसिष्ठः-

**प्रभूतदोषं यदि दृश्यते तत्पुण्यं तदा शान्तिककर्म कार्यम् ।**
**विवर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमुत्तमेऽह्नि ।।**

प्रथमर्तौ विशेषः चन्द्रिकायाम् ।

**प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवतीः स्त्रियः ।**
**अक्षतैरासनं कृत्वा तस्मिंस्तामुपवेशयेत् ।।**

**हरिद्रागन्धपुष्पादीन् दद्यात्ताम्बूलकं स्त्रजम् ।**
**दीपैर्नीराजनं कुर्यात्सदीपे वासयेद्गृहे ।।**
**लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः ।।** इति

द्वितीयाद्यृतुषु नियमानाह दक्षः-

**अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् ।**
**न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा ।।**

**अत्रिरपि-**

वर्जयेन्मधु मांसं च पात्रे खर्वे च भोजनम् ।
गन्धमाल्ये दिवास्वापं ताम्बूलं केशशोधनम् ।
दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ।।

**विष्णुधर्मे–**

**आहारं गोरसानां च पुष्पालङ्कारधारणम् ।**
**अञ्जनं कंकृतं गन्धान् पीठशय्याधिरोहणम् ।**
**अग्निसंस्पर्शनं चैव वर्जयेच्च दिनत्रये ।।**

अत्र ऋतुकाले गर्भाधानम् । ऋतुकालपरिमाणं वर्ज्यावर्ज्यदिनान्याह मनुः–

**ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।**
**तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।**
**त्रयोदशी च शेषाः स्युः प्रशस्ता दशरात्रयः ।।**

**देवलः–**

**तस्मात् त्रिरात्रं चण्डालीं पुष्पितां परिवर्जयेत् ।।**

**मरीचिः–**

**शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।**
**दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ।।**

**भारते च–**

**स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ।।** इति

अत्रापि समासु तिथिषु पुत्राः विषमासु कन्येति ज्ञेयम् ।

**युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।।** इति शंखोक्तेः

तत्राप्युत्तरोत्तरा प्रशस्तेति व्यासः–

**रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः ।**
**पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ।।**

**सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान् ।**
**नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः ।।**

**एकादश्यामधर्म्या स्त्री द्वादश्यां पुरुषोत्तमः ।**
**त्रयोदश्यां सुता पापा वर्णसंकरकारिणी ।।**

**धर्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः ।**
**प्रजायते चतुर्दश्यां पञ्चदश्यां पतिव्रता ।।**
**आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ।।** इति

गर्भाधाने वर्ज्यावर्ज्यतिथ्यादीनाह श्रीधरः-

**षष्ठ्यष्टमीं पञ्चदशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा ।**
**शेषाः शुभाः स्युस्तिथयो निषेके वाराः शशाङ्कार्यसितेन्दुजानाम् ।।**

उभयत्र पक्षद्वये, आर्यो गुरुः, सितः शुक्रः, इन्दुजो बुधः ।

**अथ नक्षत्रम्**

**विष्णुप्रजेशरविमित्रसमीरपौष्ण-**
**मूलोत्तरावरुणभानि निषेककार्ये ।**
**पूज्यानि पुष्यवसुशीतकराश्विचित्रा-**
**दित्याश्च मध्यमफला विफलाः स्युरन्ये ।।**

विष्णुः श्रवणम्, प्रजेशः रोहिणी, रविः हस्तः, मित्रः अनुराधा, समीरः स्वाती, पौष्णं रेवती, वरुणः शतभिषा, वसुर्धनिष्ठः । शीतकरः मृगशीर्षः । आदित्यः पुनर्वसुः । उत्तराशब्देनोत्तरात्रयं ग्राह्यम् । अत्र मूलं चिन्त्यम् । "एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्" इति याज्ञवल्क्योक्तेः (या.स्मृ.१.८०) । इदं निषेचनं एकस्यां रात्रौ सकृदेव कार्यम् । "सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान्" इति याज्ञवल्क्योक्तेः (या.स्मृ.१.८०) । ऋतौ गमनमावश्यकम् । पराशरः-

**ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।**
**घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः ।।**

इति अगमने दोषोक्तेः । अस्यापवादमाह व्यासः-

**व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।**
**ऋतुकालेऽपि नारीणां भ्रूणहत्या प्रमुच्यते ।।**

पर्वतिथयस्तु विष्णुपुराणे-

**अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।**
**ब्रह्मचारी भवेन्नित्यं ऋतौ तु स्नातको द्विजः ।।** इति

**दिवा जन्मदिने चैव न कुर्यान्मैथुनं व्रती ।**
**श्राद्धं दत्वा च भुक्त्वा च श्रेयोऽर्थी न च पर्वसु ।।** इति शिवरहस्ये

अनेकभार्यस्य ऋतुयौगपद्ये कश्यपः-

**यौगपद्ये तु [१]भार्याणां विवाहक्रमतो व्रजेत् ।**
**रक्षणार्थमपुत्रां च ग्रहणक्रमशोऽपि वा ।।** इति

ग्रहणं ऋतुग्रहणम् ।

**गर्भाधानप्रकार उक्तो ऋग्विधाने-**

**विष्णुर्योनिं जपेत्सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती ।**
**गर्भाधानं ततः कुर्यात्सुपुत्रो जायते धृवम् ।।** इति

**ऋतौ गमने पराशरः-**

**ऋतौ तु गर्भशंकित्वात्स्नानं मैथुनिनां स्मृतम् ।**
**अनृतौ तु यदा गच्छेत् शौचं मूत्रपुरीषवत् ।।**

स्त्रीणां तु न स्नानम् ।

**उभावप्यशुची स्यातां दम्पती शयनं गतौ ।**
**शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ।।** इति वृद्धशातातपोक्तेः

प्रथमरजोदर्शनात्प्राक् स्त्रीगमनं न कार्यम् ।

**प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।**
**व्यर्थीकारेण शुक्लस्य ब्रह्महत्यामवाप्नुयात् ।।** इति आश्वलायनोक्तेः

**गर्भाधानाकरणे प्रायश्चित्तमाहाश्वलायनः-**

**गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति ।**
**अकृत्वा गां द्विजे दत्वा कुर्यात् पुंसवनं पतिः ।।**

इयं च गर्भाधानं मलमासशुक्रास्तादावपि कार्यम् ।

---

१ तीर्थानां इति निर्णयसिन्धुपाठः । तीर्थानां ऋतूनां इत्यर्थः ।

**उत्सवेषु च सर्वेषु सीमन्तक्रतुजन्मसु ।**
**सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ।।** इति भृगूक्तेः

**अधिमासादिदोषाश्च न स्युः कालविधेर्बलात् ।**
**अन्नप्राशनतः पूर्वं गर्भाधानादिकाः क्रियाः ।।**
**उक्तकाले भवन्त्येव दोषो नाषाढपुष्ययोः ।**

अत्र कश्चिद्विशेष उच्यते । राजसि, जननादौ च रात्रित्रिभागं कृत्वा आद्यद्वये चेत् पूर्वदिनम्, परतस्तूत्तरमिति मिताक्षरायाम् । तथा सप्तदशदिनपर्यन्तं पुनः रजोदृष्टौ स्नानमात्रम्, अष्टादशे एकरात्रम् । ऊनविंशे व्यहः । विंशतिप्रभृति त्रिरात्रमिति ज्ञेयम् । ''यत्तु चतुर्दशदिनादर्वागशुचित्वं न विद्यते'' इति तत्र स्नानप्रभृतित्वमभिप्रेतम् । एतच्च यस्या विशंतिदिनोत्तरं प्रायशो रजस्तत्रैव । यस्यास्तु स्त्रिय अर्वाक् प्रायशो रजः तत्रोक्तं स्मृत्यर्थसारे-

''त्रयोदशदिनादूर्ध्वं प्रायोरजोवतीनां एकादशदिनात् प्राग् अशुचित्वं नास्ति एकादशदिने एकरात्रम्, द्वादशे द्विरात्रम्, ऊर्ध्वं त्रिरात्रमिति'' प्रयोगपारिजातेऽप्येवम् । रोगजे तु संग्रहे-

**रोगेण यद्रजः स्त्रीणामन्वहं हि प्रवर्तते ।**
**नाशुचिस्तु भवेत्तेन यस्माद्वैकारिकं मतम् ।।** इति

कर्माधिकारस्तु रजोनिवृत्तावेव ।

**साध्वाचारा न तावत्स्यात् स्नाताऽपि स्त्री रजस्वला ।**
**यावत्प्रवर्तमानं हि रजो नैव निवर्तते ।।** इति शंखोक्तेः

तत्राऽपि स्वकालेऽशुचिरेवेत्याह ऋष्यशृङ्गः-

**रोगजे वर्तमानेऽपि काले निर्याति यद्रजः ।**
**तस्मात्कालेऽप्रमत्ता स्यादन्यथा संकरो भवेत् ।।**

रजस्वलायाः रजस्वलान्तरस्पर्शेऽकामतः स्नानं, कामतः उपवासः, पञ्चगव्यप्राशनं च । अकामतः चण्डालादिस्पर्शेऽप्यनशनमेव प्राक्शुद्धेः । कामतस्तु प्रथमेऽह्नि त्र्यहः, द्वितीये व्यहः, तृतीये एकाहः । श्वस्पर्शे तु व्यहः, एकाहो वा ।

भुञ्जानायाश्च चण्डालादिस्पर्शे षड्रात्रम् । उच्छिष्टयोः स्पर्शे तु कृच्छ्र इत्यादि मिताक्षरायां ज्ञेयम् । स्नानविधिं चाह पराशरः-

**स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।**
**पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ।।**

**सिक्तगात्रा भवेदद्भिः सांगोपांगा कथञ्चन ।**
**न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ।।**

रजस्वलाया ज्वरे तु उशनाः-

**ज्वराभिभूता या नारी रजसा च परिप्लुता ।**
**कथं तस्या भवेच्छौचं शुचिः स्यात् केन कर्मणा ।।**

**चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।**
**सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ।।**

**दश द्वादशकृत्वो वा आचमेच्च पुनः पुनः ।**
**अन्ते च वाससां त्यागः ततः शुद्धा भवेत्तु सा ।।** इति

इदं च आतुरमात्रे ज्ञेयम् । "आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः" इति पराशरोक्तेः ।।

## अथ पुंसवनम्

**जातूकर्ण्यः-**

**द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।**
**व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाऽथवा ।।**

**बह्वृचकारिका-**

**कर्ता स्याद्देवरस्तस्या यस्याः पत्युरसम्भवः ।**
**आवर्तत इदं कर्म प्रतिगर्भमिति स्थितिः ।।**

**नक्षत्राणि वराहः-**

**हस्तो मूलं श्रवणः पुनर्वसुमृगशिरस्तथा पुष्यः ।**
**पुंसंज्ञिकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ।।**

गर्गोऽपि–

पुन्नामा श्रवणस्तिष्यो हस्तश्चैव पुनर्वसुः ।
अभिजित् प्रौष्ठपाच्चैव अनूराधा तथाश्वयुक् ।।

नृसिंहः–

रिक्तां पर्व च नवमीं त्यक्त्वा पुंसवने शुभाः ।

वसिष्ठः–

मृत्युश्च सौरेस्तनुहानिरिन्दोः मृतप्रजा पुंसवने बुधस्य ।
काकी च वन्ध्या भवतीह शुक्रे स्त्रीपुत्रलाभो रविभौमजीवैः ।।

अनवलोभनस्याप्ययमेव कालः ।

## अथ सीमन्तः

वसिष्ठः–

चतुर्थे सप्तमे मासि षष्ठे वाऽप्यथवाष्टमे ।।

कार्ष्णाजिनिः–

गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा ।
सीमन्तोन्नयनं कुर्याच्छंखस्य वचनं यथा ।।

कालविधाने–

सीमन्ते तिष्यहस्तादितिहरिशशभृत्पौष्णविध्युत्तराख्याः ।
पक्षच्छिद्रं च रिक्तां पितृतिथिमपहायापराः स्युः प्रशस्ताः ।।

पक्षछिद्रं चाह वसिष्ठः–

चतुर्दशी चतुर्थी च अष्टमी नवमी तथा ।
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वया मताः ।।

कालनिर्णये–

शुभसंस्थे निशानाथे चतुर्थी च चतुर्दशीम् ।
पौर्णमासीं प्रशंसन्ति केचित्सीमन्तकर्मणि ।।

**बृहस्पतिः–**

**पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।**
**चतुर्दशी चतुर्थी च शुक्लपक्षे शुभप्रदे ।।**

**नारदः–**

**अरिक्ता पर्वदिवसे कुजजीवार्कवासरे ।।**

एतच्च सकृदेव कार्यम् ।

**सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।**
**यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ।।** इति हारीतोक्तेः

**स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन ।**
**गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ।।**

सीमन्ते भोजने प्रायश्चित्तमुक्तं धौम्येन–

**ब्रह्मोदने च सोमे च सीमन्तोन्नयने तथा ।**
**जातकर्मनवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ।।**

## अथ गर्भिणीतत्पतिधर्माः

**विष्णुधर्मोत्तरे–**

**कटुतीक्ष्णकषायाणि अत्युष्णलवणानि च ।**
**आयासं च व्यवायं च गर्भिणी वर्जयेत्सदा ।।**

**कश्यपः–**

**गर्भिणी कुञ्जराश्वादिशैलहर्म्याधिरोहणम् ।**
**[१]व्यवायं शीघ्रगमनं शकटारोहणं त्यजेत् ।।**

**याज्ञवलक्यः–**

**दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।**
**वैरूप्यं मरणं वाऽपि तस्मात्कार्यं प्रियं स्त्रियः ।।**

दौहृदं गर्भिणीप्रियम् ।

---

१ व्यायामं इति निर्णयसिन्धुपाठः ।

**आश्वलायनः-**

**वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ।**
**श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित् ।।**

श्राद्धं तद्भोजनमिति प्रयोगपारिजाते ।

**कालविधाने-**

**क्षौरं शवानुगमनं नखकृन्तनं च**
**युद्धादि वास्तुकरणं त्वतिदूरयानम् ।**
**उद्वाहमौपनयनं जलधेश्चगाह-**
**मायुःक्षयार्थमिति गर्भिणिकापतीनाम् ।।**

सूतिकागृहं नैऋत्यां कार्यम् ।

**वारुण्यां भोजनगृहं नैऋत्यां सूतिकागृहम् ।**
**प्रसूतिसमये काले सद्य एव प्रवेशयेत् ।।** इति वसिष्ठोक्तेः

## अथ जातकर्म

**वसिष्ठः-**

**श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।**

**मनुः-**

**प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।।**

वर्धनं छेदनम् ।

**वैजवापः-**

**जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।**
**दैवादतीतकालं चेदतीते सूतके भवेत् ।।**

**विष्णुधर्मे-**

**अच्छिन्ननाभि कर्तव्यं श्राद्धं वै पुत्रजन्मनि ।।**

एतच्च रात्रावपि कार्यम् ।

**पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् ।।** इति व्यासोक्तेः

पुत्रपदेन कन्याऽपि ।

**प्रादुर्भावे पुत्रपुत्र्योः ग्रहणे चन्द्रसूर्ययोः ।**
**स्नात्वाऽनन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ।।** इति कार्ष्णाजिन्युक्तेः

अत्र श्राद्धं हिरण्येन कुर्यादित्याह संवर्तः-

**पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।**
**न पक्वेन नचामेन कल्याणान्यभिकामयन् ।।**

एतच्च मरणाशौचमध्येऽपि कार्यमित्याह प्रजापतिः-

**आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।**
**कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ।।**

**केचित्तु-**

**मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।**
**आशौचापगमे कार्यं जातकर्म यथाविधि ।।**

इति स्मृतिसंग्रहोक्तेराशौचापगमे कार्यमित्याहुः । सर्वत्र जातकर्मनामकर्मादौ उक्तकालातिक्रमे तिथिवारनक्षत्रादिकं शोधनीयम् ।

**देशकालोपघाताद्यैः कालातिक्रमणं यदि ।**
**अनस्तगेज्येन्दुसिते तत्कार्यं चोत्तरायणे ।।** इति नारदोक्तेः ।

**बृहस्पतिरपि-**

**मुख्यालाभे विधिज्ञेन विधिश्चिन्त्यः प्रमाणतः ।**
**नक्षत्रतिथिलग्नानां विचार्यैव पुनः पुनः ।।** इति

## अथ जन्मनि दुष्टकालाः

तत्र गण्डान्तः, नारदः-

**पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं तथा ।**
**गण्डान्तं मृत्युदं जन्म यात्रोद्वाहव्रतादिषु ॥**

संक्रान्तिगण्डान्तः ।

**कुलीरसिंहयोः कीटचापयोः मीनमेषयोः ।**
**गण्डान्तमन्तरालं स्यात् घटिकार्धं मृतिप्रदम् ॥**

नक्षत्रगण्डान्तः ।

**सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांशा भसन्धयः ।**
**तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥**

**रत्नमालायां-**

**पौष्णाश्विन्योः सार्पपित्रर्क्षयोश्च यच्च ज्येष्ठामूलयोरन्तरालम् ।**
**तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥**

**रत्नसंग्रहे-**

**सर्वेषां गण्डजातानां परित्यागो विधीयते ।**
**वर्जयेद्दर्शनं श्रावं तच्च षाण्मसिकं भवेत् ॥**

**तिथ्यर्क्षगण्डे पितृमातृनाशो लग्ने तु सन्धौ तनयस्य नाशः ।**
**सर्वेषु नो जीवति हन्ति बन्धून् जीवन् पुनः स्याद्बहुवारणाश्वः ॥**

अथैतद्दोषपरिहाराय दानं कार्यम् ।

**गार्ग्यः-**

तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते ।
काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥

उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते ।
**अजाप्रदानं त्वाष्ट्रे स्यात्पूर्वाषाढे च काञ्चनम् ॥**

उत्तरापुष्यचित्रासु पूर्वाषाढोद्भवस्य च ।
कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकरजां बुधः ।।

आश्लेषाफलम्

राज्यं पितृक्षयो मातृनाशः कामक्रियारतिः ।
पितृभक्तो बली स्वघ्नः त्यागी भोगी धनी क्रमात् ।।

ज्येष्ठाफलम्, ब्रह्मयामले–

ज्येष्ठादौ जननीमाता द्वितीये जननीपिता ।
तृतीये जननीभ्राता स्वयं माता चतुर्थके ।।

आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ।।
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ।। इति

अथ मूलफलम्, भल्लाटः–

अभुक्तमूलसम्भवं परित्यजेत्तु बालकम् ।
समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ।।

तदाद्यपादके पिता द्वितीयके जनन्यथ ।
तृतीयके धनक्षयश्चतुर्थके शुभावहः ।।
प्रतीपमन्त्यपादतः फलं तदेव सार्पभे ।

अभुक्तमूलं त्वाह । वृद्धवसिष्ठः–

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमित्याहुस्तत्र जातं शिशुं त्यजेत् ।।

कृष्णां चतुर्दशीं षोढां कुर्यादादौ शुभं स्मृतम् ।
द्वितीये पितरं हन्ति तृतीये हन्ति मातरम् ।।

चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ।
षष्ठे तु धननाशः स्यादात्मनो वंशनाशनम् ।।

## अथ जन्मनि दुष्टकालाः

तत्र गण्डान्तः, नारदः–

**पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं तथा ।**
**गण्डान्तं मृत्युदं जन्म यात्रोद्वाहव्रतादिषु ॥**

संक्रान्तिगण्डान्तः ।

**कुलीरसिंहयोः कीटचापयोः मीनमेषयोः ।**
**गण्डान्तमन्तरालं स्यात् घटिकार्धं मृतिप्रदम् ॥**

नक्षत्रगण्डान्तः ।

**सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांशा भसन्धयः ।**
**तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥**

**रत्नमालायां–**

**पौष्णाश्विन्योः सार्पपित्रर्क्षयोश्च यच्च ज्येष्ठामूलयोरन्तरालम् ।**
**तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥**

**रत्नसंग्रहे–**

**सर्वेषां गण्डजातानां परित्यागो विधीयते ।**
**वर्जयेद्दर्शनं श्रावं तच्च षाण्मसिकं भवेत् ॥**

**तिथ्यर्क्षगण्डे पितृमातृनाशो लग्ने तु सन्धौ तनयस्य नाशः ।**
**सर्वेषु नो जीवति हन्ति बन्धून् जीवन् पुनः स्याद्बहुवारणाश्वः ॥**

अथैतद्दोषपरिहाराय दानं कार्यम् ।

**गार्ग्यः–**

**तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते ।**
**काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥**

**उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते ।**
**अजाप्रदानं त्वाष्ट्रे स्यात्पूर्वाषाढे च काञ्चनम् ॥**

उत्तरापुष्यचित्रासु पूर्वाषाढोद्भवस्य च ।
कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकरजां बुधः ।।

आश्लेषाफलम्

राज्यं पितृक्षयो मातृनाशः कामक्रियारतिः ।
पितृभक्तो बली स्वघ्नः त्यागी भोगी धनी क्रमात् ।।

ज्येष्ठाफलम्, ब्रह्मयामले–

ज्येष्ठादौ जननीमाता द्वितीये जननीपिता ।
तृतीये जननीभ्राता स्वयं माता चतुर्थके ।।

आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत् ।
सप्तमे चोभयकुलं ज्येष्ठभ्रातरमष्टमे ।।
नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ।। इति

अथ मूलफलम्, भल्लाटः–

अभुक्तमूलसम्भवं परित्यजेत्तु बालकम् ।
समाष्टकं पिताऽथवा न तन्मुखं विलोकयेत् ।।

तदाद्यपादके पिता द्वितीयके जनन्यथ ।
तृतीयके धनक्षयश्चतुर्थके शुभावहः ।।
प्रतीपमन्त्यपादतः फलं तदेव सार्पभे ।

अभुक्तमूलं त्वाह । वृद्धवसिष्ठः–

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमित्याहुस्तत्र जातं शिशुं त्यजेत् ।।

कृष्णां चतुर्दशीं षोढां कुर्यादादौ शुभं स्मृतम् ।
द्वितीये पितरं हन्ति तृतीये हन्ति मातरम् ।।

चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ।
षष्ठे तु धननाशः स्यादात्मनो वंशनाशनम् ।।

देवकीर्तिः–

यद्येकस्मिन् धिष्ण्ये जायन्ते दुहितरोऽथवा पुत्राः ।
पितुरन्तकरा ह्येते यद्यपरे प्रीतिरतुला स्यात् ।।

गर्गः–

एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्चेत् तयोर्मृत्युर्भवेदेकस्य निश्चितम् ।।

शौनकः–

ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ।
इत्थं सञ्जायते यस्य तस्य मृत्युर्न संशयः ।।

मात्स्ये–

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवकास्तथा ।।

अमानुषा अमुण्डाश्च अजातव्यञ्जनास्तथा ।
हीनांगा अधिकांगाश्च जायन्ते यदि वा स्त्रियः ।।
पशवः पक्षिणश्चैव तथा चैव सरीसृपाः ।

विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ।।
निर्वासयेत्तान् नगरात् ततः शान्तिं समाचरेत् ।।

शान्तिसर्वस्वे–

सुतत्रये सुता चेत्स्यात् तत्त्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदा हानिर्महद्भवेत् ।।
ज्येष्ठनाशो धने हानिर्दुखं वा सुमहद्भवेत् ।।

अत्र सर्वत्र शान्त्यादिविधिः प्रयोगपारिजाते द्रष्टव्यः ।

मिताक्षरायाम्–

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ।।

पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ।।

जन्मदा नामदेवताः ।

यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता ।

**देवलः**–

यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ।।

**भागवते तु**–

द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात् ।।

इत्युक्तेः पश्चादुत्पन्नस्य ज्यैष्ठ्यमुक्तम् ।

## अथ सूतिकास्नानम्

**ज्योतिषे**–

करेन्द्रभाग्यानिलवासवान्त्यमैत्रेन्दवाश्विध्रुवभेऽह्नि पुंसाम् ।
तिथावरिक्ते शुभमामनन्ति प्रसूतिका स्नानविधिं मुनीन्द्राः ।।

## अथ नामकर्म

**मदनरत्ने बृहस्पतिः**–

द्वादशे दशमे वाऽपि जन्मतोऽपि त्रयोदशे ।
षोडशे विंशतौ चैव द्वात्रिंशे वर्णतः क्रमात् ।।

**भविष्ये**–

नामधेयं दशम्यां तु द्वादश्यां मासि केचन ।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ।।

दशम्यामतीतायामिति ज्ञेयम्, आशौचापगमे नामधेयमिति विष्णूक्तेः । गर्गः–

अमासक्रांतिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत् ।

**श्रीधरः-**

**मित्रादित्यमघोत्तराशतभिषक्स्वातीधनिष्ठाच्युत-**
**प्राजेशाश्विशशांकपौष्णदिनकृत् पुष्येषु राशौ स्थिरे ।**
**छिद्रां पञ्चदशीं विहाय नवमीं शुद्धेऽष्टमे भार्गव-**
**ज्ञाचार्यामृतपादभागदिवसे नामानि कुर्याच्छिशोः ।।**

**तथा-**

**उत्तरारेवतीहस्तमूलपुष्याः सवारुणाः ।**
**श्रवणादितिमैत्रं च स्वाती मृगशिरस्तथा ।।**
**प्राजापत्यं धनिष्ठा च प्रशस्ता नामकर्मणि ।**

**मनुः-**

**शर्मान्तं ब्राह्मणस्य स्याद्वर्मान्तं क्षत्रियस्य तु ।**
**वैश्यस्य धनसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ।।**

**नारदीये-**

**सूतकान्ते नामकर्म विधेयं स्वकुलोचितम् ।**
**नामपूर्वं तु मासस्य मङ्गलं सुसमाक्षरैः ।।**

**गार्ग्यः-**

**मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता ।**
**कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।।**

**उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।**
**योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ।।**

अत्र मार्गशीर्षादिः चैत्रादिर्वा क्रमः इति मदनरत्ने-

**तन्मासनाम प्रथमं दद्यात्सम्बुद्ध्य चैव हि ।**

नाक्षत्रमपि नाम कार्यम्, तच्च नक्षत्रपादाक्षराद्याक्षरं कुर्यादित्युक्तं परिशिष्टे-

**तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम् ।** इति

अभिवादनीयं समीक्षेत तन्मातापितरौ विज्ञायेतामोपनयनात्'' (आ.गृ. सू.१.१५.१०) इत्याश्वलायनोक्तेः । अन्यच्च गोप्यं नाम कर्तव्यम् ।।

# अथ दोलारोहः

बृहस्पतिः–

दोलारोहस्तु कर्तव्यो दशमे द्वादशेऽपि वा ।
षोडशे दिवसे वापि द्वाविंशे दिवसेऽपि वा ।।

ज्योतिर्निबन्धे–

करत्रये वैष्णवरेवतीष्वदितिद्वये वाऽश्विनकध्रुवेषु ।
कुर्यात् शिशूनां नृपतेश्च तद्वदान्दोलनं वै सुखिनो भवन्ति ।। इति

तत्रैव–

आन्दोलाशयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा ।।
अन्यस्मिन् दिवसे चेत्स्यात् तिर्यगास्ये प्रशस्यते ।।

# अथ दुग्धपानम्

नृसिंहः–

एकत्रिंशद्दिने चैव पयः शंखेन पाययेत् ।
अन्नप्राशननक्षत्रे दिवसोदयरात्रिषु ।।

# अथ कर्णवेधः

गर्गः–

मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ।।

मदनरत्ने–

प्रथमे सप्तमे मासि अष्टमे दशमेऽपि वा ।
[१]द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ।।

---

१ अत्र मध्ये केचन श्लोकाः निर्णयसिन्धौ पठिताः ते च
द्वादशे च तथा कुर्यात्कर्णवेधं शुभावहम् ।।
हेमाद्रौ व्यासः–
कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।

श्रीधरः–

हरिहयकरचित्रासौम्यपौष्णोत्तरार्या–
दितिवसुषु घटालीसिंहवर्ज्ये सुलग्ने ।
शशिगुरुबुधकाव्यानां दिने पर्वरिक्ता–
रहिततिथिषु शुद्धे नैधने कर्णवेधः ॥

सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ।
शुद्रस्य चायसी सूची मध्यमाष्टांगुलात्मिका ॥

## अथ निष्क्रमणम्

यमः–

तृतीयेऽपि चतुर्थे वा मासि निष्क्रमणं भवेत् ।

तथा–

ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् ।
चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥

व्यासः–

मैत्रे पुष्यपुनर्वसुप्रथमभे पौष्णेऽनुकूले विधौ
हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च ।
कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ शुक्रेष्वरिक्ते तिथौ
कन्याकुम्भतुलामृगारिभवने सौम्यग्रहालोकिते ॥

मदनरत्ने–

अन्नप्राशनकाले वा कुर्यान्निष्क्रमणं क्रियाम् ।

---

कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥
अनन्तरं श्रीधरीयश्लोकः उदाहृतः अनन्तरमपि केचन श्लोकाः उदाहृताः
मदनरत्ने बृहस्पतिः
द्वितीया दशमी षष्ठी सप्तमी च त्रयोदशी ।
(द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥)

## अथ अन्नप्राशनम्

नारदः–

षष्ठे वाऽप्यष्टमे मासि पुंसां स्त्रीणां तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ।।

रिक्तां दिनक्षयं नन्दां द्वादशीमष्टमीममाम् ।
त्यक्त्वान्यतिथयः प्रोक्ताः सितजीवज्ञवासराः ।
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ।।

श्रीधरः–

आदित्यतिष्यवसुसौम्यकरानिलाश्वि–
चित्राजविष्णुवरुणोत्तरपौष्णमित्राः ।
बालान्नभोजनविधौ दशमे विशुद्धे
छिद्रां विहाय नवमीं तिथयः शुभाः स्युः ।।

वसिष्ठः–

बालान्नभुक्तौ व्रतबन्धने च राज्याभिषेके खलु जन्मधिष्ण्यम् ।
शुभं त्वनिष्टं सततं विवाहे सीमन्तयात्रादिषु मंगलेषु ।।

मार्कण्डेये–

ब्रह्माणं शंकरं विष्णुं चन्द्रार्कौ च दिगीश्वरान् ।
भुवं दिशश्च सम्पूज्य हुत्वा वह्नौ तथा चरुम् ।।

देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलंकृतस्य दातव्यमन्नं पात्रे सकाञ्चनम् ।
मध्वाज्यदधिसंयुक्तं प्राशयेत्पायसं तु वा ।। इति

## अथाब्दपूर्तिः

व्यवहारनिर्णये–

स्वनक्षत्रं जन्मतिथिं प्राप्य सम्पूजयेन्नरः ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ।।

आदित्यपुराणे-

सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलवारिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ।।

स्वनक्षत्रं च पितरो तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात् कर्तव्यश्च महोत्सवः ।।

## अथ चौलम्

प्रयोगपारिजाते-

जाताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम् ।
आद्येऽब्दे कुर्वते केचित् पंचमेऽब्दे द्वितीयके ।।
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ।।

बृहस्पतिः-

तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः ।
पञ्चमे सप्तमे वाऽपि स्त्रियाः पुंसोऽपि वा समम् ।।

पारिजाते-

उत्तरायणगे सूर्ये विशेषात् सौम्यगोलके ।
शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत् ।
अशुभोऽन्त्यत्रिभागः स्यात् कृष्णपक्षे त्रिधाकृते ।।

वसिष्ठः-

द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च ।
दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ।।

नृसिंहे-

षष्ठ्यष्टमी चतुर्थी च नवमी च चतुर्दशी ।
द्वादशी दर्शपूर्णे द्वे प्रतिपच्चैव निन्दिताः ।।

वसिष्ठः-

रवेरङ्गारकस्यैव सूर्यपुत्रस्य चैव हि ।
निन्दिता दिवसाः क्षौरे शेषाः कार्यकराः स्मृताः ।।

**पापग्रहाणां वारादौ विप्राणां शुभदं रवौ ।**
**क्षत्रियाणां क्षमासूनौ विट्शूद्राणां शनौ शुभम् ।।**

**तथा–**

**हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।**
**सौम्यचित्रे नवक्षौरे उत्तमा नवतारकाः ।।**

**त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।**
**क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ।।**

**निधने जन्मनक्षत्रे वैनाशे चन्द्रमेऽष्टमे ।**
**विपत्करे वधे क्षौरं प्रत्यक्तारे विवर्जयेत् ।।**

एतच्च शिशोर्मातरि गर्भिण्यां न कार्यम्, तदाह बृहस्पतिः–

**गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् ।**

अस्यापवादः नारदः–

**सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।**
**पञ्चाब्दात् प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ।।**

गर्भिण्यामपि पञ्चममासपर्यन्तं न दोष इत्याह बृहस्पतिः–

**गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।**
**पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ।।**

चूडाकर्मणि अन्नभोजने प्रायश्चित्तमुक्तम्, पराशरमाधवीये–

**निवृत्ते चूडहोमे तु प्राङ्नामकरणात्तथा ।**
**चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि ।**
**अतोऽन्येषु तु संस्कारेषूपवासेन शुद्ध्यति ।।**

**स्मृत्यर्थसारे–**

**''संस्काराः स्त्रीणामहोमकास्तूष्णीं स्युः''** इति।

## अथ अक्षरस्वीकारः

मदनरत्ने नृसिंहः–

अक्षरस्वीकृतिं कुर्यात् प्राप्ते पञ्चमहायने ।
उत्तरायणगे सूर्ये कुम्भमासं विवर्जयेत् ।।

दीपिकायाम्–

वर्षे पर्जन्यके काले षष्ठीं रिक्तां शनिं कुजम् ।
अनध्यायान्विना नत्वा देवं ग्रन्थकृतं गुरुम् ।।

श्रीधरः–

हस्तादित्यसमीरमित्रपुरजित्पौष्णाश्विचित्राच्युते–
ष्वाराऱ्यंशदिनोदयादिरहिते राशौ स्थिरे चोभये ।
पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तं विहायाष्टमीं
षष्ठीमष्टमशुद्धभाजिभवने प्रोक्ताक्षरस्वीकृतिः ।।

## अथ उपनयनम्

ज्योतिर्निबन्धे–

नर्मदोत्तरदेशे तु सिंहस्थे देवमन्त्रिणि ।
शुभकर्म न कुर्वीत निषेधो नास्ति दक्षिणे ।। इति

जाताधिकाराज्जन्मादितृतीयेऽब्दे तु चौलकम् ।
आद्येऽब्दे कुर्वते केचित् पञ्चमेऽब्दे द्वितीयके ।
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ।।

इति प्रयोगपारिजातोक्तेः, लोके तथैवाचाराच्च उपनयनदिवस एव चूडाकर्म कृत्वा उपनयनं कुर्यात् । उपनयनकालमाह अश्वलायनः–

गर्भाऽष्टमेऽष्टमे वाब्दे पञ्चमे सप्तमेऽपि वा ।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ।।

तथा– ब्रह्मवर्चसकामस्य जन्मतो गर्भतोऽपि वा ।
सप्तमे वाष्टमे वापि ब्राह्मणस्योपनायनम् ।।

मनुः–

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ।।

विष्णुः–

षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे ।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः ।।

स्मृतिरत्नाकरे–

पञ्चमे ज्ञानचित्तत्वं षष्ठे ब्रह्मत्वमाप्नुयात् ।
औपनायनकार्येषु शुक्रेणैवं तु भाषितम् ।।

गौणकालमाह मनुः–

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ।।

ज्योतिर्निबन्धे–

अग्रजा बाहुजा वैश्याः स्वावधेरूर्ध्वमब्दतः ।
अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ।।

कालादर्शे गार्ग्यः–

विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् ।
माघादिशुक्रान्तिकपञ्चमासाः साधरणा वा सकलद्विजानाम् ।।

ज्योतिषे–

माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते ।

बृहस्पतिः–

झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ।।

वराहः–

न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीनदिने विदध्यात् ।
ज्येष्ठे न मासि प्रथमस्य सूनोस्तथा सुताया अपि मङ्गलानि ।।

तथा–

जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत् ।
आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे ।।

तथा–

शुद्धिर्नैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि ।
चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ।।

जन्मभादष्टमे सिंहे नीचे वा शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तः चैत्रे मीनगते रवौ ।।

वृद्धवसिष्ठः–

आचार्यस्य बलं श्रेष्ठं वटोरन्त्याष्टमो यदि ।
न विचार्यं बलं तत्र कारयेदुपनायनम् ।।

आचार्यो बलहीनश्च वटोर्गर्भाष्टमो यदि ।
न विचार्यं बलं तत्र कारयेदुपनायनम् ।।

श्रुत्युक्तवर्षेण बलं गुरोश्चेत्तावत् प्रशस्तं व्रतबन्धकर्म ।
अयुक्तवर्षे सुबलप्रदोऽपि नैवैतयोरब्दबलो बलीयान् ।।

बालश्च बलहीनश्चेत् गर्भिणी यदि मातरि ।
यो यदिच्छेद् द्विजत्वं हि अष्टवर्षं न लङ्घयेत् ।।

ज्योतिर्निबन्धे नृसिंहः–

तृतीया पञ्चमी षष्ठी द्वितीया वापि सप्तमी ।
उभयोः पक्षयोश्चैव विशेषेण सुपूजिताः ।।

बृहस्पतिः–

शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।

नृसिंहः– विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ।।

अपराह्णस्त्रेधाविभक्तदिनतृतीयांश इत्युक्तं तत्रैव । वसन्ते गलग्रहो न दोषायेत्यर्थः।

गलग्रहमाह नारदः–

कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् ।
त्रयोदशीचतुष्कं च अष्टावेते गलग्रहाः ।।

स्मृतिरत्नाकरे च–

वसन्तर्तौ प्रदोषे च अनध्याये न दोषकृत् ।।

वसिष्ठः–

पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ।।

अनध्यायस्य पूर्वेद्युः तस्य चैवापरेऽहनि ।
व्रतबन्धं विसर्गं च विद्यारम्भं न कारयेत् ।।

एवं प्रदोषदिनमपि वर्ज्यम् ।

ज्योतिर्निबन्धे–

या चैत्रवैशाखसितातृतीया माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ।।

इदं तु अनध्याये चोपनीत इत्यस्यापवादः ।

वृद्धगार्ग्योऽपि–

अनध्यायेऽपि कुर्वीत यस्तु नैमित्तिको भवेत् ।
सप्तमी माघशुक्ले तु तृतीया चाक्षया तथा ।।
बुधत्रयेन्दुवाराश्च शस्तानि व्रतबन्धने ।।

चण्डेश्वरः–

दाहे दिशां चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे च ।
केतौ तथोल्कांशुकणप्रयाते त्र्यहं न कुर्याद्व्रतमङ्गलानि ।।

तत्रैव–

वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्ययनेऽपि च ।।

ज्योतिषे–

हस्तत्रये पुष्यधनिष्ठयोश्च पौष्णाश्विसौम्यादितिविष्णुभेषु ।
शस्ते तिथौ चन्द्रबलेन युक्ते कार्यौ द्विजानां व्रतबन्धमोक्षौ ।।

नारदः–

श्रेष्ठान्यर्कत्रयान्तेज्यचन्द्रादित्युत्तराणि च ।
विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने ।।

नारदः–

शाखाधिपतिवाराश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नं च दुर्लभं त्रितयं व्रते ।।

शाखाधिपाश्च रत्नसंग्रहे–

ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ।
जीवसितौ विप्राणां क्षत्रस्यारोष्णगू विशां चन्द्रः ।। इति

बृहस्पतिः–

बह्वृचानां गुरोवरि यजुर्वेदजुषां कवेः ।
सामगानां धरासूनोरथर्वविदुषां रवेः ।।

लल्लः–

व्रतेऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् ।।

ज्योतिर्निबन्धे–

नान्दीश्राद्धं कृतं चेत्स्यादनध्यायस्त्वकालिकः ।
तदोपनयनं कार्यं वेदारम्भं न कारयेत् ।।

एतच्च बह्वृचातिरिक्तानाम्, बह्वृचानां तूपनयनं न भवत्येव । एतच्च प्रातस्तनिते, सायं स्तनिते तु, दिवैव चरुं श्रपयित्वा सायं सन्ध्योत्तरं होमं कुर्यात् ।

न सन्ध्यागर्जिते काले न वृष्ट्युत्पातदूषिते ।
ब्रह्मौदनं पचेदग्नौ पक्वं चेन्न निवर्तते ।।
ब्रह्मौदनं पचेदग्नौ पक्वमन्नं न दुष्यति । इति संग्रहोक्तेः

अथोपनयनेऽधिकारिणो माधवीये वृद्धमनुनोक्ताः-

**पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।**
**उपानयेऽधिकारी स्यात् पूर्वाभावे परः स्मृतः ।। इति**

**प्रयोगरत्ने-**

**पितैवोपनयेत्पुत्रं तदभावे पितुःपिता ।**
**तदभावे पितुर्भ्राता तदभवे तु सोदरः ।।**

अत्र पितृव्यस्य ज्येष्ठभ्रात्रभावेऽधिकारः ।

**असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।**

इति याज्ञवल्क्योक्तेः । तेनेदमविभक्तपरम् । पूर्वं तु विभक्तपरमिति । मातरि गर्भिण्यां उपनयनं न कार्यम् । मनुः-

**गर्भिणी यदि पत्नी चेन्न कुर्यादुपनायनम् ।**
**पञ्चमासासादधः कुर्यादत ऊर्ध्वं न कारयेत् ।।**

मातृरजोदोषे तु भारद्वाजः-

**रजस्वला वटोर्माता स्वस्तिवाचनतः पुरा ।**
**नैवोपनायनं कार्यं परतस्तु शुभं भृगुः ।।**

उपनयनं च कुमारं भोजयित्वा कार्यम् । ''प्रागेवैनं तदहर्भोजयन्ति'' इति मदनपारिजाते गोभिलोक्तेः ।

**मातृभोजनमध्ये तु यस्य माता रजस्वला ।**
**तदा कर्म न कर्तव्यं यावद्भोजनसङ्गता ।।**

**गर्गः-**

**ज्वरस्योत्पादनं यस्य लग्नं तस्य न कारयेत् ।**
**दोषनिर्गमनात्पश्चात् स्वस्थो धर्मं समाचरेत् ।।**

लग्नमिति मङ्गलोपलक्षणम् ।

**ज्योतिर्गर्गः–**

**विवाहोत्सवयज्ञेषु माता यदि रजस्वला ।**
**तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ।।**

**वसिष्ठः–**

**यस्य माङ्गलिकं कर्म तस्य माता रजस्वला ।**
**तदा स मृत्युमाप्नोति पञ्चमं दिवसं विना ।।**

**बृहस्पतिः–**

**प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि ।**
**पत्नी रजस्वला चेत् स्यान्न कुर्यात्तत्पिता तदा ।।**

पितेति कर्तृमात्रोपलक्षणम्, सङ्कटे तु वाक्यसारे–

**अलाभे सुमुहूर्तस्य रजोदोषेऽप्युपस्थिते ।**
**श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत् ।।**

अथ षण्ढमूकादीनां विशेषः, प्रयोगपारिजाते ब्राह्मे–

**ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।**
**तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ।।**

**जडगद्गदरोगार्तशुष्काङ्गविकलाङ्गिषु ।**
**मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।।**

**ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ।**
**संस्कारमन्त्रहोमादीन् करोत्याचार्य एव तु ।।**

**उपनेयांश्च विधिवदाचार्यस्य समीपतः ।**
**आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।।**

**कन्या स्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ।**
**एवमेव द्विजैर्जातौ संस्कर्यौ कुण्डगोलकौ ।।** इति

गायत्र्युपदेशश्चोत्तरतोऽग्नेः कार्यः, सांख्यायनसूत्रात् बह्वृचानामेवेदम् । भिक्षायां विशेषः पराशरमाधवीये–

**मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।**
**भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ।।**

अथ संस्कारलोपे शौनकः-

**आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणाम् ।**
**व्याहृत्याग्निं तु संस्कृत्य हुत्वा कर्म यथाक्रमम् ।।**

**एतेष्वेकैकलोपे तु पादकृच्छ्रं समाचरेत् ।**
**चूडायामर्धकृच्छ्रं स्यादापदि त्वेवमीरितम् ।।**

अनापदि तु सर्वत्र द्विगुणं चरेत् ।

**कात्यायनः-**

**लुप्ते कर्मणि सर्वत्र प्रायश्चित्तं विधीयते ।**
**प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ।।**

स्मृत्यर्थसारे चैवम्, कारिकायां तु-

**प्रायश्चित्ते कृतेऽतीतं लुप्तं कर्म कृताकृतम् ।** इत्युक्तम्

**प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।**
**कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ।।** इति

**त्रिकाण्डमण्डनोऽपि-**

**कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च ।**
**कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ।।** इति

**गणशः क्रियमाणानां मातृणां पूजनं सकृत् ।**
**सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ।।** इति छन्दोगपरिशिष्टे

**नारदीये- गणशः क्रियमाणानां युगपन्मातृपूजनम् ।**
**नान्दीश्राद्धं भवेदेकं होममन्त्राः पृथक् पृथक् ।।** इति

एतद्बहूनामपत्यानां युगपत् संस्कारकरणविषयमिति बोपदेवः । अतीत-संस्काराणां युगपत्करणे इत्यन्ये । तत्रापि चौलस्य उपनीत्या सहेति पक्षे उपनीतिदिन

एवानुष्ठानं न पूर्वदिने । सहत्वस्य दिवसैक्ये सन्निकृष्टपरत्वात् । वृद्धाचारोऽप्येवमेव। उपनीतिदिने माध्याह्निकसन्ध्यामाह जैमिनिः-

**यावद्ब्रह्मोपदेशस्तु तावत्सन्ध्यादिकं न च ।**
**ततो मध्याह्नसन्ध्यादि सर्वं कर्म समाचरेत् ।।**

ब्रह्मोपदेशः गायत्र्युपदेशः ।

## अथ ब्रह्मचारिधर्माः

**प्रचेताः-**

**ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे तु भोजनम् ।**
**यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ।।**

**यमः-**

**मेखलामजिनं दण्डमुपवीतं च नित्यशः ।**
**कौपीनं कटिसूत्रञ्च ब्रह्मचारी तु धारयेत् ।**
**अग्नीन्धनं भैक्षचर्यामधःशय्यां गुरोर्हितम् ।।**

कुर्यादिति शेषः । मेखलामाह मनुः-

**मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।**
**त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ।**
**मौञ्ज्यभावे तु कर्तव्याः कुशाश्मन्तकबल्वजैः ।।**

**दण्डमाह मनुः-**

**ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।**
**पैप्पलौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ।।**

**एषामभावे गौतमः-**

**यज्ञियो वा सर्वेषां मूर्धललाटनासाग्रप्रमाणः ।।** इति

**अजिनमाहाश्वलायनः-**

अहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियं आजेन वैश्यं इति । यज्ञोपवीतमाह देवलः-

**कार्पासक्षौमगोवालशणबल्वतृणोद्भवम् ।**
**यथासम्भवतो धार्यमुपवीतं द्विजातिभिः ।।**

**उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते ।**
**एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः ।।**

तत्र मन्त्रमाह ।

**यज्ञोपवीतमिति वा व्याहृत्या वाऽथ धारयेत् ।**

**हेमाद्रौ–**

**यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।**
**तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ।।**

**मनुः–**

**मेखलामाजिनं दण्डमुपवीतं कमण्डलुम् ।**
**अप्सु प्राश्य विनष्टानि गृह्णीतान्यन्यानि मन्त्रतः ।।**

**संवर्तः–**

**यः सन्ध्याश्चैव नोपास्ते अग्निकार्यं यथाविधि ।**
**गायत्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः ।।**

अग्निकार्यं सन्ध्याद्वये, "अग्निकार्यं ततः कुर्यात्सन्ध्ययोरुभयोरपि" इति याज्ञवल्क्योक्तेः । सायमेव वा । सायमेव वाग्निमिन्धीतेत्येके इति लौगाक्षिणोक्तेः ।

**मरीचिः–**

**ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रे कुरुतेऽथवा ।**
**गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति ।।**

**मनुः–**

**भो शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।**
**आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।।**

**यमः–** **ज्यायानपि कनीयांसं सन्ध्यायामभिवादयेत् ।**
**विना शिष्यं च पुत्रं च दौहित्रं दुहितुः पतिम् ।।**

## अथ महानाम्न्यादिव्रतम्

**श्रीधरः–**

**तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।**
**चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ।।**

## अथ समावर्तनम्

**सुरेश्वरः–**

**भौमभानुजयोवरि नक्षत्रे च व्रतोदिते ।**
**ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रिया ।।**

**वसिष्ठः–**

**स्नानं मध्याह्नकाले तु होरायां कारयेच्छुभम् ।**
**पूर्वाह्ने तदभावे तु कुर्यात्स्नानं यथाविधि ।।**

एतच्च ब्रह्मचारिव्रतलोपे प्रायश्चित्तं कृत्वा कार्यम् । तदाह बोधायनः– ''शौचसन्ध्यादर्भभिक्षाग्निकार्यराहित्यकौपीनोपवीतमेखलादण्डाजिनाधारणदिवा–स्वापछत्रपादुकास्रग्विधारणाङ्गोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याभिरतौ ब्रह्मचारी कृच्छ्रत्रयं चरेत् ''महाव्याहृतिहोमं'' ''पाहि त्रयोदशहोमं च कुर्यात्'' स्नातकव्रतान्याह व्यासः–

**यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ।**
**छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ।।**

# अथ विवाहः

**बृहन्नारदीये–**

**यः पुत्रं यौवनोपेतं न विवाहयति द्विजः ।**
**स मज्जेन्नरके घोरे तत्र तिष्ठेद्युगान्तरम् ॥**

**तस्मादुद्वाहयेत्पुत्रं बहुलादेव यत्नतः ।**
**आत्मा संस्थापितस्तेन येन संस्थापितः सुतः ।**
**कृतोद्वाहे सुते ब्रह्मन् पितुः स्यात्कृतकृत्यता ॥**

कन्यां विशिनष्टि याज्ञवल्क्यः–

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**
**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।**
**अरोगिणीं भ्रातृमतीमसमानर्षगोत्रजाम् ॥**

लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युताम्, बाह्यानि,

**या मातुरसगोत्रा च असगोत्रा च या पितुः ।**
**सा प्रशस्ता द्विजातीनां दानकर्मणि मैथुने ॥**

असपिण्डां सापिण्ड्यरहिताम् । एतच्च एकशरीरावयवान्वयेन भवति । एकस्य हि पितुर्मातुर्वा शरीरस्यावयवाः पुत्रपौत्रादिषु साक्षात्परम्परया वा शुक्लशोणितादि–रूपेणानुस्यूताः एतत् षाट्कौशिकं शरीरम् । ''त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृतः'' इति श्रुतेः । माधवादयस्तु एकपिण्डदानक्रियान्वयित्वं सापिण्ड्यम् ।

**लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।**
**पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥** इति मात्स्योक्तेः

नच पितृव्यादिषु एतन्नास्तीति वाच्यम् । तत्कर्तृकश्राद्धे देवतैक्येन तत्सत्वात् । देवदत्तकर्तृकश्राद्धे ये देवताभूतास्तेषां मध्ये यः कश्चिदन्यकर्तृकश्राद्धेऽनुप्रविशति तेषां सापिण्ड्यम् । तद्भार्याणामपि स्वभर्तृकर्तृकश्राद्धे सहाधिकारित्वेन तदन्वयात् । 'एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके' इति स्मृतेश्च ।

श्रुतीनां च वैराग्यार्थत्वात् तस्याः सापिण्ड्यनिमित्तत्वे मानाभावात् । नच मातुलादिष्वेतन्नास्तीति वाच्यम् । मातामहरूपदेवतैक्यात् । ननु गुरुशिष्यादेरपि श्राद्धदेवतात्वात् सपिण्डत्वं स्यात् । किंबहुना, ''सर्वाभावे तु नृपतिः कारयेत्तस्य रिक्थतः'' इति वचनाद्राज्ञोऽपि श्राद्धकर्तृत्वात् सापिण्ड्यप्रसङ्गः । सत्यम् । 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति याज्ञवल्क्यवचनेन मातापितृसम्बन्ध एव तत्सत्वात् । ऊर्ध्वं सापिण्ड्यं निवर्तत इति शेषः । तेन मातृकुले पितृकुले चैकपिण्डदानक्रियान्वयित्वं सापिण्ड्यमित्याहुः । तेनैकस्य पित्रादयः षट् मात्रादयः षट् सपिण्डा भवन्ति । अत्र केचिदुभयतः सापिण्ड्यनिवृत्तावेवोद्वाहो नान्यथेत्याहुः। हरदत्तादयस्तु सगोत्रत्ववत् सापिण्ड्यस्य सप्रतियोगिकत्वेन संयोगवदुभय-निरूप्यत्वात् एकतो निवृत्तावन्यतो निवृत्तेरावश्यकत्वात् मूलपुरुषमारभ्याष्टमो वरः मूलपुरुषमारभ्य द्वितीयातृतीयादिकामुद्वहेत् इत्याहुः ।

शिष्टास्तु न वधूवरयोः स्वतः सापिण्ड्यं किन्तु कूटस्थसन्ततित्वात् सापिण्ड्येनैव। अतोऽष्टमवरं प्रति कन्याया असापिण्ड्येऽपि कन्यायाः कूटस्थेन सापिण्ड्यात् तत्सन्ततिस्थत्वाद्वरस्तां प्रति सपिण्ड एवेत्यविवाहः । सापिण्ड्यासापिण्ड्ययोः प्रतियोग्यनुयोगिभेदेनाविरोधादित्याहुः । इदमेव युक्तम् । आशौचेऽप्येवं सापिण्ड्यं ज्ञेयम् । कूटस्थो मूलपुरुषः । विश्वरूपनिबन्धे-

**एवमुक्तप्रकारेण पितृबन्धुषु सप्तमात् ।**
**ऊर्ध्वमेव विवाह्यत्वं पञ्चमान्मातृबन्धुतः ।।**

**सन्तानो भिद्यते यस्मात्पूर्वजादुभयत्र च ।**
**तमादाय गणेद्धीमान् वरं यावच्च कन्यकाम् ।।**

**स्मृतितत्त्वे-**

**आसप्तमात्पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।**
**अविवाह्या सगोत्रा च समानप्रवरा तथा ।।**

तथा-

**असपिण्डाञ्च वरयेत्पितृतः सप्तमात्परम् ।**
**मातृतः पञ्चमादूर्ध्वमसमानर्षगोत्रजाम् ।।**

**बृहन्नारदीये–**

**मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमादपि ।**
**द्विजः समुद्वहेत्कन्यामन्यथा गुरुतल्पगः ।।**

**मूलगोत्रादन्यगोत्रामुद्वहेदष्टमोऽष्टमीम् ।।**

अन्यगोत्रीं षष्ठः षष्ठीं समुद्वहेत् ।

**सन्तानो भिद्यते यस्मात्कन्यायाश्च सुतस्य च ।**
**तत्रैवासप्तमादर्वागन्यगोत्रे तु जायते ।।**

**सन्ततिः पुरुषस्यापि स्त्रिया अपि च वा यदि ।**
**सापिण्ड्यं तद्विजानीयाद्वरवध्वोर्विवाहके ।।**

**पितृतः सप्तमादर्वाक् मातृतः पञ्चमादधः ।**
**सपिण्डतानुभावेन नोद्वहेत्तत्र कन्यकाम् ।।**

**यच्च विष्णुपुराणे–**
**पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।**
**गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप ।।** इति

तद्वाक्यं पञ्चमीं सप्तमीमतीत्येति व्याख्येयम् ।

**पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।**
**क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ।।**

इति अपरार्कवचनात् । शङ्खलिखितौ–

**सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।**
**पिण्डश्चोदकदानञ्च आशौचं च तदानुगम् ।।**

गोत्रं सन्तानम् । आशौचं तानभिव्याप्य गच्छतीत्यर्थः ।

**ब्राह्मे च–**

**सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी ।**
**सपिण्डता ततः पश्चात्समानोदकधर्मता ।।**

**ततः कालवशात् तत्र विस्मृतौ नामगोत्रतः ।**
**समानोदकसंज्ञा तु तावन्मात्रापि नश्यति ।।**

सप्तोर्ध्वं त्रयः सोदकाः ततो गोत्रजा इति ।

**तथा–**

**पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।**
**सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ।।**

इति । यत्तु–

**दशभिः पुरुषैः ख्यातात् श्रोत्रियाणां महाकुलात् ।**
**उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ।।**

**पञ्चमीं तदभावे तु पितृपक्षे ह्ययं विधिः ।**
**सप्तमीञ्च तथा षष्ठीं पञ्चमीं च तथैव च ।।**

**एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ।**
**तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।।**

**विवाहयेन्मनुः प्राह पाराशर्योऽगिरा यमः ।।**
**यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।**
**नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत् प्रदृश्यते ।।**

**चतुर्विंशतिमतम्–**

**चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा ।**
**पाराशर्यमते षष्ठीं पञ्चमो नतु पञ्चमीम् ।।**

इति पराशरवचनं च तदनुकल्पत्वेन आपदि पञ्चम्यादिपरिणयनं कार्यमित्येवं परमिति प्रतीयते ।

**पञ्चमात्सप्तमाद्धीमान् यः कन्यामुद्वहेद् द्विजः ।**
**गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन् ।।** इति विष्णूक्तेः

देशभेदेनाऽपि विरुद्धवाक्यानां व्यवस्था प्रमाणेषूक्ता ।

सापिण्ड्यं मुनिभिः प्रोक्तं मातृतः पितृतः क्रमात् ।
तत्सापिण्ड्यं विजानीयान्नर्मदोत्तरवासिनाम् ।।

सापिण्ड्ये प्राहुराचार्याः सङ्कोच्यापि सपिण्डताम् ।
ज्ञातव्यं तद्धि धर्मज्ञैर्नर्मदायाश्च दक्षिणे ।।

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा ।
अतीत्य मातृतस्त्रीणि पञ्चमेऽत्येति वै पितुः ।।

तृतीयां वा चतुर्थीं वा पञ्चमीं पितृमातृतः ।
दक्षिणे तूद्वहेत्कन्यां स्वसारं मातरं विना ।।

पञ्चमात्सप्तमात्पूर्वं कन्यामुद्वहते यदि ।
स्वसारं मातरं चापि द्विजः स्याद्गुरुतल्पगः ।।

स्नुषामुखीं तथा पुत्रीं पञ्चमीं तु विवाहयेत् ।
भगिनीं मातरं चैव नोद्वहेत्पतितो द्विजः ।।

स्मृत्यन्तरे–

आरभ्य कूटात्पुरुषात् पञ्चमो न तु पञ्चमीम् ।
चतुर्थः पञ्चमीं चैव पञ्चमी षष्ठमुद्वहेत् ।।

तथा–

तृतीयो वरयेत्कन्यां चतुर्थीं पञ्चमीं तथा ।
चतुर्थः पञ्चमीं कन्यां पञ्चमी षष्ठमुद्वहेत् ।।
चतुर्थीमुद्वेहकन्यां पञ्चमो नतु पञ्चमीम् ।

मातुलकन्योद्वाहश्च कार्यः ।

मातुलस्य सुतां केचित्पितृष्वसृसुतां तथा ।
विवहन्ति क्वचिद्देशे सङ्कोच्याऽपि सपिण्डताम् ।। इति शातातपोक्तेः

''तृप्तां जुहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव'' इति श्रुतेश्च । ''तृतीये संगच्छावहै चतुर्थे संगच्छावहै'' इति श्रुतेश्च, षट्त्रिंशन्मतेऽपि–

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ।।

तथा–

पितृष्वसृसुतायाश्च सुताया मातुलस्य च ।
विवाहं दक्षिणे देशे प्रशंसन्ति मनीषणः ।। इति

व्याघ्रपादः–

उद्वहेद्दक्षिणे विद्वान् मातुलस्य च वै सुताम् ।
उत्तरे नोद्वहेद्धीमानेष धर्मः सनातनः ।। इति

अत एव भगवता वासुदेवेन धर्मसंस्थापनाचार्येण प्रद्युम्नपुत्रस्यानिरुद्धस्य मातुलस्य रुक्मिणः पुत्रीं विवाहयामास । तथा अर्जुनस्यापि पितृस्वस्रेयीं सुभद्रां दत्तवानित्येतत्प्रमेयं सकलस्मृत्यर्थकथनार्थे निजग्रन्थे भारतादौ भगवान् कृष्णद्वैपायनो निवेशितवान् ।

तथा ज्योतिःशास्त्रेऽपि मातुलकन्याविवाह उक्तः ।

राशिकूटादिकं सर्वं शकुनं तु यथाक्रमम् ।
मातुलाख्ये विवाहे तु न दोषो गौतमात्रिभिः ।।

विन्ध्यस्य दक्षिणे देशे विवाहादिमहोत्सवे ।
मातुलाख्यविवाहे तु कुर्यादित्याह गौतमः ।।

वराहसंहितायाम्–

न तिथिर्न च नक्षत्रं न द्वादशबलाबलम् ।
दम्पत्योः शुभकृन्नूनं मातुलाख्ये करग्रहे ।।

शकुने च निमित्ते च शुभमातुलमन्दिरे ।
विवाहं शुभदं प्रोक्तं राशिकूटादिकं विना ।।

राश्यादिकूटरहितेऽपि वधूवरस्य
वैवाहिकर्म शुभदं च वदन्दि तज्ज्ञाः ।
पाणिग्रहे सकलमङ्गलबन्धजोत्थं
शश्वत्प्रशस्तशकुनं खलु मातुलाख्ये ।।

**येषां परम्परावाप्ताः पूर्वजैरप्यनुष्ठिताः ।**
**तैरेतैर्नैव दूष्येयुराचारैर्नेतरे पुनः ।।**

**यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् ।**
**नित्यं संव्यवहार्यः स्याद्वेदाच्चैतत् प्रदृश्यते ।।**

इति चतुर्विंशतिमते च । एवञ्च मातुलकन्याविवाहविधिनिषेधयोः माधव-स्मृतिचन्द्रिकाकारादिभिः प्रमाणैर्देशभेदेन व्यवस्थापितत्वात् मातुलकन्योद्वाहस्य अनाचारत्वं वदन्तो मूर्खा इत्युपेक्ष्याः ज्ञेयम् ।

सापत्नमातामहकुले च पूर्वोक्तसापिण्ड्यं ज्ञेयम् । यथाह सुमन्तुः-

**मातृपितृसम्बन्धा आसप्तमादविवाह्या भवन्ति ।**

अपञ्चमादन्येषां पितृपत्न्यः सर्वा मातरः तद्भ्रातरो मातुलास्तद्भगिन्यो मातृ-स्वसारः तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि । अन्यथा सङ्करकारिणः स्युस्तथाध्यापयितुरेतदेवेति ।

**मात्स्ये-**

**समानप्रवरा चैव शिष्यसन्ततिरेव च ।**
**ब्रह्मदातुर्गुरोश्चैव सन्ततिः प्रतिषिद्ध्यते ।।**

**बौधायनः-**

**मातुः सपत्न्या भगिनीं तत्सुतां च विवर्जयेत् ।**
**पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत् ।।**

केचित्तु 'ज्येष्ठो भ्राता पितुः समः' इति मनूक्तेस्तत्पत्न्या मातृत्वात् ज्येष्ठभ्रातृपत्नीभगिनी न विवाह्या, तथा- 'उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता' इति मनूक्तेः । गुरुणा त्रिपुरुषं सापिण्ड्यम् । सखापि निर्वाप्यः । अतस्तेषां कन्या नोद्वाह्याः ।

**गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः ।**
**गुरोश्च कन्यां शिष्यो वा तत्सन्तत्यापि नेष्यते ।।**

**पुरुषत्रयपर्यन्तं भ्रात्रादेः नैतदिष्यते ।**
**वाक्सम्बन्धकृतानां तु स्नेहसम्बन्धभागिनाम् ।।**
**विवाहोऽत्र न कर्तव्यो लोकगर्हा प्रसज्यते ।।**

इति वचनाच्चेत्याहुः, तत्र मूलं चिन्त्यमित्यन्ये । ''असमानार्षगोत्रजाम्''इत्यस्य समाने आर्षगोत्रे प्रवरगोत्रे यस्य तस्माज्जाता या न भवति तामित्यर्थः ।

## अथ गोत्रप्रवरनिर्णयः

तौ च भिन्नौ निषेधे निमित्तम् । 'सगोत्राय दुहितरं न प्रयच्छेत्' इत्यापस्तम्बोक्तेः। 'असमानप्रवरैः विवाहः' इति गौतमोक्तेश्च । तत्र गोत्रलक्षणमाह प्रवरमञ्जर्यां बौधायनः-

**विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।**
**अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः ।।**

सप्तानामृषीणां अगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति ।

**बौधायनः-**

**एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ।**
**तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ।।**

**स्मृत्यर्थसारे-**

**व्रियमाणतया वाऽपि सत्तया वाऽनुवर्तनम् ।**
**एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ।।**

भृग्वङ्गिरोगणेषु तु माधवीये-

**[१]पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।**
**भृग्वङ्गिरोगणेष्वेव शेषेष्वेकोऽपि वारयेत् ।।**

शेषगोत्रेषु एकोऽपि समानः प्रवरः विवाहं वारयेदित्यर्थः ।

---

१ पञ्चार्षे इति नि.सिं पाठः । वीरमित्रोदये, प्रवरदर्पणे च पञ्चानामित्येव पाठः ।

**बौधायनोऽपि-**

भृग्वङ्गिरसावधिकृत्य "व्द्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणाम् । त्र्यार्षेयसन्निपातेऽविवाहः पञ्चार्षेयाणाम्" इति । भृग्वङ्गिरोगणेष्वपि जमदग्निगौतमभरद्वाजेष्वेकप्रवरसाम्ये सर्वेषामप्यसाम्ये वा सगोत्रत्वादेवाऽविवाह इति ।।

अथ गोत्राणि प्रवराणि उच्यन्ते, बौधायनः-

**गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।**
**ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ।।**

**भृग्वङ्गिरः कश्यपोऽत्रिर्वसिष्ठागस्त्यगाधिजाः ।**
**सप्त ब्रह्मर्षयस्तेभ्यो गणा अष्टादशाभवन् ।।**

**भृगोः पञ्चगणाः पूर्वमष्टावङ्गिरसो गणाः ।**
**अन्ये त्वैकैकगणिन इत्यष्टादश तद्गणाः ।**

**जमदग्निर्वीतहव्यो वैन्यो गृत्समदाह्वयः ।**
**वाध्र्यश्वो गौतमाख्यश्च भरद्वाजाह्वयः कपिः ।**
**हारीतो मौद्गलः काण्वो विरूपो विष्णुवृद्धकः ।।**

**अत्रिर्विश्वामित्रनामा वसिष्ठः कश्यपाह्वयः ।**
**अगस्त्यश्चेति मुनयो ह्यष्टादशगणाः स्मृताः ।।**

**जमदग्निश्च वत्सश्च श्रीवत्सश्च्यवनाह्वयः ।**
**आप्नवानौर्व[१]माण्डव्यौ जीवन्तो देवरातकः ।।**

**[२]वैरोहित्यो वटो वैदमाण्डकेयेतशायनाः ।**
**प्राचीनयोग्यवाल्मीकिरार्ष्टिषेणः स्वलूपकः ।।**

---

१ सावर्णिः इति संस्कारगणपतिपाठः ।

२ वीतशायनशाखाख्यो वैरोहित्यो वटाह्वयः ।
मण्डः प्राचीनयोग्यः स्यादार्ष्टिषेणस्त्वनूपकः ।।
एतानि भार्गवाख्यानि दश सप्तोत्तराणि च ।
जामदग्न्यगणे तस्मिन्न विवाहः परस्परम् ।। इति संस्कारगणपतौ पाठः)

**पाणिनिर्भार्गवाख्यानां सङ्ख्या एकोनविंशतिः ।**
**जामदग्निगणस्तस्मिन् अविवाहः परस्परम् ।।१।।**

**[१]वीतहव्यो यस्कमौनमौकवाधूलजैमिनी ।**
**शालङ्कायनजाबालिः शार्कराष्टिश्च वेतसः ।।**

**दैवन्त्यावनसावर्णिः द्वादशैते भृगोः स्मृताः ।**
**वीतहव्यगणस्तस्मिन्नविवाहः परस्परम् ।।२।।**

**वैन्यः पार्थश्च गोत्रे द्वे भवतो भार्गवाह्वये ।**
**एष वैन्यगणस्तस्मिन्न विवाहः परस्परम् ।।३।।**

**[२]उभे गोत्रे गृत्समदः शौनको भार्गवाह्वये ।**
**गणे गृत्समदस्यास्मिन्नविवाहः परस्परम् ।।४।।**

**[३]द्वे वाध्रश्वमित्रयुवोर्गोत्रे भार्गवनामके ।**
**वाध्रश्वाख्यगणस्तस्मिन्नविवाहः परस्परम् ।।५।।**

**जामदग्न्यादयः पञ्चगणा भृगुगणाः स्मृताः ।**
**तेषां भार्गवगोत्रेण न विवाहः परस्परम् ।।६।।**

एतेषां स्वं स्वं गणं त्यक्त्वा सर्वैर्विवाहः । तदुक्तं स्मृत्यर्थसारे-

**यस्का मित्रयुवा वैन्याः शुनकाः प्रवरैक्यतः ।**
**स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ।।** इति

---

१ वीतहव्यो यास्कमौनमौकवाधूलसंज्ञकाः ।
सावेतसः षडेतानि भार्गवाख्यान्वये गणः ।
वीतहव्यस्य चान्योन्यं न कार्यं पाणिपीडनम् ।। इति संस्कारगणपतिः ।

२ उभगो वै गृत्समदः शौनको भार्गवाह्वयः ।
गणे गृत्समदे तस्मिन्नान्योन्यं पाणिपीडनम् ।। इति संस्कारगणपतिः ।

३ वाध्र्यश्वो मित्रयुक्चैव उभौ भार्गवनामकौ ।
वाध्र्यश्वस्य गणे तस्मिन्नुद्वाहो न परस्परम् ।।५।। इति संस्कारगणपतिः ।

[1]अङ्गिरसः–

गौतमोऽयास्य औचथ्य औशिजः कुक्षिवादनः ।
बृहदुक्थो वामदेवो गोत्राणीमानि सप्त च ।
गौतमस्य गणस्तस्मिन्नविवाहः परस्परम् ।।१।।

[2]भरद्वाजः कुशिकोऽग्निवेश्य औजायनः कनः ।
शौङ्गशैशिरऋक्षीलवादनश्च बृहस्पतिः ।।

सर्वस्तम्बकपिर्मातावचसो गार्ग्यसैन्यके ।
शृङ्गारौक्षायणारक्षकपिलोऽष्टादश स्मृताः ।।
भरद्वाजगणस्तस्मिन्नविवाहः परस्परम् ।।

[3]कपिश्च महदक्षीयरुक्षीयस्त्रीणि केवलम् ।
अयं कपिगणस्तस्मिन्नविवाहः परस्परम् ।।

[4]हरितो यौवनाश्वश्च मान्धाता कुत्सनामकः ।
पिङ्गश्च शङ्खदम्भश्च कौमारो गजभौमकः ।।

अम्बरीषो दशैते च हरितस्य गणः स्मृतः ।

---

१ गौतमः–
गौतमो यास्क औतथ्यः कक्षीवानौशिजस्तथा ।
बृहदुक्थो वामदेवो गोत्रनामानि सप्त च ।
गौतमस्य गणस्तस्मिन्विवाहो न परस्परम् ।। इति संस्कारगणपतिः

२ भरद्वाजः कुशङ्क्रोऽग्निवेश्योज्जेयमतः कतः ।
शैशिरः पक्षिशुङ्गौ च वन्दनश्च बृहस्पतिः ।।
सर्वस्तम्वः कपिर्मातर्वचसो गार्ग्यसैन्यकौ ।
भरद्वाजगणः सप्तदश गोत्रमिति स्मृतम् ।
अस्मिन्परस्परं कार्यं न कन्यापाणिपीडनम् ।। इति संस्कारगणपतिः ।

३ कपिश्च महदुक्षीय उदीयस्त्रीणि केवलम् । इति संस्कारगणपतिः ।

४ हारीतो यौवनाश्वश्च मान्धाता कुत्सनामकः ।
पिङ्गलः शङ्खदक्षौ च भौमश्च गजनामकः ।
अम्बरीशो दशैतानि हारीतस्य गणः स्मृतः ।
तस्मिन्परस्परं पाणिग्रहणं न शुभं मतम् ।। इति संस्कारगणपतिः ।

तस्मिन् परस्परं पाणिग्रहणं न विधीयते ॥४॥

[१]मुद्गलश्च त्रिवेदी च तार्क्ष्यो [२]गार्ग्यश्च एव च ।
मुद्गलस्य चतुर्गोत्रं न विवाहः परस्परम् ॥५॥

कण्वोऽजमीढ इत्येते गोत्रे [३]कण्वेति नामकः ।
तस्मिन्परस्परं पाणिग्रहणं न विधीयते ॥६॥

[४]विरूपः पृषदश्वश्च अङ्गुष्ठश्च रथीतरः ।
उष्ट्रदंष्ट्रश्च पञ्चास्मिन्नविवाहः परस्परम् ॥७॥

[५]विष्णुवृद्धः पौरुकुत्सः त्रसदस्युश्च दभ्रणः ।
माषणो भद्रणाख्यश्च मादरायणिमद्रिणाः ॥

सात्यकाम्योपवीत्यौ च गविष्टरवितारुणिः ।
शयेमण्डैः नितुन्दिश्च गोत्राण्येतानि षोडश ।
विष्णुवृद्धगणस्तस्मिन्नविवाहः परस्परम् ॥८॥

[६]गौतमादिगणा ह्यष्टौ आङ्गीरसगणाः स्मृताः ।
तेषामाङ्गीरसाख्येन गोत्रेण न करग्रहः ॥

---

१ मौद्गल्यतार्क्ष्यभार्म्याश्वस्त्रीणि गोत्राण्यमूनि हि ।
मौद्गल्यस्य गणस्तस्मिन्न मिथः पाणिपीडनम् ॥

२ यद्यप्ययमेव पाठः हस्तप्रतिषु वर्तते, तथापि "हर्म्याश्व एव च" इति पाठः साधुरिति प्रतीयते।

३ "कण्वगणः स्मृतः" इति संस्कारगणपतिः ।

४ विरूपोऽष्टादंष्ट्रिनामा पृषदश्वश्च मौद्गणः ।
चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः ॥
परस्परं विवाहोऽस्मिन्नविधेय इतीरितः ॥ इति संस्कारगणपतिः ।

५ विष्णुवृद्धः पौरकुत्सस्त्रसदस्यः कतस्तथा ।
मद्रणो मद्रणाख्यश्च बादरायणसंज्ञकः ॥
सत्यकाम्यौपमित्यौ च गविः सात्यकितालुकौ ।
नितुन्दश्चेति गोत्राणि त्रयोदशमितानि च ।
विष्णुवृद्धगणस्तसम्मिन्न विवाहः परस्परम् ॥ इति संस्कारगणपतिः ।

६ गौतमादिगणा अष्टौ ये तथाऽङ्गिरसो गणाः ।
तथाऽप्येषां गणानां तु विवाहः स्यात्परस्परम् ॥ इति संस्कारगणपतिः ।

एतेष्वष्टसु मध्ये हरितादयः केवलाङ्गिरसाः ।।९ ।। इत्याङ्गिरसो गणः ।

**आत्रेयो वामरथ्यश्च गाविष्ठिरधनञ्जयौ ।**
**सुमङ्गलो[१]ऽतिथि[२]र्बीजोवाश्चाण्यर्चनानसः ।।**

**पौर्वातिथो वाद्भुतकः श्यावाश्वश्च गविष्ठिरः ।**
**आत्रेयो द्वादशैतानि न विवाहः परस्परम् ।।** इत्यात्रेयः

**विश्वामित्रो देवरातो मनुस्तन्तुश्च [३]औलकिः ।**
**[४]गालवश्चिकितोलूकौ [५]याज्ञवल्क्यश्च बादरिः ।।**

**बृहदग्निः कालभवौ [६]शललो वभ्रुलोहितौ ।**
**[७]शालंकायन[८]शालाक्षिगाधिनो रेणुवेण्विति ।।**

**[९]वारिधापयताज्यश्च देवश्रवधनञ्जयौ ।**
**माधुछन्दस[१०]वावर्गो [११]कामकायनपूरणौ ।।**

**सूनुः पनसधूमाख्यः जठर[१२]स्त्वेकहव्यकः ।**
**शृङ्गः कतः शैशिरश्च श्रौमतः कौशिकोऽष्टकः ।।**

---

१ अदितिः इति हस्तप्रतिषु वर्तते, अतिथिः इति प्रवरमञ्जर्यादावुल्लिखितः, अत अतिथिरित्येव पाठ आदृतः ।

२ बीजोवाश्चाण्यर्चनानसः । इति पाठः हस्तप्रतिष्वस्ति । प्रवरमञ्जर्यादौ बीजवापस्य, अर्चनानसस्य च ग्रहणात् ''बीजवापश्चाप्यर्चनानसः'' इति पाठेन भाव्यमिति भाति ।

३ ''औलुकः'' इति प्रवरमञ्जरीपाठः ।

४ बालाकिः इति ज्योतिर्निबन्धपाठः ।

५ याज्ञवल्किश्च इति ज्योतिर्निबन्धपाठः ।

६ शबलीबहुलोहितौ इति ज्योतिर्निबन्धपाठः ।

७ शालङ्कायनवावर्ण्यकामकायनपूरणौ । इति ज्योतिर्निबन्धपाठः ।

८ ''शालाक्षः'' इति प्रवरमञ्जरीपाठः ।

९ ''वारिधापयन्तः'' इति प्रवरदर्पणपाठः ।

१० ''वारक्यः'' इति प्रवरदर्पणपाठः अयमेव समीचीनः पाठ इति भाति वावर्ग इति पाठः प्रवरदर्पणादिषु कुत्राऽपि नोपलब्धः ।

११ ''कामलायनः'' इति प्रवरदर्पणपाठः ।

१२ एकहव्यजः इति गोत्रप्रवरनिर्णये ।

उद्दालो देवतरसो वालखिल्योऽघमर्षणः ।
[१]शालावातो लोहिताक्षो जह्नुरौक्षिकरोहिणौ ॥

अक्षीलश्चैकपंचाशद् विश्वामित्रगणाः स्मृताः ॥
तस्मिन् परस्परं पाणिग्रहणं न विधीयते ॥ इति वैश्वामित्रः

वसिष्ठ इन्द्रप्रमदो वासिष्ठ[२]स्त्वाभरद्वसुः ।
मैत्रावरुणकौण्डिण्यव्यासशक्त्युपमन्यवः ॥

सांख्यायनो जातुकर्ण्यो [३]गौरवीतिः पराशरः ।
संकृतिः पूतिमाषश्च शवुशैवगणस्तथा ॥

तण्डिर्वैयाघ्रपाच्चैव गोत्राण्येतानि विंशतिः ।
वसिष्ठस्य गणस्तस्मिन्नविवाहः परस्परम् ॥

कश्यपो रेभरैभौ च शाण्डिल्यो देवलोऽसितः ।
वैशम्पायनभूतांशुसुमेधोनैध्रुवा अपि ॥

धन्वन्तरिश्चावत्सारः सौजामि[४]र्भाङ्गुरिस्तथा ।
चतुर्दशकश्यपाख्येन नाऽनोन्यं पाणिपीडनम् ॥

[५]अगस्त्यदार्ढ्यच्युत इध्मवाहस्त्रयोऽप्यमी ।
एषोऽगस्त्यगणस्तस्मिन्न विवाहः परस्परम् ॥

एवमष्टादशगणा गोत्रप्रवरसंयुताः ।
स्वं स्वं हित्वा गणं सर्वे विवहेयुर्गणान्तरैः ॥
वर्जयित्वा निषिद्धानि विवाह्याः स्युः परस्परम् ॥

॥ इत्यष्टादशगणाः ॥

---

१ शालावतः इति प्रवरमञ्जरी ।
२ ''आभरद्वसव्यः'' इति धर्मसिन्धुः पपाठ ।
३ ''गौरवी तु'' इति संस्कारगणपतिः । ''गौरवीतः'' इति अभिनवमाधवाचार्योद्धृतगोत्रप्रवरनिर्णये ।
४ ''भागुरिः'' इति प्रवरमञ्जरीपाठः ।
५ ''त्रीण्यगस्त्यो वीतवहो दार्ढ्यच्युत इति स्मृतः'' इति संस्कारगणपतिः ।

## अथ द्विगोत्राः, द्व्यामुष्यायणाः

**यद्गोत्रे पुत्र उत्पन्नस्तस्यैकप्रवरो भवेत् ।**
**यद्गोत्रे स च दत्तः स्यात्तस्य च प्रवरद्वयम् ॥**

**द्व्यामुष्यायणका नाम दत्तकक्रीतकादयः ।**
**गोत्रद्वयेऽप्यनुद्वाहः शौंगशैशिरयोर्यथा ॥**

**अथ द्व्यामुष्यायणाः**

**जमदग्निगणस्याऽपि विश्वामित्रगणस्य च ।**
**देवराताख्यगोत्रेण न विवाहः परस्परम् ॥१॥**

**वीतहव्यगणस्याऽपि विश्वामित्रगणस्तथा ।**
**शालंकायनगोत्रेण न विवाहः परस्परम् ॥२॥**

**भरद्वाजगणस्याऽपि विश्वामित्रगणस्य च ।**
**कतशैशिरिशृङ्गाभ्यां न विवाहः परस्परम् ॥३॥**

**आत्रेयाख्यगणस्याऽपि वसिष्ठाख्यगणस्य च ।**
**जातुकर्ण्यवामरथ्यौ न विवाहः परस्परम् ॥४॥**

**भरद्वाजगणस्याऽपि तथा कपिगणस्य च ।**
**विवाहो न विधेयः स्यादन्योन्यं न कदाचन ॥५॥**

स्मृत्यर्थसारे तु विशेषः ।

**कपी प्रसिद्धावुदितौ विवाह्यौ स्वतन्त्र एकस्स परोस्वतन्त्रः ।**
**तत्र स्वतन्त्रस्य कपेर्विवाहं मिथो भरद्वाजकुलेन चाहुः ॥**

**संकृत्याद्या पूतिमाषा नक्तं कश्यपसंज्ञकाः ।**
**वासिष्ठाश्च स्वगोत्रत्वान्न विवाहः परस्परम् ॥६॥**

एवं दत्तकक्रीतकृत्रिमस्वयंदत्तकपुत्रिकपुत्रादीनामुत्पादकपालकयोः पित्रोः गोत्रप्रवरा वर्ज्या इति प्रवरमञ्जरी । क्षत्रियवैश्ययोस्तु पुरोहितगोत्रप्रवराविति सर्वसिद्धान्तः । कपिभरद्वाजयोर्न विवाहः इत्युक्तं स्मृत्यर्थसारे ।

**भरद्वाजा[1]श्च कपयो गर्गा रौक्षायणा इति ।**
**चत्वारोऽपि भरद्वाजा गोत्रैक्यान्नान्वियुर्मिथः ।।**

**कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः ।**
**नोद्वहेयुः सगोत्रत्वात् प्रवरैक्याच्च कुत्रचित् ।।** इति प्रवरमञ्जरी

सगोत्रादिविवाहे प्रायश्चित्तमुक्तं स्मृत्यर्थसारे-

**इत्थं सगोत्रसम्बन्धविवाहविषये स्थिते ।**
**यदि कश्चिद् ज्ञानतस्तां कन्यामूढ्वोपगच्छति ।**
**गुरुतल्पव्रताच्छुद्ध्येत् [2]तज्जन्यो त्यज्यतां व्रजेत् ।।**

**भोगतस्तां परित्यज्य पालयेज्जननीमिव ।**
**अज्ञानादैन्दवैः शुद्ध्येत् त्रिभिर्गर्भस्तु कश्यपः ।।**

एवं सापिण्ड्येऽपि । ''सपिण्डापत्यदारेषु प्राणत्यागो विधीयते'' इति बृहद्यमोक्तेः । बौधायनः ''सपिण्डां सगोत्रां चेदमत्योपयच्छेन्मातृवदेतां बिभृयात् '' इति ।

कन्याविवाहकाल उक्तो ज्योतिर्निबन्धे-

**षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।**
**सोमो भुङ्क्ते [3]ततस्त्वब्दं गन्धर्वश्च तथोत्तरः ।।**

**राजमार्तण्डः-**

**अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् ।**
**तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ।।**

**मासत्रयादूर्ध्वमयुग्मवर्षे**
**युग्मेऽपि मासत्रयमेव यावत् ।**

---

१ सकपयः इति स्मृत्यर्थसारमुद्रितपुस्तकपाठः ।

२ ''गर्भस्तज्जोऽन्त्यतां व्रजेत्'' इति मुद्रितस्मृत्यर्थसारे, निर्णयसिन्धौ च पाठः ।
स्मृतिचन्द्रिकायां संस्कारकाण्डे विशेष उक्तः- 'यस्तु तत्र प्रजामुत्पादयति स स्वजात्यादिना हीयते इत्याहापस्तम्बः- ''समानगोत्रप्रवरां कन्यामूढ्वोपगम्य च । तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ।। इति ।।

३ ततस्तद्वद्गन्धर्वश्च तथाऽनलः'' इति निर्णयसिन्धुः ।

विवाहशुद्धिं प्रवदन्ति सन्तो
वात्स्यादयः स्त्रीजनिजन्ममासात् ।।

पराशरमाधवीये तु–

जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ।। इत्युक्तम्

भारते–

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः ।

संवर्तः–

विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः ।
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।।

दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ।।

देवलः–

यस्तां समुद्वहेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद् वृषलीपतिम् ।।

यमः–

कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद्गृहे ।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ।।

विष्णुः–

ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ।

स्वयंवरकर्त्र्याः रजस्वलायाः कन्यायाः परिणये वरस्य दोषाभावमाह यमः–

एवं चोपनतां पत्नीं नावमन्येत्कदाचन ।
न तु तां बाधकां विद्यात् मनुः स्वायम्भुवोऽब्रवीत् ।।

आश्वलायनः—

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिं च कारयित्वा तामुद्वहेदानृशंस्यधीः ।। इति

यज्ञपार्श्वः—

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ।।

स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा [१]ततस्तन्त्रं प्रवर्तयेत् ।।

मनुः—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।।

यद्यपि दशवर्षादूर्ध्वं विवाहो निषिद्धः । तथापि बहुप्रतिबन्धकसद्भावे द्वादशाब्दादि ज्ञेयम् ।

## अथ गुर्वर्कबलम्

ज्योतिर्निबन्धे गर्गः—

स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ।।

जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः ।
विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः ।।

देवलः—

नष्टात्मजा धनवती विधवा कुशीला
पुत्रान्विता हतधवा सुभगा विपुत्रा ।
स्वामिप्रिया विगतपुत्रधवा धनाढ्या
वन्ध्या भवेत्सुरगुरौ क्रमशोऽभिजन्मा ।।

---

१ "ततः कर्म" इति स्मृत्यर्थसारपाठः ।

बृहस्पतिः–

झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ।।

लल्लः–

द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीये च ।
प्राप्ते पाणिग्रहणे जीवे वैधव्यमाप्नोति ।।

गर्गः–

सर्वत्रापि शुभं दद्यात् द्वादशाब्दात् परं गुरुः ।
पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ।।

सप्तमात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि ।
अशुभोऽपि शुभं दद्यात् शुभदर्क्षेषु किं पुनः ।।
रजस्वलायाः कन्याया गुरुशुद्धिं न चिन्तयेत् ।। इति

अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कबला स्मृता ।
कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बला ।।

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।। इति

अथ विवाहादिशुभानां निषिद्धकालः ।

शौनकः–

गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ ।
नष्टे शशिनि शुक्रे वा बाले वृद्धेऽथवा गुरौ ।।

पौष्ये चैत्रेऽथ वर्षासु शरद्यधिकमासके ।
केतूद्गमे निरंशेऽर्के सिंहस्थेऽमरमन्त्रिणि ।।

विवाहव्रतयात्रादि पुरहर्म्यगृहादिकम् ।
क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत् ।।

अतिचारगते गुरावित्यस्यापवादमाह वसिष्ठः-

**अतिचारगते जीवे वर्जयेत्तदनन्तरम् ।**
**विवाहादिषु कार्येषु अष्टाविंशतिवासरान् ।।**

सिंहस्थगुरोरपवादमाह पराशरः-

**गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ ।**
**मघास्थे सर्वदेशेषु तथा मीनगते रवौ ।।**

**वसिष्ठोऽपि-**

**विवाहो दक्षिणे कूले गौतम्या नेतरत्र तु ।**
**भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ।।**
**विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति ।।**

## अथ मासनिर्णयः

**व्यासः-**

**माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः ।**
**कार्तिको मार्गशीर्षश्च मध्यमौ निन्दिताः परे ।।**

**वसिष्ठः-**

**पौषेऽपि कुर्यान्मकरस्थितेऽर्के चैत्रे भवेन्मेषगतो यदा स्यात् ।**
**प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेऽर्के ।।**

अन्यत्र तु वैपरीत्यमुक्तम् ।

**यदि रविगतमीने विंशतिर्वासरे वा**
**न भवति खलु दोषः चैत्रमासे विवाहः ।**
**यदि रविगतमेषे चैत्रमासे विवाहः**
**सकलशुभविनाशः सर्वदा वर्जनीयः ।।**

**मीनराशिस्थिते सूर्ये विंशतिर्वासरे यदि ।**
**विवाहः शुभदश्चैव न तु मेषे कदाचन ।।** इत्यादि

चण्डेश्वरः–

मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ।।

कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् ।
उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् ।।

रत्नकोशे–

जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् ।
ज्येष्ठमासाद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि ।।

पराशरः–

अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि ।
व्यत्ययो वा तयोस्तत्र ज्येष्ठो मासः शुभप्रदः ।।

मिहिरः–

ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते ।।

द्वौ ज्येष्ठौ मध्यमौ प्रोक्तौ एकज्येष्ठं सुखावहम् ।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतम् ।।

विवाहादिषु घातचन्द्रदोषो नास्तीत्युक्तं नारदीये–

यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत् ।
विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने ।
घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् ।।

विवाहचौलव्रतबन्धयज्ञे पट्टाभिषेके च तथैव राज्ञाम् ।
सीमन्तयात्रासु तथैव जाते नो चिन्तनीयः खलु घातचन्द्रः ।।

अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः ।
प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि ।।
दोषाय मङ्गले नूनमदोषायैव कालजाः ।।

अकालवृष्टिस्वरूपमाह लल्लः

**पौषादिचतुरो मासाः प्रोक्ता वृष्टिरकालजा ।** इति

**ज्योतिःप्रकाशे–**

**अर्वाक् षोडशनाड्यः संक्रान्तेः पुण्यदाः परतः ।**
**उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः ।।**

**गर्गः–**

**दिग्दाहे दिनमेकं च ग्रहे सप्तदिनानि तु ।**
**भूकम्पे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् ।।**

**सम्बन्धतत्वे –**

**भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति ।।**

**कन्यादातृक्रममाह याज्ञवल्क्यः–**

**पिता पितामहो भ्राता सकुल्यो जननी तथा ।**
**कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ।।**

**माधवीये नारदः–**

**पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः ।**
**मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ।।**

**माता त्वभावे सर्वेषां प्रकृते यदि वर्तते ।**
**तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ।।**
**सकुल्यः पितृपक्षीयः बान्धवो मातृवंशजः ।**

**परकीयकन्यादाने विशेषो मदनरत्ने स्कान्दे–**

**आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् ।**
**धर्मेण विधिना दानं समगोत्रेऽपि युज्यते ।।**

**अथ विवाहप्रतिकूलमुच्यते । ज्योतिर्मेधातिथिः–**

**वधूवरार्थे घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः ।**
**मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः।।**

मङ्गलं विवाहः ।

स्मृतिचन्द्रिकायाम्–

[1]कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः ।
तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम् ॥

भृगुः–

वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदोद्वाहो नैव कार्यः स्ववंशक्षयदोषतः ॥

शौनकः–

वरवध्वोः पिता माता पितृव्यश्च सहोदरः ।
एतेषां प्रतिकूलं च महाविघ्नप्रदं भवेत् ।

पिता पितामहश्चैव माता चैव पितामही ॥
पितृव्यः स्त्रीसुतौ भ्राता भगिनी चाविवाहिता ॥

एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतम् ।
अन्यैरपि विपन्नैश्च केचिदूचुर्न तद्भवेत् ॥

माण्डव्यः–

वाग्दानानन्तरं माता पिता भ्राता विपद्यते ।
विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता ॥

सङ्कटे तु मेधातिथिः–

वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।
तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥

स्मृतिरत्नावल्याम्–

पितुरब्दमशौचं स्यात् तदर्धं मातुरेव च ।
मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥

अन्येषां तु सपिण्डानामाशौचं माससमीरितम् ।
तदन्ते शान्तिकं कृत्वा यथोक्तविधिना ततः ॥

---

१ ''कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित्'' इति निर्णयसिन्धुः ।

पुनश्चैवाथ वाग्दानं कृत्वा लग्नं विधीयते ।
सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य पूजां कृत्वा समाचरेत् ॥

ज्योतिःप्रकाशे–

प्रतिकूलेऽपि कर्तव्यो गच्छेद्यावदृतुत्रयम् ।
प्रतिकूलेऽपि कर्तव्यमित्याहुर्बहुविप्लवे ।
प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ॥

ज्योतिःसागरे–

दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ।
प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते ॥

मेधातिथिः–

पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ।
[१]प्रवेशो निर्गमस्तद्वत्तथा मुण्डनमण्डने ॥

प्रेतकार्याण्यनिर्वृत्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥

मासिकविषये शाट्यायनिः–

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्तुर्नान्दीमुखं द्विजः ॥

वृद्धिं विनापकर्षे दोषमाह उशनाः–

वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।
स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

---

१. अत्र प्रवेशनिर्गमशब्दयोरर्थं कात्यायनः स्वयमेव कथयति । पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ॥ मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मण्डनम् ॥ इति ॥

**अथ रजोदोषनिर्णयः माधवीये–**

**प्रारम्भात्प्राग्विवाहस्य माता यदि रजस्वला ।**
**निवृत्तिस्तस्य कर्तव्या सहत्वश्रुतिचोदनात् ।।**

प्रारम्भात् नान्दीश्राद्धात्, नान्दीमुखं विवाहादित्यादिना तस्यैव प्रारम्भोक्तेः । मेधातिथिः-

**चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ।**
**भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ।।**

**वधूवरान्यतमयोर्जननी चेद्रजस्वला ।**
**तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ।।**

**वृद्धमनुः–**

**विवाहव्रतचूडासु माता यदि रजस्वला ।**
**तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः ।।**

**गर्गः–**

**यस्योद्वाहादिमाङ्गल्ये माता यदि रजस्वला ।**
**तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ।।**

**तथा–**

**अलाभे सुमुहूर्तस्य रजोदोषे च सङ्गते ।**
**श्रियं सम्पूज्य तत्कुर्यात्पाणिग्रहणमङ्गलम् ।।**

**हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् ।**
**प्रत्यृचं पायसं हुत्वा अभिषेकं समाचरेत् ।।** इति

## अथ एकक्रियानिर्णयः

**ज्योतिर्निबन्धे वृद्धमनुः–**

**एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।**
**न समानक्रियां कुर्यान्मातृभेदे विधीयते ।।**

नारदः–

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।
न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम् ।।

वराहः–

विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ।।

वसिष्ठः–

न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् ।
न मण्डनाच्चापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः ।।

एकोदरभ्रातृविवाहकृत्ये स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचुर्न मुण्डनं मण्डनतोऽपि कार्यम् ।।

एतदपवादः सारावल्याम्–

फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलङ्घनम् ।।

संहिताप्रदीपे–

ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितुः समार्धम् ।
अप्राप्य कन्यां श्वशुरालयं च वधूः प्रवेश्या स्वगृहं न चादौ ।।

वसिष्ठः–

द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाचार्यविभेदतो वा ।।

एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत् ।।

कात्यायनः–

कुले ऋतुत्रयादर्वाङ्मण्डनान्नतु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ।।

कुर्वन्ति मुनयः केचिदन्यस्मिन्वत्सरे लघु ।
लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ।।

पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ।।

चौलं मुण्डनमेवोक्तं वर्जयेन्मण्डनात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ।।

अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ।
अभेदे तु विनाशः स्यान्न कुर्यादेकमण्टपे ।।

सङ्कटे तु कपर्दिकारिका-

उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाऽपि ।
यावच्चतुर्थं दिनमत्र पूर्वं समाप्य चान्योद्वहनं विदध्यात् ।।

**कश्यपः-**

मौञ्जीबन्धं तथोद्वाहं षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् ।।

**स्मृतिसारावल्यां-**

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
एकस्मिन्मण्टपे चैव न कुर्यान्मण्डनद्वयम् ।।

सोदरविषयमेवैतत् ।

**यमः-**

एकोदरप्रसूतानां एकस्मिन्वासरे पुनः ।
विवाहं नैव कुर्वीत मण्डनोपरि मुण्डनम् ।।

**गार्ग्यः-**

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
न कुर्यान्मङ्गलं किञ्चिदेकस्मिन् मण्टपेऽहनि ।।

एकस्मिन् वासरे प्राप्ते कुर्याद्यमलजातयोः ।
क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च ॥

ज्योतिर्विवरणे–

एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः ।
नद्यन्तरे एकदिने केऽप्याहुः सङ्कटे शुभम् ॥

ऊर्ध्वं विवाहाच्छुभदो नरस्य नारीविवाहो न ऋतुत्रयं स्यात् ।
नारीविवाहात्तदहेऽपि शस्तं नरस्य पाणिग्रहमाहुरार्याः ॥

भिन्नमातृजयोस्तु एकवासरे विवाहमाह मेधातिथिः–

पृथक् मातृजयोः कार्यो विवाहस्त्वेकवासरे ।
एकस्मिन् मण्डपे कार्यः पृथग्वेदिकयोस्तथा ॥

पुष्पपट्टिकयोः कार्यं दर्शनं न शिरस्थयोः ।
भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् ॥

यमयोस्तु विशेषः भट्टकारिकायां–

एकस्मिन्वत्सरे चैकवासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोः भ्रात्रोर्यमलजातयोः ॥

नारदः–

[१]पुत्र्युद्वाहो नैव कार्यश्चैकस्मिन् दुहितृद्वयोः ।
न चैकजन्ययोः पुंसोरेकजन्ये तु कन्यके ॥

तथा–

न चैकदा तदुद्वाहो नैकदा मुण्डनद्वयम् ।
नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्यन्योः ।
न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ॥ इति

तथा–

एकमातृप्रसूतानां शुभद्वयमृतुत्रये ।
न कुर्याद्वर्षभेदे तु त्रिमासादूर्ध्वमिष्यते ॥

---

१ ''प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम्'' इति निर्णयसिन्धुपाठः ।

एकोदराणां पुंसां स्याद्विवाहो नैकवत्सरे ।
भिन्नोदराणां कुर्वीत स्त्रीणां चैव न संशयः ।।

एकोदरप्रसूतानामेकाब्देन करग्रहः ।
नद्यन्तरे च कर्तव्यो विदेशे च नगान्तरे ।
ग्रामान्तरेऽपि कर्तव्यो नैकस्मिन्नेव वेश्मनि ।

तथा–

एकस्मिन्मण्टपे त्वेको न कुर्यान्मङ्गलत्रयम् ।
यदि भिन्नोदराणां स्यात्समाप्यैकं पुनर्भवेत् ।।

भिन्नोदराणामपि चेदेकस्मिन्मण्डपे पिता ।
समाप्य मङ्गलं चैकं पुनः कुर्याच्च नान्दिकम् ।।

तथा–

व्रतबन्धनमेकस्य तथैकस्य विवाहकम् ।
एकस्मिन्नपि वान्यस्मिन्दिने कुर्यात्तु वै पिता ।।

मध्ये चेद्व्रतबन्धस्य विवाहो यदि वा भवेत् ।
अलाभे सुमुहूर्तस्य कन्याया वा सुतस्य वा ।।

कन्याविवाहमध्ये चेद्विवाहः स्यात्सुतस्य च ।
पितैव तु तदा कुर्यादिति कैश्चिदुदाहृतम् ।।

गान्धर्वराक्षसादिप्राप्तौ विशेषमाह यमः–

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ।।

देवलोऽपि–

गन्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाऽग्निसाक्षिकः ।।

परिशिष्टेऽपि–

गन्धर्वासुरपैशाचा विवाहो राक्षसश्च यः ।
पूर्वं परिग्रहस्तेषां पश्चाद्धोमो विधीयते ।।

अतो होमादावकृते भार्यात्वाभावात् वरान्तराय देया । तथा च बौधायनः-

**बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।**
**अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ।।** इति

अत्र मन्त्रसंस्काराभावेऽन्यस्मै दानस्य सर्वविवाहेषु साम्याद्बलादपहारे राक्षसपैशाचयोर्विशेषवचनं व्यर्थम् । तेन तयोः यदि न संस्कृता संस्कृता वेत्यावृत्य कन्यानुमत्यभावेऽन्यस्मै देयेति व्याख्येयम् ।

**नारदः–**

**पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।**
**तेषां निष्ठा च विज्ञेया विद्वद्भिः सप्तमे पदे ।।**

आशौचे तु याज्ञवल्क्यः-

**यज्ञे दाने विवाहे च संग्रामे देशविप्लवे ।**
**आपद्यपि च कष्टायां सद्यःशौचं विधीयते ।।**

केषामित्यपेक्षिते, ब्रह्मपुराणे उक्तम्-

**दातुः प्रतिग्रहीतुश्च दाने यज्ञे च नो भवेत् ।**
**विवाहयिष्णोः कन्याया लाजहोमादिकर्मणि ।।**

**नृसिंहपारिजाते–**

**व्रतयज्ञविवाहेषु श्राद्धे होमे जपेऽर्चने ।**
**आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ।।**

प्रारम्भस्तेनैवोक्तः ।

**प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।**
**नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ।।** इति

वरणमिति मधुपर्कपरम् ।

**गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।**
**पश्चादशौचे पतिते न भवेदिति निश्चयः ।।**

इति ब्राह्मोक्तेः । नान्दीमुखविधिश्च स्मृत्यन्तरे-

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते ।।

तथा–

चौले चैवोपनयने विवाहे च महामखे ।
त्रिषट्दशैकविंशत्या प्रारम्भे नास्ति सूतकम् ।।

वृद्धशौनकः–

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
कर्मणि क्रियमाणे तु मध्ये चेत्सूतकं भवेत् ।
यावत्कर्मसमाप्तिः स्यात्तावन्नाप्नोति सूतकम् ।।

व्यासः–

विवाहाभ्यन्तरे यस्य पित्रादीनां मृतिर्भवेत् ।
तत्राशौचं न कर्तव्यं शेषं तन्त्रं समाचरेत् ।।

अङ्गिराः–

विवाहे चोपनयने मातापित्रोर्मृतिर्भवेत् ।
चतुर्थ्यन्तं समाप्याथ पितृकर्म समाचरेत् ।।

अन्नादिषु विशेषः षट्त्रिंशन्मते–

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ।।

परैरसगोत्रैः ।

भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ।।

बृहस्पतिः–

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसङ्कल्पितान्नेषु न दोषः परिकीर्तितः ।।

वाग्दानोत्तरं वरमरणे वसिष्ठः-

**अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि ।**
**न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ।।**

देशान्तरगमने तु कात्यायनः-

**वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा ।**
**ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ।।**

**नारदोऽपि-**

**प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।**
**त्रीनृतून् समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ।।**

**वरे देशान्तरगते त्रीनृतून् सम्प्रतीक्ष्य वै ।**
**कन्यान्यस्मै प्रदातव्या वाग्दाने तु कृते सति ।।**

**पञ्चत्वञ्च वरो गच्छेद्वाग्दाने यदि वै कृते ।**
**कन्यान्यस्मै प्रदातव्या तथा सप्तपदात्पुरा ।।**

अथ परिवेत्तादि-

**[१]यज्ञदानाग्निहोत्रादि कुरुते योऽग्रजे स्थिते ।**
**परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ।।**

**परिवित्तो भवेद्यस्तु पतितः कन्यकासु च ।**
**पितृव्यपुत्रे सापत्ने परदारासुतेषु च ।**
**विवाहाधानयज्ञेषु परिवेदो न दूषणम् ।।**

**गौतमः-**

**भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे ।**
**दाराग्निहोत्रसंयोगे न दोषः परिवेदने ।।**
**काणान्धबधिरव्यङ्गषण्ढकुष्ठातिपातके ।**
**पङ्गुकुब्जक्रियाहीने न दोषः परिवेदने ।।**

---

१. दाराग्निहोत्रसंयोगं इति नि. सिं पाठः

एकमातृप्रसूतीनां पुत्रीणां परिवेदने ।
दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नामातृषु ।।

विवाहानधिकारा या ज्येष्ठकन्या यदा स्थिता ।
तदनुज्ञां विना वाऽपि कनिष्ठामुद्वहेत्तदा ।
कालप्रतीक्षणं न स्याद्रजोदोषो न दोषभाक् ।।

**वसिष्ठः-**

षण्ढान्धबधिरादीनां विवाहोऽस्ति यथोचितः ।
विवाहासम्भवे तेषां कनिष्ठो विवहेत्तदा ।।

धर्मार्थविवाहकरणे फलमाह दक्षः-

मातापितृविहीनं तु संस्कारोद्वहनादिभिः ।
यः स्थापयति तस्येह पुण्यसंख्या न विद्यते ।।

**भविष्ये-**

विवाहादिक्रियाकाले तत्क्रिया सिद्धिकारणम् ।
यः प्रयच्छति धर्मज्ञः सोऽश्वमेधफलं लभेत् ।।

विवाहनक्षत्राण्याह रत्नमालायां-

मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः ।
भौमसौरिरविवारवर्जितं पाणिपीडनविधिर्विधीयते ।।

अत्रानिष्टनक्षत्रादौ दानमुक्तं ज्योतिषे-

विपत्तारे गुडं दद्यान्निधने तिलकाञ्चनम् ।
प्रत्यग्भे लवणं दद्याच्छागं दद्यात्त्रिजन्मसु ।।

चन्द्रे च शङ्खं लवणञ्च तारे तिथौ विरुद्धे त्वथ तण्डुलांश्च ।
धान्यञ्च दद्यात्करणे च वारे योगे विरुद्धे कनकं प्रदेयम् ।।

विवाहे मण्डपमाह वसिष्ठः-

षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।

मण्डपं तोरणैर्युक्तं तत्र वेदिं प्रकल्पयेत् ।
अष्टहस्तं तु रचयेन्मण्डपं वा [१]द्विषट्करम् ।।

वेदिमाह नारदः–

हस्तोच्छ्रितां चतुर्हस्तैः चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णां वामभागे तु सद्मनि ।।

समां तथा चतुर्दिक्षु सोपानैरतिशोभिताम् ।
प्रागुदक्प्रवणां रम्भास्तम्भहंसशुकादिभिः ।
एवंविधामारुरुक्षेन्मिथुनं साग्निवेदिकाम् ।।

अत्र हस्तो वध्वाः । सोपानं पश्चिमतः उपरिभागे उक्तपरिमाणाद्भिन्नम् । पीठलक्षणमाह–

श्रीखण्डं चन्दनं वाऽपि न्यग्रोधं देवदारुकम् ।
पलाशं प्लक्षकं वाऽपि औदुम्बरमथापि वा ।।

जाम्बूकं च करीरं च खादिरं चागरुं तथा ।
कुर्याद्विवाहपीठं तु शुभलक्षणसंयुतम् ।।

सप्तत्रिंशतिकं दीर्घमायामं पञ्चकं तथा ।
षडुन्नतं चाङ्गुलीनां विवाहे पीठलक्षणम् ।।

षट्प्रादेशदीर्घं स्यात् द्विपञ्चाङ्गुलिमात्रकम् ।
आर्द्रं क्षीरसमायुक्तं विवाहे पीठलक्षणम् ।।

आदौ पुण्याहवाचनं कार्यम् ।

संस्कारेषु च सर्वेषु शान्तिकर्मणि पौष्टिके ।
सम्पूज्य गन्धमाल्यैश्च पुण्याहं वाचयेत्सुधीः ।।

अथ स्वास्तिकालक्षणम्

द्वात्रिंशदङ्गुलं दीर्घं समन्ताच्चतुरस्रकम् ।
रेखे द्वैकैककोणस्य तिर्यक्कुर्वीत पार्श्वयोः ।

---

१ त्रिषट्करम् इति निर्णयसिन्धुपाठः ।

कोष्ठानि कारयेत्तत्र द्वात्रिंशत्संख्यकानि च ।।
पदवत् पार्श्वयोस्तस्य पुरतो गजशुण्डवत् ।

पश्चिमे कलशाकारं निर्मितं ब्रह्मणा पुरा ।।
तदेव स्वस्तिकं चेति प्रवदन्ति महर्षयः ।

सह द्वयं कांस्यपात्रं विन्यसेत्तण्डुलोपरि ।
हरिद्रागुडताम्बूलं विन्यसेत्कलशोपरि ।।

चरस्तु दक्षिणः कुम्भः स्थिरकुम्भस्तथोत्तरः ।।
एवमेव शुभं प्रोक्तमशुभं त्वेक उच्यते ।।

नारदीये–

एक एव तु कर्ता स्यादनेकेष्वेव कर्मसु ।
अष्टवर्गो भवेदेकः सङ्कल्पस्तु पृथक्पृथक् ।।

गणशः क्रियमाणानां युगपन्मातृपूजनम् ।
नान्दीश्राद्धं भवेदेकं होममन्त्राः पृथक्पृथक् ।।

लग्नघटीस्थापनमाह नारदः

षडङ्गुलमितोत्सेधं द्वादशाङ्गुलमायतम् ।
कुर्यात्पातालवत्ताम्रपात्रं तद्दशभिः पलैः ।।

ताम्रपात्रे जलैः पूर्णे मृत्पात्रे वाऽथवा शुभे ।
मण्डलार्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत् ।।

तत्र मन्त्रः मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा ।
भव भावाय दम्पत्योः कालसाधनकारणम् ।। इति

शुभकर्मसु नान्दीश्राद्धं आवश्यकमित्याह त्रिकाण्डमण्डनोऽपि –

गर्भाधानादि संस्कारेष्विष्टापूर्तक्रतुष्वपि ।
वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ।।
अनिष्ट्वा तु पितॄन् श्राद्धे वैदिकं कर्म नाचरेत् ।

चतुर्विंशतिमते विशेषः-

**श्राद्धे ह्यभ्युदये प्राप्ते देवतास्थापनं स्मृतम् ।**
**जातिधर्मकुलश्रेणिलोकानां वृद्धिकारकम् ।।**

**तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।**
**इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाष्टमी ।।**

**ब्रह्मण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।**
**वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितृन् ।।**
**मातृपूर्वान् पितृन् पूज्य ततो मातामहानपि ।।** इति

**गौरी पद्मा शची मेधा सावित्री विजया जया ।**
**देवसेना स्वधा स्वाहा मातरो लोकमातरः ।।**
**धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।।**

इति कात्यायनोक्तास्तु तच्छाखाविषयाः । अकरणे प्रत्यवाय उक्तो विष्णुपुराणे-

**अकृत्वा मातृयागं तु वैदिकं यः समाचरेत् ।**
**तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ।।** इति

उद्देश्यक्रममाहाश्वलायनः-

**माता पितामही चैव सम्पूज्या प्रपितामही ।**
**पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः ।**
**एते नवाऽर्चनीया स्युः पितरोऽभ्युदये द्विजैः ।।** इति

यत्तु **नान्दीमुखे विवाहादौ प्रपितामहपूर्वकम् ।**
**नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ।।**

इति वृद्धवसिष्ठादिवाक्यं तच्छाखान्तरविषयम् । बह्वृचानां तु अश्वलायनोक्तः । ब्रह्मपुराणे-

**ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विति ।**
**प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते ।।**

**पिता पितामहश्चैव तथैव प्रपितामहः ।**
**त्रयो ह्यश्रुमुखा ह्येते पितरः सम्प्रकीर्तिताः ।।**
**तेभ्यः पूर्वतरा ये तु ते तु नान्दीमुखाः स्मृताः ।।** इति

ते प्रौष्ठपदपौर्णमासीनिमित्तश्राद्धदेवताः, न वृद्धिश्राद्धे । तस्य वाक्यस्य महालयप्रकरणे पठितत्वादिति । इदानीं नान्दीश्राद्धं आद्ये विवाहे पिता कुर्यात् । द्वितीयादौ वर एव ।

**नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ।**
**अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ।।**

संस्कारकर्तुः पितुरन्यत्वे त्वाह-

**स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।**
**पिण्डान्नोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ।।**

अस्यार्थमाह हेमाद्रिः-

पितुरभावेऽन्यो यःकश्चित्संस्कारं कुर्यात्सः तत्क्रमात् संस्कार्यपितरमारभ्य क्रमः पितॄणां क्रमः तेन दद्यादिति । अत एव निगमवाक्यम्-''तस्मात्पितृव्याचार्य-मातुलादयः संस्कार्यपित्रादीनुद्दिश्याभ्युदयं चरेत'' इति । अन्ये त्वन्यथाप्याहुः । तत्क्रमात् तस्याचार्यस्य पित्रादिक्रमादिति । एतदप्युक्तम्-

**संस्कारेषु तु पित्रादेरभावेऽन्नं निवेदयेत् ।**
**आचार्यपितरस्तस्य वृद्धिश्राद्धे तु देवताः ।।** इति

जीवत्पितृकविषये तु जीवत्पिता सुतसंस्कारेषु मातृमातामहयोर्यथा । तद्वत् त्रिषु जीवत्सु न कुर्यात् । तथा च कात्यायनः-

**सपितुः पितृकार्येषु अधिकारो न विद्यते ।**
**न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ।।** इति

अन्ये तु पितरि जीवति तत्पितृभ्यः मृतमातृमातामहयोश्च श्राद्धं कार्यम् ।

**वृद्धौ तीर्थे च सन्यस्ते ताते च पतिते सति ।**
**येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ।।** इत्युक्तेः

इदं साग्निपरमित्याहुः । अत एव सुमन्तुः-

**न जीवत्पितृकः कुर्यात् श्राद्धमग्निमृते द्विजः ।**
**येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ।।** इति

अग्निं श्रौतस्मार्ताग्निं ऋते । श्रौताग्न्यभाव इति ।

**अनग्निकोऽपि कुर्वीत जन्यादौ वृद्धिकर्मणि ।**
**येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ।।**

इति हारितवचने श्रौताग्निरहितस्याप्यधिकारोक्तेः इति । अत्र प्रयोगे विशेषः संग्रहे-

**शुभार्थी प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् ।**
**न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ।।**

**अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम् ।**
**अनाम्नां चातिलाद्यैश्च नान्दीश्राद्धं यथाविधि ।।**

**कुर्वन् पार्वणमार्गेण क्रियाः कुर्यात्प्रदक्षिणाः ।**
**द्वौ द्वौ निमन्त्र्य चैकैके सम्भोज्या ब्राह्मणाः शुभाः ।।**

**प्राङ्मुखाश्चोपवेश्याः स्युः विप्रा देवादिकास्ततः ।**
**क्रियाश्च यज्ञोपवीती कुर्या[1]देतास्तदीरिताः ।।**
**द्वौ द्वावेकैकशः पिण्डो दद्यादष्टादशापि च ।।** इति

अथ मधुपर्कः ।

**द्विराचम्य समासीनः कर्ता प्रत्यङ्मुखो वरम् ।**
**प्राङ्मुखं तु समासीनं मधुपर्केण पूजयेत् ।।**

**गृह्यपरिशिष्टे-**

**वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।**
**मधुपर्कः प्रदातव्यो ह्यन्यशाखेऽपि दातरि ।।**

---

१ ''कुर्याद्दाता तदीरिताः'' इति नृसिंहप्रयोगपारिजाते पाठः ।

**मनुः-**

**स्वशाखी चेद्वरो न स्यात्कस्मै देया तु कन्यका ।**
**स्वगृह्योक्तविधानेन दद्यात्तां परशाखिने ।।**

**पूजयेन्मधुपर्केण स्वशाखाविधिना वरम् ।**
**आकन्यादानपर्यन्तं पिता कुर्यात्स्वशाखया ।।**
**अपरं वरशाखोक्तमित्याहुर्वेदवादिनः ।।**

**व्यासः-**

**भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।**
**उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ।।**

भुक्त्वेति मधुपर्के वैधभोजनपरम् ।

**ऋष्यशृंगः-**

**वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।**
**नाम संकीर्तयेद्विद्वान् कन्यायाश्चैवमेव हि ।।**

**तिष्ठेत्पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत् ।**
**मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम् ।।**

**उदपात्रं ततो गृह्य मन्त्रेणानेन दापयेत् ।**
**गौरीं कन्यामिमां विप्र यथाशक्ति विभूषिताम् ।**
**गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।।**

भूदानादिकं च कुर्यात् तदुक्तं -

**भूमिं गाश्चैव दासीं च वासांसि च स्वशक्तितः ।**
**महिषीं वाजिनश्चैव दद्यात् स्वर्णमणीनपि ।।**

**ततः स्वगृह्यविधिना होमाद्यं कर्म कारयेत् ।**
**यथाचारं विधेयानि मांगल्यकुतुकानि च ।।** इति

इदं कन्यादानं त्रिवारं कार्यमिति शौनकः ''उपोषितः सुतां दद्यात्'' इत्युक्तम् । तत्र ।

**कन्यादानं निशीथे स्याद्दिवाभोजनमिष्यते ।**
**पुनः स्नात्वा जपेद्देवीं पिता कन्यां प्रयच्छति ।।**

**राहुदर्शनसंक्रांतिविवाहोत्पत्तिवृद्धिषु ।**
**स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च ।।**

तत्रापि विशेषः ।

**ग्रहो विवाहः संक्रांतिः पूर्वयामे यदा भवेत् ।**
**तदा दिवा न भोक्तव्यं मोक्षादुपरि भोजनम् ।।**

**ग्रहणोद्वाहसंक्रान्तिकृष्णाष्टमिजयन्तिषु ।**
**रात्रौ यामद्वये कुर्याद्भोजनं मुनिपुङ्गव ।।**

**स्मृतिकौस्तुभे-**
**आपद्युद्वाहसंक्रांतौ जयन्त्यां ग्रहणेऽपि च ।**
**रात्रावपि द्विप्रहरे भोजयेन्न स दोषभाक् ।।**

**विना कालेषु चैतेषु रजन्यां सार्धयामके ।**
**अन्नं ग्राह्यं तत्परतो निषिद्धं निशिकालतः ।।**

गृहप्रवेशनीयहोमे विशेषमाहाश्वलायनः-

**अर्धरात्रे व्यतीते तु परेद्युः प्रातरेव हि ।**
**गृहप्रवेशनीयः स्यादिति यज्ञविदो विदुः ।।** इति

औपासनहोमे विशेषमाह शौनकः -

**यदि रात्रौ विवाहाग्निरुत्पन्नः स्यात्तथा सति ।**
**उपक्रम्योत्तरस्याह्नः सायं परिचरेदमुम् ।।**

यदि रात्रौ नवनाडीमध्येऽग्न्युत्पत्तिस्तदा तदैव होमारम्भः । तदुत्तरं चेत् परदिने सायमारम्भ इति सुदर्शनभाष्ये उक्तम् । अन्यात्रापि-

**त्रिधा कृत्वा यामिनीं तु द्वौ भागौ पूर्ववासरे ।**
**उत्तरांशः प्रभाते स्यात् स्थालीपाके ऋतौ मृतौ ।।**

लाजाहोमः ।

**अञ्जल्यग्रेण होतव्यमकृत्वाञ्जलिभेदनम् ।**
**अञ्जलीवामभागेन लाजहोमो विधीयते ॥**

विवाहमध्ये स्त्रिया सहभोजनेऽपि न दोष इत्याह ।

**एकशय्यासनं वस्त्रमेकपात्रे तु भोजनम् ।**
**एकत्र मङ्गलस्नानं दम्पत्योः पञ्चरात्रकम् ॥**

**उच्छिष्टमितरस्त्रीणां यो भुंक्ते ब्राह्मणः क्वचित् ।**
**प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढचेतनः ॥**

हेमाद्रौ प्रायश्चित्तकाण्डेऽपि गालवः-

**विवाहकाले यात्रायां पथि चोरसमाकुले ।**
**असहायो भवेद्विप्रस्तदा कार्यं द्विजन्मभिः ॥**

**एकयानसमारोहः एकपात्रे च भोजनम् ।**
**विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ॥**

**अन्यथा दोषमाप्नोति पश्चाच्चांद्रायणं चरेत् ।**
**वंशदानं विना यस्तु मण्डपोद्वासनं यदि ॥**
**अज्ञानात्कुरते मन्दो दम्पत्योः क्षयमायुषः ॥**

## अथ देवकोत्थापनम्

**समे च दिवसे कुर्याद्देवकोत्थापनं बुधः ।**
**षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥**

विवाहमध्ये निषिद्धानि-

**पित्रोः प्रत्याब्दिके प्राप्ते नान्दीश्राद्धं न कारयेत् ।**
**यदि मोहाद् द्विजः कुर्यान्माङ्गल्यमशुभं भवेत् ॥**

**सपिण्डा नैव कुर्वीरन्नेकग्रामे गृहेऽपि च ।**
**नैव देशान्तरे दोषः स्वधाकारो भवेद्यदि ॥**

ज्योतिर्निबन्धे–

विवाहमारभ्य चतुर्थिमध्ये
श्राद्धं दिनं दर्शदिनं यदि स्यात् ।
वैधव्यमाप्नोति तदाशु कन्या
जीवेत्पतिश्चेदनपत्यता स्यात् ।।

तथा विवाहमध्ये यदि चेत्क्षयाहः
तत्र स्वमुख्याः पितरो नयन्ति ।
वृत्ते विवाहे परतस्तु कुर्यात्
श्राद्धं स्वधाभिर्नतु दूषयेत ।।

ये वा भद्रं दूषयन्ती स्वधाभिरिति श्रुतेश्च ।

तथा नान्दीश्राद्धे कृते पश्चात् यावन्मातृविसर्जनम् ।
दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ।।

अपसव्यं स्वधाकारं नित्यश्राद्धं तथैव च ।
ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलङ्घनम् ।।

उपवासव्रतं चैव श्राद्धभोजनमेव च ।
नैव कुर्युः सपिण्डाश्च मण्डपोद्वासनावधि ।।

मण्डपोद्वासनात्पूर्वं नान्दीश्राद्धे कृते यदि ।
ये कुर्वन्ति नरा मोहादपमृत्युं व्रजन्ति ते ।।

बृहस्पतिः–

तीर्थे विवाहे यात्रायां संग्रामे देशविल्पवे ।
नगरग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ।।

तथा कश्यपः–

अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयम्भुवा ।
शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा ।। इति

यन्त्रनिर्मुक्तं नूतनम् ।

योगयाज्ञवल्क्यः-

न स्नायादुत्सवेऽतीते मङ्गलं विनिवर्त्य च ।
अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताम् ॥

अथ वधूप्रवेशः, स्मृतिकौस्तुभे-

विवाहमारभ्य वधूप्रवेशो
युग्मे दिने षोडशवासरान्तात् ।
अयुग्मदिवसे यदि पञ्चमेऽह्नि
मध्ये तदूर्ध्वेन दिवा प्रशस्तः ॥

आषोडशदिनादर्वाक् नववध्वाः प्रवेशने ।
तिथिवासरताराणां दोषस्तत्र न विद्यते ॥

संग्रहे च-

विवाहमारभ्य वधूप्रवेशो
युग्मे तिथौ षोडशवासरान्तात् ।
ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमान्तात्
अतः परस्तान्नियमो न चास्ति ॥

नारदः-

समे वर्षे समे मासे यदि नारी गृहं व्रजेत् ।
आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥

जयन्तः-

मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके ।
[1]सुप्रशस्तो भवेद्वेश्मप्रवेशो नवयोषिताम् ॥

प्रयोगरत्ने-

[2]गृहप्रवेशः प्रथमे तृतीये
शुभप्रदः [3]पञ्चमके च वर्षे ।

---

१ ''सुप्रशस्ते'' इति निर्णयसिन्धुः ।

२ ''वधूप्रवेशः'' इति निर्णयसिन्धुः ।

३ ''पञ्चमकेऽथ वाह्नि'' इति नि.सिं पाठः अयमेव स्वरस इति भाति ।

द्वितीयके चापि चतुर्थके वा
षष्ठे वियोगामयदुःखदः स्यात् ॥[१]

गर्गः–

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः ॥

तथा–

अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत् ॥

माण्डव्यः–

नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु ।
वधूप्रवेशे माङ्गल्ये न मौढ्यं गुरुशुक्रयोः ॥

लल्लः–

[२]स्वभवने पुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
नववध्वा गृहगमने प्रति शुक्रविचारणा नास्ति ॥

ज्योतिःप्रकाशे–

वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे ।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरः स्थिते ॥

पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणापरे ।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ ॥

व्यवहारतत्त्वे–

पौष्णार्कभाच्च श्रवणाच्च युग्मे
हस्तत्रये मूलमघोत्तरासु ।
पुष्ये च मैत्रे च वधूप्रवेशो
रिक्तेतरे ह्यर्ककुजे च शस्तः ॥

---

१ इत्युक्तं तत्र मूलं चिन्त्यमिति निर्णयसिन्धुः ।
२ ''स्वभवनपुरप्रवेशे'' इति निर्णयसिन्धुः ।

अथ द्विरागमनम् । ऋक्षोच्चये-

**माघफाल्गुनवैशाखे शुक्लपक्षे शुभे दिने ।**
**गुर्वादित्यविशुद्धे स्यान्नित्यं पत्नीद्विरागमः ।।**

**नवोढायास्तु वैधव्यं यदुक्तं सम्मुखे भृगौ ।**
**तदैव विबुधैर्ज्ञेयं केवलं तु द्विरागमे ।।**

**विवाहात्प्रथमे पौषे आषाढे चाधिमासके ।**
**नैव भर्तुर्गृहे वासः चैत्रे तातगृहे तथा ।।** इति

**ज्योतिर्निबन्धे-**

**उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका**
**हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकम् ।**
**पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये**
**तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत् ।।**

कन्यापितुः कन्यायां अपत्योत्पत्तिपर्यन्तं कन्यागृहे भोजननिषेध उक्तो भविष्ये-

**अप्रजायां तु कन्यायां न भुञ्जीत कदाचन ।**
**दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ।।**

**आदित्यपुराणे-**

**विष्णुं जामातरं मन्ये तस्य कोपं न कारयेत् ।**
**अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ।।**

**ब्रह्मदेयां न वै कन्यां दत्वाऽश्नीयात्कदाचन ।**
**अथ भुञ्जीत मोहाच्चेत्पूयाख्ये नरके वसेत् ।।**

विवाहानन्तरं प्रथमवर्षनिषिद्धानि ।

**नान्दीश्राद्धं तु षण्मासं व्रतोद्यापनमेव च ।**
**वर्जनं पूर्वभाण्डानां गृहसम्मार्जनं तथा ।।**

ज्योतिषे–

मासषट्कं विवाहादौ व्रतप्रारम्भणं न च ।
जीर्णभाण्डादि न त्याज्यं गृहसम्मार्जनं तथा ।।

स्नानं सचैलं तिलमिश्रकर्म
प्रेतानुयानं करकप्रदानम् ।
अपूर्वतीर्थामरदर्शनं च
विवर्जयेन्मंगलतोऽब्दमेकम् ।।

ऊर्ध्वं विवाहात्पुत्रस्य तथा च व्रतबन्धनात् ।
आत्मनो मुण्डनं नैव वर्षं वर्षार्धमेव च ।।

पुत्रीपुत्रविवाहयोश्च परतः षण्मासयोरन्तरे
पित्रोराब्दिकपैतृकेषु विधिवदूर्ध्वाक्षतैरर्चयेत् ।
दध्यन्नं बदरीफलं च सहितं पिंडान् विकीर्यादिकं
अपसव्यं तिलतर्पणं च वपनं दर्भान् तिलान् वर्जयेत् ।।

विवाहे चोपनयने चौले सति यथाक्रमम् ।
वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणम् ।।

तस्यापवादः गौतमः–

प्रेतपक्षे च गङ्गायामुपरागे तथैव च ।
कृतोद्वाहोऽपि कुर्वीत तर्पणं तिलसंयुतम् ।।

तथा हेमाद्रौ स्मृत्यन्तरे–

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ।।

तस्याप्यपवादः–

महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वापणं सुतः ।।

**तीर्थे तिथिविशेषे च कार्यं प्रेते च सर्वथा ।**
**यदि कुर्यात्ततः कुर्याच्छुक्लैरेव तिलैः कृती ।।**

अथ पूर्वस्त्रियाः सदोषत्वे न त्यागः कार्यः, याज्ञवल्क्यः-

**सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ।।**

**मनुः-**

**वन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।**
**एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ।।**

**संग्रहे तु-**

**अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।**
**मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ।।**

**मनुः-**

**अधिविन्ना तु या नारी निर्गच्छेद्रोषिताग्रहात् ।**
**सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ।।** इति

निर्दोषा चेत् न त्याज्येत्याह ।

**सुरूपां सुप्रजां चैव सुभगामात्मनःप्रियाम् ।**
**धर्मानुचारिणीं भार्यां न त्यजेत् द्विजसत्तमः ।।**

एतादृशभार्यायाः सत्वेऽपि तदत्यागेनैव पुनर्विवाहः उक्तः संग्रहे-

**[१]एकामुद्वाह्य कामार्थमन्यां लब्धुं य इच्छति ।**
**समर्थस्तोषयित्वार्थैः पूर्वोढामपरां [१]वहेत् ।।**

**याज्ञवल्क्यः-**

**आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।**
**त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ।।** इति

---

१ ''एकामुत्क्राम्य'' व्रजेत् इति निर्णयसिन्धुः ।

अनेकभार्यस्याचारप्रकारमाह कात्यायनः-

**अग्निशिष्टादिशुश्रुषां बहुभार्यः सवर्णया ।**
**कारयेत्तद्वहुत्वे चेज्ज्येष्ठया गर्हिता न चेत् ।।** इति

**याज्ञवल्क्यः-**

**सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत् ।**
**सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ।।** इति

द्वितीयविवाहहोमेऽग्निमाह कात्यायनः-

**सदारोऽन्यान् पुनर्दारानुद्वोढुं कारणान्तरात् ।**
**यदीच्छेदग्निमान् कर्तुं क्व होमोऽस्य विधीयते ।।**
**स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन ।।**

**त्रिकाण्डमण्डनोऽपि-**

**आद्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि ।**
**तदा वैवाहिकं कर्म कुर्यादावसथेऽग्निमान् ।।**

सुदर्शनभाष्ये द्वितीयविवाहहोमो लौकिक एव न पूर्वौपासने इत्युक्तम् । इदं चासम्भव एव । तत्र चाग्निद्वयसंसर्गः कार्यः, तं प्रकारमाह शौनकः-

**अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।**
**सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः ।।**

**अरोगामुद्वहेत्कन्यां धर्मलोपभयात्स्वयम् ।**
**कृते तत्र विवाहे च व्रतान्ते तु परेऽहनि ।।**

**पृथक् स्थण्डिलयोरग्नीन्समाधाय यथाविधि ।**
**तन्त्रं कृत्वाज्यभागान्तमन्वाधानादिकं ततः ।।**

**जुहुयात्पूर्वपत्यग्नौ तयान्वारब्ध आहुतीः ।**
**अग्निमीळे पुरोहितं सूक्तेन नवर्चेन तु ।।**

**समिध्येनं समारोप्य अयं ते योनिरित्यृचा ।**
**प्रत्यवरोहेत्यनया कनिष्ठाग्नौ निधाय तम् ।।**

आज्यभागान्ततन्त्रादि कृत्वारभ्य तदादितः ।
समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयाद् घृतम् ।।

चतुर्गृहीतमेताभिर्ऋग्भिः षड्भिर्यथाक्रमम् ।
अग्नावग्निश्चरतीत्यग्निनाग्निः समिध्यते ।।

अस्तीदमिति तिसृभिः पाहि नो अग्न एकया ।
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ।।

गोयुगं दक्षिणा देया श्रोत्रियायाहिताग्नये ।
पत्न्योरेका यदि मृता दग्ध्वा तेनैव तां पुनः ।
आदधीतान्यया सार्धमाधानविधिना गृही ।। इति

अथ मृतभार्यस्य विवाहकालः संग्रहे-

प्रमदामृतिवत्सरादितः पुनरुद्वाहविधिर्वरस्य च ।
विषमे परिवत्सरे शुभः समवर्षे च मृतिप्रदो भवेत् ।।

तस्यापवादः-

अपुत्रिणी मृता भार्या या स्यात्तद्भर्तुरुच्यते ।
युग्माब्दे युग्ममासे वा विवाहः शुभदो मतः ।।

प्रजावत्यां च भार्यायां मृतायां ब्राह्मणस्य तु ।
अयुग्मवर्षे कर्तव्यो विवाहोऽशुभदो भवेत् ।।

अन्यत्र प्रकारान्तरम्-

पत्नीवियोगे प्रथमे च वर्षे
नो चेद्द्विवर्षे पुनरुद्वहेत्सः ।
अयुग्ममासे तु शुभप्रदः स्यात्
वसिष्ठगार्ग्यात्रिपराशराद्याः ।।

तृतीयविवाहो निषिद्ध इत्युक्तं मात्स्ये-

उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ।

मोहादज्ञानतो वाऽपि यदि गच्छेत्तु मानुषीम् ।
नश्यत्येव न सन्देहो गर्गस्य वचनं यथा ।।

गार्ग्यः-

गृही स्यादेकपत्नीकः सकामी चोद्वहेत्परम् ।
तृतीयामुद्वहेत्कन्यां मोहादज्ञानतोऽपि वा ।
धनधान्यायुषो हानिः रोगी स्याद्यदि जीवति ।।

संग्रहे च-

तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ।
चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ।।

अकृत्वार्कविवाहं तु तृतीयां यदि चोद्वहेत् ।
विधवा सा भवेत्कन्या तस्मात्कुर्याद्विचक्षणः ।। इति

अथार्कविवाहमाह-

अर्कोद्वाहं प्रवक्ष्यामि शौनकोक्तविधानतः ।
आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे ।।

शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् ।
ग्रामात्प्राचीमुदीचीं वा सपुष्पफलसंयुताम् ।।

अर्ककन्याप्रदानार्थमाचार्यं वरयेत्पुरा ।
अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।।

नान्दीश्राद्धं हिरण्येन अष्टवर्गान् प्रपूजयेत् ।
पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ।।

यज्ञोपवीतं वस्त्रञ्च हस्तकर्णादिभूषणम् ।
उष्णीषगन्धमाल्यादि वराय प्रतिदापयेत् ।।

स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत् ।
कृत्वार्कपुरतस्तिष्ठेत्प्रार्थयेत द्विजोत्तमः ।।

**त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ।**
**तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ।।**

**वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेणैव पूजयेत् ।**
**अर्कं प्रदक्षिणीकृत्य जपेन्मन्त्रमिमं बुधः ।।**

**मम प्रीतिकरा येयं मया सृष्टा पुरातनी ।**
**अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु ।**
**पुनः प्रदक्षणीकृत्य मन्त्रेणानेन मन्त्रवित् ।।**

**नमस्ते मङ्गले देवि नमः सवितुरात्मजे ।**
**त्राहि मां कृपया देवि पत्नी त्वं म इहागता ।।**

**अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च ।**
**वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ।।**

**तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय ।**
**ततश्च कन्यावरणं त्रिपूरुषमथोच्चेरत् ।।**

कन्यावरणप्रकारस्तु आचार्यः काश्यपगोत्रां आदित्यस्य प्रपौत्रीं सवितुः पौत्रीं मम पुत्रीं अर्ककन्यां अमुकगोत्राय वराय दास्ये इति ।

**अर्ककन्यामिमां विप्र यथाशक्ति विभूषिताम् ।।**
**गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ।।**

इति मन्त्रेण कन्यां दद्यात् ।

**पञ्चीकृत्य पुनः सूत्रं स्कन्धे बध्नामि मन्त्रतः ।**
**बृहत्सामेति मन्त्रेण सूत्ररक्षां प्रकल्पयेत् ।।**

**अर्कस्य पुरतः पश्चादाग्नेयादिचतुष्टये ।**
**प्रतिकुम्भं महाविष्णुं सम्पूज्य परमेश्वरम् ।**
**पाद्यार्घ्यं चैव नैवेद्यं कुर्यान्नत्वेव मन्त्रतः ।।**

ततोऽग्निं प्रतिष्ठाप्याघारान्तं कृत्वा संगोभिरिति बृहस्पतये, यस्मै त्वा काम-कामायेत्यृचाग्नये व्यस्तसमस्तव्याहृतिभिराज्यं हुत्वाचार्याय गोयुग्मं दत्वा ।

मया कृतमिदं कर्म स्थावरेषु जरायुणा ।
अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि ।।

इति नमेदिति ।।

।। इति विवाहप्रकरणं समाप्तम् ।।

## अथ अग्न्याधानम्

**कालादर्शे-**

**अग्निहोत्रं दर्शपूर्णमासावप्युत्तरायणे ।
उपक्रम्य यथाकालमुपासीरन् द्विजातयः ।।**

**सोमं च पशुबन्धं च सर्वाश्च विकृतीरपि ।
सौम्यायने यथाकालं विदध्युर्गृहमेधिनः ।।**

**वृद्धगार्ग्यः-**

**पुष्याग्नेयत्र्युत्तरादित्यपौष्णज्येष्ठाचित्रार्कद्विदैवेन्दुभेषु ।
कुर्युर्वह्न्याधानमाद्यं वसन्तग्रीष्मोष्मान्तेष्वेव विप्रादिवर्णाः ।।**

**रत्नमालायाम्-**

**प्राजापत्ये पूषभे सद्विदैवे पुष्ये ज्येष्ठास्वैन्दवे कृत्तिकासु ।
अग्न्याधानं ह्युत्तराणां त्रयेऽपि चित्रादित्ये कीर्तितं गर्गमुख्यैः ।।**

**रेणुकायां तु-**

**माघादिपञ्चमासेषु श्रावणे चाश्विने तथा ।
मार्गशीर्षे शुक्लपक्षे आधानमथ कारयेत् ।।** इत्युक्तम् ।

**आश्वलायनः-**

अग्न्याधेयं कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखोत्तरयोः प्रोष्ठपद्योरेतेषां कस्मिंश्चिद्वसन्ते पर्वणि ब्राह्मण आदधीत ग्रीष्मवर्षाशरत्सु क्षत्रिय-वैश्याविति नक्षत्रेषु पर्वणि वा आधानमाह । अग्न्याधानं आवश्यकमित्याह व्यास-

**अग्निर्वैवाहिको येन न गृहीतः प्रमादिना ।
पितर्युपरते तेन गृहीतव्यः प्रयत्नतः ।।**

**योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।**
**अन्नं तस्य न भोक्तव्यं वृथा पाको हि सः स्मृतः ।।**

ज्येष्ठभ्रातरि पितरि वा साग्नौ सति कनिष्ठस्य पुत्रस्य वाऽग्न्यभावेऽपि न दोष इत्याह गार्ग्यः-

**पितृपाकोपजीवी यः भ्रातृपाकोपजीवकः ।**
**ज्ञानाध्ययननिष्ठावान्न दुष्येताग्निना विना ।।**

इदं चाधानं ज्येष्ठे भ्रातर्यकृताधाने न कार्यम् ।

**दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।**
**परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ।।**

इति मनुशातातपोक्तेः । ज्येष्ठानुज्ञायां त्वदोष इत्याह सुमन्तुः-

**ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत् ।**
**अनुज्ञातस्तु कुर्वीत शंखस्य वचनं यथा ।।**

**अग्रजस्तु यदा नाग्निरादध्यादनुजः कथम् ।**
**अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि ।।** इति

**हारीतः-**

**सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् ।**
**दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ।।**

आधानं भ्रातुरनुज्ञया कुर्याद्विवाहस्तु अनुज्ञयाऽपि नेत्यर्थः । सोदरोक्तेरसोदराणां सापत्नदत्तकादीनां न दोषः । दत्तस्यापि सोदरविवाहाभावे दोष एव । तदाह वसिष्ठः-

**पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा ।**
**दाराग्निहोत्रसंयोगे न दोषः परिवेदने ।।**

परनारीसुताः दत्तकादयः । क्लीबादावप्यदोषमाह कात्यायनः-

**देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।**
**वेश्यानिष्ठांश्च पतितशुद्रतुल्यातिरोगिणः ।।**

**जडमूकान्धबधिरकुब्जवामनखञ्जकान् ।**
**अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ।।**

**धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।**
**कुटिलोन्मत्तचोरांश्च परिविन्दन्न दुष्यति ।।**

**त्रिकाण्डमण्डनः–**

**पंग्वन्धमूकबधिरपतितोन्माददूषणे ।**
**सन्यस्तछिन्नहस्तादौ यद्वा षण्ढादिदूषणे ।।**
**जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम् ।।** इति

पितुराधानाभावे दोषमाह मदनपारिजातः–

**पित्रा यस्य तु नाधानं कथं पुत्रस्तु कारयेत् ।**
**अग्निहोत्रेऽधिकारोऽस्ति शंखस्य वचनं यथा ।।** इति

नाधानं कृतमित्यर्थः । एतदाज्ञायामेवेति हेमाद्रिः । एवं ब्राह्मणस्य षोडशसंस्कारा उक्ताः । तदाह व्यासः–

**गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।**
**नामक्रिया निष्क्रमोऽन्नप्राशनं वपनक्रिया ।।**

**कर्णवेधो व्रतादेशो वेदारम्भः क्रियाविधिः ।**
**केशान्तः स्नातमुद्वाहो विवाहाग्निपरिग्रहः ।।**
**त्रेताग्निसंग्रहश्चैव संस्काराः षोडश स्मृताः ।।** इति

**।। इति षोडशसंस्कारनिर्णयः ।।**

## अथ क्षुद्रकालाः अथ मूर्तिप्रतिष्ठा

**वसिष्ठः–**

**चैत्रे वा फाल्गुने वाऽपि ज्येष्ठे वा माधवे तथा ।**
**माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत् ।।**

रिक्ततिथिव्यतिरिक्ततिथयः शुभाः ।

**मात्स्ये–**

**आषाढे द्वे तथा मूलमुत्तरात्रयमेव च ।**
**ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा ।।**

**हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा ।**
**अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ।।**

**श्रीपतिः–**

**रोहिण्युत्तरपौष्णवैष्णवकरादित्याश्विनीवासवा–**
**नूराधैन्दवजीवभेषु गदितं विष्णोः प्रतिष्ठापनम् ।**
**पुष्यश्रुत्यभिजित्सुरेश्वरकयोर्वित्ताधिपस्कन्दयोः**
**मैत्रे तिग्मरुचेः करे निर्ऋतिभे दुर्गादिकाणां शुभम् ।।** इति

**वैखानसः–**

**मार्गशीर्षादिमासौ द्वौ निन्दितौ ब्रह्मणा पुरा ।**
**मासेषु फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव च ।**
**वृषे वाऽप्याश्वयुङ्मासे श्रावणे मासि वा भवेत् ।।**

अथ प्रतिमाः, भविष्ये–

**सौवर्णी राजती ताम्री मृण्मयी च तथा भवेत् ।**
**पाषाणधातुयुक्ता वा रीतिकांस्यमयी तथा ।।**

रीतिः पित्तलम् ।

**शुद्धा दारुमयी वाऽपि देवतार्चा प्रशस्यते ।**
**अङ्गुष्ठपर्वादारभ्य वितस्तिर्यावदेव तु ।**
**गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधैः ।।**

**देवीपुराणे–**

**सप्ताङ्गुलं समारभ्य यावच्च द्वादशाङ्गुलम् ।**
**गृहेष्वर्चा समाख्याता प्रासादे वाऽधिका शुभा ।।**

देवीपुराणे–

प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना ।
प्राणप्रतिष्ठां कुर्वीत तस्य देवस्य वा हरेः ।।

वासुदेवस्य बीजेन तद्विष्णोरित्यनेन च ।
तथैव हृदयेऽङ्गुष्ठं दत्वा शश्वच्च मन्त्रवित् ।।

एभिर्मन्त्रैः प्रतिष्ठां तु हृदयेऽपि समाचरेत् ।
अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।।
अस्यै देवत्वमर्चायै मामहेति च कश्चन ।।

प्रयोगपारिजाते–

प्रतिमापट्टयन्त्राणां नित्यं स्नानं न कारयेत् ।
कारयेत्पर्वदिवसे यदा वा मलधारणम् ।।

सालग्रामविषये तु ।

सालग्रामाः समाः पूज्याः समेषु द्वितयं न हि ।
विषमा नैव पूज्याः स्युर्विषमेष्वेक एव तु ।।

सालग्रामशिला भग्नाः पूजनीयाः सचक्रकाः ।
खण्डिताः स्फुटिता वापि सालग्रामशिलाः शुभाः ।।

पाद्मे सालग्राममुपक्रम्य–

तत्राप्यामलकीतुल्या पूज्या सूक्ष्मैव या भवेत् ।
यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् ।।

चक्राङ्कमिथुनं पूज्यं नैकं चक्राङ्कमर्चयेत् ।
चक्राङ्कमिथुनात्सार्धं सालग्रामं प्रपूजयेत् ।।

म्लेच्छदेशे शुचौ वापि चक्राङ्को यत्र तिष्ठति ।
योजनानां तथा त्रीणि मम क्षेत्रं वसुन्धरे ।
क्रयक्रीता परिज्ञेया मध्यमा याचिताधमा ।।

वराहे–

एवं लक्षणसम्पन्ना पारम्पर्यक्रमागता ।
उत्तमा सा तु विज्ञेया गुरुदत्ताऽपि तत्समा ।
क्रयक्रीता परिज्ञेया मध्यमा याचिताधमा ।। इति

तथा क्रियासारे–

मध्यमानामिकामध्ये पुष्पं सङ्गृह्य पूजयेत् ।
अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् ।
अपनीतञ्च निर्माल्यं चण्डीशाय निवेदयेत् ।।

स्कान्दे–

क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम् ।
घृताद्दशगुणं क्षौद्रं क्षौद्रादप्यैक्षवं तथा ।।

अथ कूपारम्भः दीपिकायाम्–

मार्तण्डेन्दुशुद्धौ मुरजिदशयने मासषट्कस्य शुक्ले
मूलाषाढोत्तराश्विश्रवणगुरुकरे पौष्णशाक्राजचान्द्रे ।
मैत्रे ब्राह्मे च पूर्णामदनरवितिथौ सद्वितीयातृतीये
कार्या तोयप्रतिष्ठा ज्ञगुरुसितदिने कालशुद्धे सुलग्ने ।।

वराहः–

आग्नेये यदि कोणे ग्रामस्य गृहस्य वा भवति कूपः ।
नित्यं स करोति भयं दाहञ्च स मानसं प्रायः ।।

नैऋत्ये [१]प्राणभयं वनिताक्षयं च वायव्ये ।
दिक्त्रयमेतत्त्यक्त्वा शेषास्तु शुभावहाः कूपाः ।।

१ ''बालभयम्'' इति निर्णयसिन्धुः

## अथ वृक्षाद्यारोपणम्

चण्डेश्वरः-

आदित्यचान्द्रपितृतिष्यविशाखपौष्णमूलोत्तरात्रयतुरङ्गमवारुणाश्च ।
एतेषु तारकगणेषु हितं नराणां वृक्षादिरोपणमिहोपदिशन्ति धीराः ।।

अथ तुलसीपुष्पादेः पर्युषितत्वं बृहन्नारदीये-

वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ।
न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ।।

पाद्मे-

तुलसी पर्युषिता नैव बिल्वं तु त्रिदिनावधि ।
पद्मं पञ्चदिनात्त्याज्यं शेषं पर्युषितं विदुः ।।

स्मृतिसारावल्याम्-

कुशपुष्पस्य रजतसुवर्णकृतयोरपि ।
न पर्युषितदोषोऽस्ति तीर्थतोयस्य चैव हि ।।
मुकुलैर्नार्चयेद्देवं चम्पकैर्जलजैर्विना ।। इति

## अथ कृषिः

राजमार्तण्डः-

ऋक्षे तूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनी
प्राजापत्यकरद्विदैवतगुरुप्रालेयपादेषु च ।
निर्दोषैर्वृषभैर्हलैश्च सुमनोमालाभिरभ्यर्चितैः
दत्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत् ।।

प्राजेशश्रवणोत्तरादितिमघामार्तण्डतिष्याश्विनी
पौष्णानुष्णमरीचयः शतभिषक्स्वाती विशाखा तथा ।
जीवार्केन्दुसितेन्दुनन्दनदिने लग्ने च सौम्योदये
सस्यानां वपने तथैव लवने शस्तास्तथारोपणे ।।

चण्डेश्वरः–

हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये ।
स्थिरलग्ने गुरोर्वारि बीजं धार्यं ज्ञशुक्रयोः ।।

''ओं धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा''

लेखयित्वा इमं मन्त्रं धान्यागारे निधापयेत् ।

अथ वस्त्रं श्रीपतिः–

रोहिणीषु करपञ्चकेऽश्विभे त्र्युत्तरासु च पुनर्वसुद्वये ।
रेवतीषु वसुदैवते च भे नव्यवस्त्रपरिधानमिष्यते ।।

जीर्णं रवौ सततमम्बुभिरार्द्रमिन्दौ भौमे शुचे बुधदिने तु भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय मन्दे मलाय च नवाम्बरधारणं स्यात् ।।

अथालङ्कारवलयादि दैवज्ञवल्लभः–

नासत्यपूषवसुभिः करपञ्चकेन
मार्तण्डभौमगुरुदानवमन्त्रिवारे ।
मुक्तासुवर्णमणिविद्रुमशङ्खदन्त–
रक्ताम्बराणि विधृतानि भवन्ति सिद्ध्यै ।।

ज्योतिर्निबन्धे–

हस्तानुराधमृगपूषधनिष्ठयुक्तचित्रोत्तरासु च पुनर्वसुरोहिणीषु ।
लग्ने स्थिरे रविसुतेन्दुजजीववारे हेमादिधारणविधिः कथितो नराणाम् ।।

तत्रैव श्रीपतिः–

पौष्णाश्विनीवसुकरादिषु पञ्चभेषु
कौसुम्भहेममणिविद्रुमकाचशङ्खाः ।
नार्या धृताः सुतसुखार्थकरा भवन्ति ।
ब्राह्मोत्तरादितिगुरुष्वसुखाय भर्तुः ।।

तथा–

शङ्खादिवररत्नानि पुष्यादित्युत्तरासु च ।
रोहिण्यां नैव गृह्णीत भर्तुर्जीवितकांक्षिणी ।।

अथ गजाश्वदोला चण्डेश्वरः–

पौष्णप्रजेशादितिभद्वयानि हस्तादिषट्कश्रवणोत्तराणि ।
दोलादिमातङ्गतुरङ्गमाणामारोहणेऽभीष्टफलप्रदानि ।।

अथ शय्या

हस्तादितिब्रह्मगुरूत्तराणि पौष्णाश्विमूलेन्दुभचित्रभानि ।
वारेषु जीवेन्दुसितेन्दुजानां शय्यासनारम्भणमुत्तमं स्यात् ।।

अथ स्वामिसेवा चण्डेश्वरः–

रोहिण्युत्तरपौष्णेषु वसुवारुणयोरपि ।
सेवेत स्वामिनं भृत्यः शुभवारोदये तथा ।।

ज्योतिर्निबन्धे–

दासीदासादिभृत्यानां कुर्यात्संग्रहणं [१]बुधे ।
स्थिरलग्ने शुभैर्दृष्टे मन्दवारे विशेषतः ।।

राजदर्शनम् श्रीपतिः–

मृगाश्वितिष्यश्रवणश्रविष्ठाहस्तध्रुवत्वाष्ट्रभपूषभानि ।
मैत्रेण युक्तानि नरेश्वराणां विलोकने भानि शुभप्रदानि ।।

अथ श्मश्रुकर्म श्रीपतिः–

रव्यारसौरवारेषु रात्रौ पाते व्रताहनि ।
श्राद्धाहः प्रतिपद्रिक्ताभद्राः क्षौरेषु वर्जयेत् ।।

गार्ग्यः–

षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमी तथा ।
आसु सन्निहितं पापं त्रिषु तैले भगे क्षुरे ।।

अपवादः–

क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्ते च तीर्थके ।।

---

१ ''बुधैः'' इति निर्णयसिन्धुः ।

बृहस्पतिः–

राजकार्ये नियुक्तानां नराणां भूपजीविनाम् ।
श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनम् ।।

पुष्ये पौष्णे चाश्विनीश्वैन्दवे च
शाक्रे हस्ताद्ये त्रिके भेऽप्यदित्याम् ।
क्षौरं कार्यं वैष्णवादित्रये च
मुक्त्वा भौमादित्यपातङ्गिवारान् ।।

भारते–

उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।
केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ।।

दक्षिणं कर्णमारभ्य धर्मार्थं पापसंक्षये ।
शिखाद्ये नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ।।

अथेन्धनसंग्रहः–

ब्रह्मानिलार्कमघमूलत्रिपूर्वरौद्र–
पौष्णानुराधगुरुविष्णुविशाखयुक्ते ।
वारे कुजार्कभृगुनन्दनसोमजानां
श्रेष्ठेन्धनस्य करणं भवति प्रशस्तम् ।।

अथ ज्वरादौ फलम् । श्रीपतिः–

स्वात्याश्लेषारौद्रपूर्वासु शाक्रे रोगोत्पत्तिर्जायते यस्य पुंसः ।
तद्भैषज्यव्यापृतो निष्प्रयत्नः स्याद्दुग्धाब्धेर्लब्धजन्माऽपि वैद्यः ।।

व्याध्युत्पत्तिर्यस्य पौष्णे समैत्रे प्राणत्राणं जायते तस्य कृच्छ्रात् ।
वैश्वे सोम्ये रोगमुक्तिस्तु मासाद्विंशत्या स्याद्वासराणां मघासु ।।

पक्षाद्धस्ते वासवे सद्विदैवे मूलाश्विन्योरग्निधिष्ण्ये नवाहात् ।
याम्ये त्वाष्ट्रे वैष्णवे वारुणे च नैरुज्यं स्यान्नूनमेकादशाहात् ।
अहिर्बुध्न्ये तिष्यसंज्ञे यमाख्ये प्राजापत्यादित्ययोः सप्तरात्रात् ।।

दैवज्ञः-

उरगवरुणरौद्रा वासवेन्द्रत्रिपूर्वा
यमदहनविशाखा पापवारेण युक्ताः ।
तिथिषु नवमिषष्ठी द्वादशी वा चतुर्थी
भवति मरणयोगो रोगिणां कालहेतुः ।।

अत्र कुम्भे हैमीं नक्षत्रदेवताप्रतिमां सम्पूज्य द्वादशदलेषु सङ्कर्षणादिद्वादशमूर्तीः द्वादशादित्यान् सम्पूज्य दूर्वासमित्तिलक्षीराज्यैर्गायत्र्या तत्तद्देवतायै अष्टोत्तरं शतं हुत्वा दध्योदनं च बलिं दत्वा आचार्याय गां प्रतिमां च दत्वा विप्रान् भोजयेदिति संक्षेपः ।

अथ भेषजम्

मूलानुराधमृगतिष्यपुनर्वसौ भे पौष्णाश्विनीश्रवणशुक्रकरत्रये च ।
वारेषु वाक्पतिसितेन्दुदिने प्रशस्तं भैषज्यभक्षणममीषु हितं नराणाम् ।।

आरोग्यस्नानम् श्रीपतिः-

इन्दोर्वारे भार्गवे च ध्रुवेषु सार्पादित्यस्वातियुक्तेषु भेषु ।
पैत्र्ये चान्ते चापि कुर्यात्कदाचिन्नैव स्नानं रोगनिर्मुक्तजन्तुः ।।

चरे विलग्ने रविभौमवासरे रिक्ते तिथौ स्याद्बहुले च पक्षे ।
धिष्ण्ये चरे रोगनिपीडितानां स्नानं नराणां निरुजत्वकारी ।।

अथ तैलनिषेधः । आयुर्वेदे-

षष्ठ्यां दिनक्षयेऽष्टम्यामेकादश्यां च पर्वसु ।
द्वादश्यां च चतुर्दश्यां पञ्चम्यां प्रतिपत्तिथौ ।।

व्रते श्राद्धदिने जन्मत्रितये श्रवणार्द्रयोः ।
ज्येष्ठोत्तराफाल्गुनेषु व्यतीपाते च वैधृतौ ।।

विष्टियोगे च संक्रान्तौ मन्वादिषु युगादिषु ।
नाभ्यङ्गं तत्र बालानां वृद्धानां तु न दोषकृत् ।।

अस्यापवादः । प्रचेताः-

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

आयुर्वेदे–

निषिद्धतिथिवारर्क्षग्रहणेष्वपि रात्रिषु ।
किञ्चिद्गोघृतयुक्तं वा विप्रपादरजोन्वितम् ॥

भानौ दूर्वान्वितं भौमे भूयुक्तं पुष्पयुग्गुरौ ।
सर्वेषां सर्वदा तैलमभ्यङ्गेषु न दुष्यति ॥

मङ्गलेष्वप्यदोषः–

माङ्गल्यं विद्यते स्नानं वृद्धिपूर्वोत्सवेषु च ।
स्नेहपात्रसमायुक्तं मध्याह्नात्प्राक्तदिष्यते ॥

बृहन्मनुः–

न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा ।
शाश्वतीं गतिमन्विच्छन् दशम्यामपि पण्डितः ॥

बृहन्मनुः–

तैलाभ्यङ्गो नार्कवारे न भौमे नो संक्रान्तौ वैधृतौ विष्टिषष्ठ्योः ।
पर्वस्वष्टम्यां नैव चेष्टः स इष्टः प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः ॥

अथ गृहारम्भः बादरायणः–

वैशाखे फाल्गुने पौष्ये श्रावणे मार्गशीर्षके ।
[१]गृहारम्भः शिलान्यासः स्तम्भारम्भः प्रशस्यते ॥

नारदः–

सौम्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः ।
मासाः स्युः गृहनिर्माणे पुत्रारोग्यधनप्रदाः ।
न प्रधानगृहारम्भं कुर्यात्पौषे शुचावपि ॥

दैवज्ञः–

शोकं धान्यं पञ्चतां निष्पशुत्वं स्वापं नैःस्वं सङ्गरं भृत्यनाशम् ।
स्वं श्रीप्राप्तिं वह्निभीतिश्च लक्ष्मीं कुर्युश्चैत्राद्या गृहारम्भकाले ॥

---

१ 'सूत्रारम्भः' इति निर्णयसिन्धुपाठः ।

गर्गः–

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी च दशमी पूर्णा चैकादशी तथा ।।

वेश्मारम्भे शुभाय स्युर्विशेषाच्छुक्लपक्षगाः ।
त्र्युत्तरामृगरोहिण्यां पुष्ये मैत्रे करत्रये ।
धनिष्ठाद्वितये पौष्णे गृहारम्भः प्रशस्यते ।।

व्यवहारसारे–

शिलान्यासः प्रकर्तव्यो गृहाणां श्रवणे मृगे ।
पौष्णे हस्ते च रोहिण्यां पुष्याश्विन्युत्तरात्रये ।।

सनत्कुमारः

आदित्यभौमवर्जं तु सर्वे वाराः शुभप्रदाः ।

तत्त्वचिन्तामणौ

यत्र दैर्घ्यं गृहादीनां द्वात्रिंशद्धस्ततोऽधिकम् ।
न तत्र चिन्तयेद्धीमान् गुणानायव्ययादिकान् ।।

राजमार्तण्डः–

आयव्ययौ मासशुद्धिं तृणागारे न चिन्तयेत् ।
शिलान्यासादि नो कुर्यात्तथागारे पुरातने ।।

व्यवहारतत्वे–

निषिद्धेष्वपि कालेषु स्वानुकूले शुभे दिने ।
तृणकाष्ठगृहारम्भे मासदोषो न विद्यते ।।

ध्रुवं दृष्ट्वाऽथवा स्मृत्वा कर्तव्यं वास्तुरोपणम् ।
सायाह्नवर्ज्यदिवसे रात्रौ त्यक्त्वा महानिशाम् ।।

वराहः–

दक्षिणपूर्वकोणे कृत्वा पूजां शिलां न्यसेत् प्रथमाम् ।
शेषाः प्रदक्षिणेन स्तम्भाश्चैवं समुत्स्थाप्याः ।।

## अथ गृहप्रवेशः

सौम्यायने श्रावणमार्गपौषे जन्मर्क्षलग्नोपचयोदयेऽशे ।
वामं गतेऽर्के गृहवास्तुपूजां कृत्वा विशेद्वेश्म भकूटशुद्धम् ।।

नारदः–

प्रवेशो मध्यमो ज्ञेयः सौम्यकार्तिकमासयोः ।
माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः ।।

वृद्धगार्ग्यः–

भानोश्च भौमस्य विहाय वारौ शूलादियोगानशुभान्नवाऽपि ।
रिक्ता तिथिश्चापि मृदुध्रुवर्क्षे सौम्यायने च प्रविशेद् गृहाणि ।।

रत्नकोशे–

पुष्ये धनिष्ठामृगवारुणेषु स्वायम्भुवर्क्षे त्रिषु चोत्तरासु ।
अक्षीणचन्द्रे शुभदो नृपस्य तिथावरिक्ते च गृहप्रवेशः ।।

प्रवेशश्च वास्तुपूजां कृत्वा कार्यः ।

गृह्योक्तहोमविधिना बलिकर्म कुर्यात्
प्रसादवास्तुशमने च विधिर्य उक्तः ।
सन्तर्पयेद्द्विजवरानथ भक्ष्यभोज्यैः
शुक्लाम्बरः स्वभवनं प्रविशेत्सुरूपम् ।।

वसिष्ठः–

कृत्वा शुक्रं पृष्टतो वामतोऽर्कं
विप्रान् पूज्यानग्रतः पूर्णकुम्भम् ।
हर्म्यं रम्यं तोरणस्रग्वितानैः
स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेश्च ।।

अथ कलिवर्ज्यम् बृहन्नारदीये–

देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ।।

**दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।**
**दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ।**
**इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ।।** इति

**आदित्यपुराणे–**

**ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।**
**कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ।।** इत्यादित्यपुराणे ।

**विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।**
**बालायाः क्षतयोन्यास्तु वरेणान्येन संस्कृतिः ।**

**कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः ।**
**प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ।**
**संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः ।।**

पञ्चमहापातकिनां विप्राणां मरणान्तिकं प्रायश्चित्तं कलौ नेत्यर्थः ।

**वारातिथिपितृभ्यश्च पशूपाकरणक्रिया ।**
**दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।।**

**अस्थिसञ्चयनादूर्ध्वमङ्गस्पर्शनमेव च ।**
**शामित्रं चैव विप्राणां सोमविक्रयणं तथा ।।**

एतानि कलौ वर्ज्यानि इति ज्ञेयम् ।

**निगमः–**

**अग्निहोत्रं गवालम्भं सन्यासं पलपैतृकम् ।**
**देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ।।**

अग्निहोत्रं तदर्थमाधानम् । एतच्च सर्वाधानपरम् ।

**अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।**
**सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता ।।**

इति स्मृतिचन्द्रिकोक्तेः । एतेन–

**चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।**
**कलेर्यदागमिष्यन्ति तदा त्रेतापरिग्रहः ।**
**सन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ।।**

इति व्यासवचनं व्याख्यातम् । सर्वाधानेऽपि विशेषमाह व्यासः -

**यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।**
**सन्यासश्चाग्निहोत्रश्च तावत्कुर्यात्कलौ युगे ।।** इति

अत्र पूर्वयुगाश्रितेति वचने पूर्वयुगानि कृतयुगादीत्येकोऽर्थः । अन्ये तु युगस्य पूर्वं कलिपूर्वो भागः । स च चत्वार्यब्दसहस्राणीति पूर्ववाक्यात् चतुश्चत्वारिंशत् शतवर्षावछिन्नः तस्मिन् भागे सर्वाधानं कार्यम् । तदुत्तरं यावद्वर्णविभगोऽस्तीति वाक्याद्वर्णविभागपर्यन्तमर्धाधानमित्याहुः । सन्यासः त्रिदण्डः ।

**।। इति कलिवर्ज्यानि ।।**

**।। इति द्वितीयः परिच्छेदः ।।**

***

# अथ तृतीयपरिच्छेदः

## अथ श्राद्धनिर्णयः

**श्राद्धस्वरूपमाह मरीचिः–**

**प्रेतान् पितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः ।**
**श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्तितम् ।।**

अत्र होमपिण्डभोजनानि प्रधानम्, तथाचाऽह श्रीधरः–

**होमश्च पिण्डदानञ्च तथा ब्राह्मणभोजनम् ।**
**श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकम् ।।** इति

निमित्तभेदेन भोजनस्य पिण्डानां वा निषेधस्य प्राधान्याबाधकत्वात् । ''नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम्'' इति नित्यश्राद्धमघाश्राद्धादौ पिण्ड-निषेधोऽस्ति ।

**जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।**
**न पक्वं भोजयेद्विप्रान् सच्छूद्रोऽपि कदाचन ।।**

इति जातश्राद्धादौ भोजननिषेधोऽस्तीति ज्ञातव्यम् ।

**धर्मप्रदीपेऽपि–**

**यजुषां पिण्डदानं तु बह्वृचानां द्विजार्चनम् ।**
**श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम् ।।**

तच्च श्राद्धं ''पितॄन् यजेत'' इति ''पितृभ्यो दद्यात्'' इत्युभयप्रयोगदर्शनात् यागदानोभयात्मकम् । ''पितरो देवताः'' इति पित्रुद्देश्यकत्वाद्यागत्वम् । विप्रापेक्षया च दानत्वमित्यविरुद्धम् । श्राद्धं तु श्रेयःसाधनमित्याह सुमन्तुः–

''श्राद्धात्परतरं नान्यत् श्रेयस्करमुदाहृतम्'' अकरणे च दोष उक्तः आदित्य-पुराणे–

**न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।**
**श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ।।** इति

तद्भेदानाह विश्वामित्रः-

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणश्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ।।

कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ।।

एतेषां लक्षणानि भविष्ये-

अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ।।

एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैविकं कार्यमयुग्मान् भोजयेद् द्विजान् ।।

कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।।

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।।

ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।
नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि ।।

अमावास्यां यत्क्रियते तत्पार्वणमिति स्मृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ।।

अत्र पर्वाणि तु ।

चतुर्दश्यष्टमी चैवममावास्या च पौर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रमणं तथा ।।

इति विष्णुपुराणोक्तं संक्रान्त्यादि ।

गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ।।

क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय महर्षिभिः ।

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ।।

देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते ।
गच्छन् देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ।।

यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ।
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमेतद्विज्ञेयमौपचायिकमुच्यते ।। इति

गोष्ठ्यां श्राद्धकर्तृसमुदाये सम्भूय सामग्रीसम्पादनेन श्राद्धमित्यर्थः । युगपत् तीर्थादिप्राप्तौ विदुषां श्राद्धसम्पदा सुखार्थं भिन्नपाकाशक्तौ बहुपितृकश्राद्धमेकः कुर्यादिति कल्पतरुः । शुद्धिश्राद्धं प्रायश्चित्ताङ्गमिति केचित् । अत्र पार्वणैकोद्दिष्ट-वृद्धिसपिण्डीकरणात्मकं चतुर्विधमेव मुख्यम्, तस्यैवायं प्रपञ्चः ।।

अथ श्राद्धदेशः मनुः–

शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् ।।

विष्णुधर्मे–

दक्षिणाप्रवणे देशे तीर्थादौ च गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ।।

वाराहे–

चक्राङ्कस्य तु सान्निध्ये यत्कर्म क्रियते नरैः ।
स्नानं दानं तपः श्राद्धं सर्वमक्षयतां व्रजेत् ।।

पाद्मे च–

शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् ।
वाराणस्या यवाधिक्यं समन्ताद्योजनत्रयम् ।।

यत्किञ्चित्पैतृकं कुर्यात्सपिण्डं वा तदन्तिके ।
विष्णुलोकं स गच्छेत्तु लभते शाश्वतं पदम् ।।

अथ निषिद्धदेशः । यमः-

परकीयप्रदेशेषु पितॄणां निर्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ।
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवनम् ।।

इदं मूल्यदानं तत्स्वाम्यनुज्ञाभावे तदुक्तं ब्राह्मे ।

स्वनुलिप्तेषु गेहेषु स्वेष्वनुज्ञापितेषु च ।
श्राद्धमेतेषु दातव्यं वर्ज्यमेतेषु नोच्यते ।।

परकीयत्वापवादः ।

वनानि गिरयो नद्यः तीर्थान्यायतनानि च ।
देवखाताश्च गर्ताश्च न स्वाम्यं तेषु विद्यते ।।

दिवोदासीये-

म्लेच्छदेशे तथा रात्रौ सन्ध्यायां विप्रवर्जिते ।
न श्राद्धमाचरेद्विद्वान्न चाकाशे कथञ्चन ।।

स्मृतिसारे-

नैकवासा न च द्वीपे नान्तरिक्षे कदाचन ।
श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ।।

अथ श्राद्धकालाः ।

ते च अमाः १२, युगादयः ४, मन्वादयः १४, संक्रान्तयः १२, वैधृतयः १२, व्यतीपाताः १२, महालयाः १५, अन्वष्टकाष्टकाश्चैव १५ षण्णवत्यः प्रकीर्तिताः इत्युक्ताः । अमासंक्रान्तियुगादिमन्वादिमहालयादयः प्रायेण पूर्वमुक्ताः ।

याज्ञवल्क्यः-

अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् ।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः ।।

**व्यतीपातो गजच्छाया ग्रहणं सूर्यचन्द्रयोः ।**
**श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ।।**

कृष्णपक्षः महालयः । जीवत्पितुः श्राद्धकालस्तु मैत्रायणीयपरिशिष्टे-

**उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।**
**तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ।।** इति

## अथ श्राद्धाधिकारिणः

**हेमाद्रौ शङ्खः-**

**पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।**
**पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः ।।**

अत्र पुत्रशब्देन औरसदत्तपुत्रावेव ग्राह्यौ । ''दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः'' इति कलावितरेषां पुत्रत्वनिषेधात् । तत्राप्यौरसाभावे पौत्रः, तदभावे प्रपौत्रः, तदभावे दत्तकादय इति ज्ञेयम् ।

**पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।**
**अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ।।**

इति हारीताद्युक्तेः । ''लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । इति याज्ञवल्क्योक्तेश्च (१.७८) । स्मृतिसंग्रहे-

**पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र एव च ।**
**पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा ।।**

**भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ।**
**असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ।।** इति

पौत्रानन्तरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च दत्तकस्य । कालादर्शेऽपि-

**पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।**
**सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते ।।**

**तेषामभावे सर्वेषां समानोदकसन्ततिः ।**
**मातृपक्षसपिण्डेन सम्बन्धो यो जलेन वा ।।**

**कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप ।**
**तत्सङ्घातगतैर्वापि तद्रिक्थात्कारयेन्नृपः ।।** इति विष्णुपुराणाच्च ।

प्रपौत्रानन्तरं दत्तकादय इत्युक्तम् । यत्तु ''पुत्रेषु विद्यमानेषु नान्यो वै कारयेत् स्वधाम्'' इति सुमन्तुवचनम्-

**पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति ।**
**पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् ।**
**नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ।।**

इति छन्दोगपरिशिष्टे च । तत्रापि पुत्रपदस्य औरसमात्रपरत्वमेव । अत एव निषेधादुपनीतपौत्रसत्वेऽप्यनुपनीतपुत्रस्यैवाधिकारः ।

**वृद्धमनुः-**

**कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः ।**
**पितृयज्ञाहुतिं पाणौ जुहुयाद् ब्राह्मणस्य सः ।।**

एको मुख्यः औरस इत्यर्थः ।

**सुमन्तुरपि-**

**अनुपनीतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।**
**यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवत्सरः ।।** इति

**स्कान्दे-**

**यज्ञेषु मन्त्रवत्कर्म पत्नी कुर्याद्यथा नृप ।**
**तथौर्ध्वदैहिकं कर्म कुर्यात्सा धर्मसंस्कृता ।।**

**अशक्तौ तु कात्यायनः-**

**असंस्कृतेन पत्न्या च ह्यग्निदानं समन्त्रकम् ।**
**कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि ।।**

अत्रौरसस्यैव त्रिवर्षस्य कृतचूडस्याधिकारो नैव दत्तकादीनामेतादृशानामिति कालादर्शः ।

**स्कान्देऽपि–**

**पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ।**
**और्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धकारिणः ।।** इति

पुत्रपौत्रप्रपौत्राभावे दत्तकादयः, तदभावे पत्नी अधिकारिणी ।

**अपुत्रा शयनं भर्तुः पालयन्ती व्रतस्थिता ।**
**पत्न्यैव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ।।** इति वृद्धमनूक्तेः ।

**भार्यापिण्डं पतिर्दद्याद् भर्त्रे भार्या तथैव च ।**
**श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः ।।** इति

**पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ।**

इति च शंखोक्तेः । पत्युरपि सपत्नीपुत्रे सति नाधिकारः ।

**विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम् ।**
**तदभावे सपत्नीजः क्षेत्रजाद्यास्तथा स्मृताः ।।**
**तेषामभावे तु पतिस्तदभावे सपिण्डकाः ।।** इति कात्यायनोक्तेः

**बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।**
**एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ।**

इति बृहस्पतिवचनाच्च । ''न भार्यायाः पतिः कुर्यादपुत्राया अपि क्वचित्'' इत्यादिकं आसुरादिविवाहोढाविषयम् ।

**धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तिता ।**
**क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते ।।**

**न सा दैवे न सा पित्र्ये दासीं तां मनुयो विदुः ।।** इति माधवीयोक्तेः ।

**भर्तुर्धनहरा पत्नी तां विना दुहिता स्मृता ।**
**अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम् ।।**

इति पुत्राभावे कन्याविषयकं बृहस्पतिवाक्यं तु भ्रातृपुत्राद्यभावविषयम् । पत्न्यभावे अविभक्तस्य सोदरः । पूर्वोक्तशङ्खवचनात् । विभक्तस्य तु दुहिता धनहारित्वात् ।

**अपुत्रस्य च या पुत्री न सा पिण्डप्रदा भवेत् ।**
**तस्य पिण्डान्दशैकं वा एकाहेनैव निक्षिपेत् ।।**

इति जाबालोक्तेश्च । अत्राऽपि ऊढैव दुहिता ।

**दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता ।**
**आशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः ।।** इति भारद्वाजोक्तेः

दुहित्रभावे दौहित्रः धनहारित्वात् ।

**मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् ।**
**कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ।।** इति वृद्धमनूक्तेः

एतद्धनहारिणः आवश्यकम्, नान्यस्येत्याह स्कन्दः-

**श्राद्धं मातामहानां तु अवश्यं धनहारिणा ।**
**दौहित्रेणार्थनिष्कृत्यै कर्तव्यं पूर्वमुत्तरम् ।।**

अत्र पत्नीदौहित्रसमवायेंऽशहरत्वात् पत्न्येव कुर्यात् । दौहित्रभ्रातृपुत्रसत्वे विभक्तस्य दौहित्रः, अविभागे भ्रातृपुत्रः, भ्रातृतत्पुत्रसत्वे कनिष्ठश्चेत् भ्रातैव, ज्येष्ठश्चेत्तत्पुत्रः कुर्यादिति दाक्षिणात्यपन्थाः । हारलतादौ तु-

**भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते ।**
**तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः ।।** इति ब्राह्मोक्तेः

ज्येष्ठभ्रातैव कुर्यान्न तत्पुत्रः । यत्तु ''नानुजस्य तथाग्रजः'' इति तत् कनिष्ठभ्रातृ-सत्वविषयम् । यच्च-

**सर्वेषामेकजातानामेकश्चेत्पुत्रवान् भवेत् ।**
**सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ।।**

इति मनुवाक्यं तत्सोदराभावविषयम् ।

मदनरत्ने–

पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ ।
धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः ।।

भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः ।
ततस्त्वसोदरो भ्राता तदभावे च तत्सुतः ।।

इति भ्रातृपुत्राभावे क्रमेण पितृमातृस्नुषास्वसृतत्पुत्रादयः, धनहारित्वात् । भगिनीतत्सुतयोर्विशेषः मदनरत्ने–

अनुजा अग्रजा वापि भ्रातुः कुर्वीत संस्क्रियाम् ।
ततः स्वसोदरास्तद्वत् क्रमेण तनयस्तयोः ।।

मार्कण्डेयपुराणे–

पुत्राद्युत्सन्नबन्धोश्च सखापि श्वशुरस्य च ।
जामाता स्नेहवत्कुर्यादखिलं पैतृमेधिकम् ।।

शातातपः–

मातुलो भागिनेयश्च स्वस्रीयो मातुलस्य च ।
श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च ।।

एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा ।।
श्राद्धमेषां तु कर्तव्यमिति वेदविदो विदुः ।।

कालादर्शे–

दाहादिमन्त्रवत्पित्रोर्विदध्यादौरसः सुतः ।
तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः ।।

दौहित्रो धनहारी च भ्राता तत्पुत्र एव च ।
पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च ।।

सपिण्डः सोदको मातुः सपिण्डश्च सहोदकः ।
स्त्री च शिष्यर्त्विगाचार्या जामाता च सखापि च ।।
उत्सन्नबन्धो रिक्थेन कारयेदवनीपतिः ।।

अधिकारिविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे-

**आदाहाद् द्वादशाहाच्च मध्ये याः स्युः क्रिया नृप ।**
**ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥**

**प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।**
**क्रियन्ते याः क्रियाः पुत्रैः प्रोच्यन्ते ता नृपोत्तराः ।**

**पितृमातृसपिण्डैश्च समानसलिलैस्तथा ।**
**तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा ॥**

**पूर्वा मध्याश्च कर्तव्याः पुत्राद्यैरेव चोत्तराः ।**
**दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा ॥**
**मृताहनि तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः ॥** इति

दौहित्रतत्पुत्रयोर्धनहारिणोरिदम् ।

**प्रेतस्य प्रेतकार्याणि अकृत्वा धनहारकः ।**
**वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेत् ॥** इति व्याघ्रपादोक्तेः-

**बोधायनः-**

**पित्रा श्राद्धं न कर्तव्यं पुत्राणां तु कथञ्चन ।**
**भ्रात्रा चैव न कर्तव्यं भ्रातॄणां च कनीयसाम् ॥**

**यदि स्नेहेन कुर्यात्तां सपिण्डीकरणं विना ।**
**गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥**

अन्याभावे पित्रादिरपि कुर्यात् ।

**उत्सन्नबान्धवं प्रेतं पिता भ्राता तथाऽग्रजः ।**
**जननी वापि संस्कुर्यान्महादोषोऽन्यथा भवेत् ॥**

इति मनूक्तेः । ब्रह्मचारिणां तु ब्राह्मे-

**असमाप्तव्रतस्यापि कर्तव्यं ब्रह्मचारिणः ।**
**श्राद्धं तु माता पितृभिर्न तु तेषां करोति सः ॥**

श्राद्धं मासिकाब्दिकादिसर्वं कार्यमित्यर्थः । नत्विति निषेधोऽन्यसत्वे । ''न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा'' इत्यादिवचनमपि सत्व एव । अन्याभावे तु ब्रह्मचारिणापि कार्यम् ।

**मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् ।**
**कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ।।** इति वृद्धमनूक्तेः ।

**श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।**
**व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि ।।** इति सुमन्तूक्तेश्च ।

**आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।**
**सङ्कटान्नं च नाश्नीयान्न च तैः सह संवसेत् ।।** इत्युक्तेश्च (या.स्मृ.३.१५)

अविभक्तानां विशेषमाह । मरीचिः-

**बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः ।**
**सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।**
**द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ।।**

ज्येष्ठस्य कर्तृत्वेऽपि सर्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्यपरान्नवर्जनादयः फलिसंस्कारास्ते सर्वेषां भवन्तीति सिद्धम् । विभक्तानां विशेषमाह उशनाः-

**नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि तु षोडश ।**
**एकेनैव तु कार्याणि संविभक्तधनेष्वपि ।।**

**लघुहारीतः-**

**सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।**
**पृथङ् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ।**
**ऊर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक् ।।**

**मदनरत्ने-**

**विभक्तास्तु पृथक्कुर्युः प्रतिसंवत्सरादिकम् ।**
**एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ।।**

दत्तकस्तु जनकस्य पुत्राद्यभावे दद्यान्न तत्सत्वे । किन्तु पालकायैव ।

**गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।**
**गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ।।** इति मनूक्तेः ।

एतत्तु जनकस्य पुत्रसत्त्वविषयम् । एतच्च प्रवरमञ्जर्यां स्पष्टम् ।

**कार्ष्णाजिनिः–**

**यावन्तः पितृवर्गाः स्युः तावद्भिर्दत्तकादयः ।**
**प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह ।।**

**द्वाभ्यां सह च तत्पुत्राः पौत्रास्त्वेकेन तत्समम् ।**
**चतुर्थपुरुषे छन्दस्तस्मादेषा त्रिपूरुषी ।**
**साधारणेषु कालेषु विशेषो नास्ति वर्गिणाम् ।।**

अस्यार्थमाह हेमाद्रिः । दत्तकादयः जनकपालकयोः कुले प्रेतानां स्ववर्गीयैः सपिण्डनं कुर्युः । दत्तकादीनां पुत्रास्तु पितुर्दत्तकस्य पितृभ्यां जनकपालकाभ्यां स्वपितामहाभ्यां सपिण्डनं कुर्युः । तेषां पौत्राः स्वपितरं दत्तकेन पितामहेन तज्जनकेन च सपिण्डयेयुः । चतुर्थोऽपि तत्कुलस्थ एव । तेषां प्रपौत्रस्तु दत्तस्य प्रपितामहस्य पालककुलस्थं चतुर्थं योजयेन्न वा । छन्दः इच्छा । दर्शमहालयादौ तु द्वयोः पित्रोः पितामहयोः प्रपितामहयोर्वा श्राद्धं देयम् । तत्र द्वयोः पित्राद्योः पृथक् पिण्डदानम् । द्वयोः उद्देशेन एको वेति । अत्र केचित् आवयोरयं पुत्र इति परिभाष्य दत्तः स द्वयोः पित्रोः श्राद्धं यस्त्वपरिभाष्य दत्तः स गृहीतुरेव दद्यादित्याहुः । अत्र मूलं चिन्त्यम् । वस्तुतस्तु जनकस्य पुत्रपत्न्याद्यभावे दत्तको द्वयोर्दद्यादन्यथा पालकायैवेति । गोत्रं तु श्राद्धे पालकस्यैव । विवाहादौ तु उभयोरित्यादि ज्ञेयम् ।

**अत्र देवताः, ऋषय ऊचुः–**

**कथं कव्यानि देयानि हव्यानि च जनैरिह ।**
**गच्छन्ति पितृलोकं वै हव्यकव्यानि वै कथम् ।।**

**यदि मर्त्यो द्विजो भुंक्ते हूयते यदि वाऽनले ।**
**शुभाशुभात्मकाः प्रेताः दत्तं तद्भुञ्जते कथम् ।।**

सूत उवाच–

[१]वसून् वदन्ति हि पितॄन् रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्तथादित्यानित्येषा वैदिकी श्रुतिः ।
नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः ।।

तथा–

अन्ये तु पितरः प्रोक्ताः पितृपितामहादयः ।
सम्बन्धनामगोत्रेण तेभ्यो दद्याद्यथाविधि ।।

वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः ।
पितुः पितामहाः प्रोक्ता आदित्याः पितृदेवताः ।।

तथा अन्यत्रापि–

वसुरुद्रास्तथाऽऽदित्या नमस्कारस्वधान्विताः ।
एते च दिव्यपितरः एतदायतमानुषाः ।। इति

याज्ञवल्क्योऽपि–

[२]वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।।

स्कान्देऽपि–

~~पुत्रैर्दत्तानशिता तु~~ पिण्डांस्तद्रूपधारिणः । (दत्तानशित्वा तु)
वस्वादयः पोषयन्ति तान् योन्यन्तरगानपि ।।

तस्माद्दद्यात्सुतः पिण्डांस्त्रिभ्यो वस्वादिनामभिः ।
नाम गोत्रं समुच्चार्य देवपूर्वो विचक्षणः ।।

अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः ।
[३]नाममन्त्रास्तदादेशा भवान्तरगतानपि ।।

---

१. मनुस्मृतावप्ययं श्लोकः, ''प्रपितामहांस्तथादित्यान् श्रुतिरेषा पुरातनी'' इति पादव्यत्यासेन (३.२८४) पठ्यते

२ प्रीणयन्ति मनुष्याणां पितॄन्श्राद्धेन तर्पिताः ।। इति उत्तरार्धः । या.स्मृ.१.२६९।।

३ नाम गोत्रं कालदेशा भवान्तरगतानपि ।। इति मत्स्यपुराणम् (१९.५)

प्राणिनः प्रीणयन्त्येव तदाहारत्वमागतान् ।
देवो यदि पिता जातः शुभकर्मानुयोगतः ।।

तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ।
[१]दैत्यत्वे भोगरूपेण पशुत्वे च तृणं भवेत् ।।

श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठति ।
पानं भवति यक्षत्वे राक्षसत्वे तथाऽमिषम् ।।

दानवत्वे तथा मद्यं प्रेतत्वे रुधिरोदकम् ।
मनुष्यत्वेऽन्नपानादिनानाभोगरसो भवेत् ।।

रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तिता ।
दानशक्तिः सविभवा रूपमारोग्यमेव वा ।। इति मत्स्यपुराणम् (१९.१०)

श्राद्धपुष्पमिदं प्रोक्तं फलं ब्रह्मसमागमः ।
आयुः पुत्रान् धनं विद्यां स्वर्गमोक्षसुखानि च ।।
राज्यं वाऽपि प्रयच्छन्ति प्रीताः पितृगणा नृणाम् ।।

आश्वलायनोऽपि–

वस्वादयस्तु येनेह श्राद्धेन परितोषिताः ।
नाकस्थान् नरकस्थांश्च नानायोनिगतानापि ।
तत्तत्पितॄन् पोषयन्ति तत्तदाहाररूपतः ।।

अत्र पित्रादिषु प्रद्युम्नाद्या अन्तर्यामितया स्थिता मुख्यदेवता पित्रादिशब्दवाच्या ज्ञेयाः । तच्चोक्तं विष्णुधर्मोत्तरे–

प्रपितामहे तु निर्दिष्टो वासुदेवः परः पुमान् ।
पितामहे तु निर्दिष्टो तथा सङ्कर्षणः प्रभुः ।
पितृसंस्थस्तु विज्ञेयः प्रद्युम्नो ह्यपराजितः ।।

---

१ ''गान्धर्वे'' इति निर्णयसिन्धुः ।

**भविष्ये च–**

**अनिरुद्धः स्वयं ज्ञेयः प्रद्युम्नस्तत्पिता स्मृतः ।**
**सङ्कर्षणस्तज्जनको वासुदेवस्तु तत्पिता ।।**

स्वयं कर्तृजीवान्तर्यामी । तथा च श्राद्धादिषु स्वस्वपितृनामगोत्रादिभिः आहूताः वसुरुद्रादित्याः तत्र ब्राह्मणेषु स्थित्वा देवदत्तेन दत्तं स्वयं स्वीकृत्य प्रीताः सन्तः स्वनियम्यदेवदत्तपित्रादीन् तन्नामकान् तत्तद्योनिगतान् तत्तद्योनियोग्यभोज्यादिना तर्पयन्ति गर्भिणीगर्भवदित्युक्तं भवति । अथ पितृदेवतासंख्या ब्राह्मे–

**पार्वणं कुरुते यस्तु केवलं पितृहेतुकम् ।**
**मातामह्यं न कुरुते पितृहा स प्रजायते ।।**

**धौम्यः–**

**पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।**
**अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ।।**

**अस्यापवादमाह कात्यायनः–**

**कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडशम् ।**
**प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ।।**

**दर्शे नित्ये युगादौ च मन्वादौ ग्रहणे तथा ।**
**संक्रान्तिषु भरण्यां च षड्दैवत्यं विधीयते ।।**

**त्रिदैवत्यं मृताहे च षड्दैवत्यं तु दर्शके ।**
**वृद्धौ तु नवदैवत्यं अष्टकासु तथैव च ।।**

दर्शादौ सपत्नीकानामेव देवतात्वम् ।

**स्वेन भर्त्रा समं श्राद्धं माता भुंक्ते सुधासमम् ।।**
**पितामही च स्वेनैव तथैव प्रपितामही ।।** इति तत्रैवोक्तेः

**चतुर्विंशतिमते–**

**क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया ।**
**केचिदिच्छन्ति नारीणां पृथक् श्राद्धं महर्षयः ।।**

**अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।**
**अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ।।** इति कात्यायनोक्तेश्च ।

अत्र मातृशब्दो जनन्यामेव मुख्यः, तेन सपत्नमातृभ्यो न दद्यात् । एवं पितामह्यादिशब्दैः पितृजनन्यादय एवोच्यन्ते इति । तत्सपत्नीभ्यो न देयमिति हेमाद्रिः । कारुण्येन तु महालयादौ देयमिति स एवेति ।

**अथ विश्वेदेवाः । शंखः–**

**इष्टिश्राद्धे क्रतूदक्षौ सत्यौ नान्दीमुखे वसू ।**
**नैमित्तिके कामकालौ काम्ये च धुरिलोचनौ ।**
**पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।।**

तत्रैव -

**उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।**
**अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ।।**

**आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।**
**ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ।।** इति

आधानादिकर्माङ्गमिष्टिश्राद्धं नैमित्तिकं सपिण्डीकरणम् । क्वचिद्विश्वेदेवापवादमाह शातातपः–

**नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।**
**मातुः श्राद्धश्च युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ।**
**योजयेद्देवपूर्वाणि श्राद्धान्यन्यानि यत्नतः ।।**

नान्दीश्राद्धे भिन्नप्रयोगपक्षे मातृश्राद्धमदैवमिति हेमाद्रिः ।

**अथ विप्राः । बह्वृचकारिकायाम् ।**

**ब्राह्मणान्वेदसम्पन्नान्दान्तान् शान्तानलोलुपान् ।**
**अक्रोधनानरागांस्तु पाषण्डकुलनिस्पृहान् ।।**

**विहितानामनुष्ठातॄन् निषिद्धानां च वर्जकान् ।**
**एवंविधद्विजाभावे सतैकेन गुणेन वा ।**
**युक्तान्निमन्त्रयीतार्यानसद्गुणविवर्जितान् ।।** इति

तत्रापि यतयो मुख्या इत्याह–

**यो वै यतीननादृत्य भोजयेदितरान् द्विजान् ।**
**विजानन्वसतो ग्रामे कव्यं तद्याति राक्षसान् ।।**

**दक्षः–**

**विना मांसेन मधुना विना दक्षिणयाऽशिषा ।**
**परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु ।।**

एतच्च ज्ञानिविषयम् ।

**कौर्मे–**

**असमानप्रवरको ह्यसगोत्रस्तथैव च ।**
**असम्बन्धी च विज्ञेयो ब्राह्मणः श्राद्धसिद्धये ।।**

**श्राद्धेषु विनियोज्यास्ते ब्राह्मणा ब्रह्मवित्तमाः ।**
**ये योनिगोत्रमन्त्रान्तेवासिसम्बन्धवर्जिताः ।**

द्वयोर्भ्रात्रोः श्राद्धे भोजनं निषिद्धम् ।

**पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम् ।**
**सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत् ।।**

इति जातूकर्ण्योक्तेः ।

**एकोदरप्रसूतौ वा पितृपुत्रौ च पैतृके ।**
**वर्जयेत्तौ पृथक् स्थाने योजयेद्दैवपित्रयोः ।।**

**भ्रातरौ पितृपुत्रौ वा समधीतौ निमन्त्रयेत् ।**
**दैवे पित्र्येऽथवान्यस्मिन् वदन्त्येके महर्षयः ।।**

एतादृशाः मुख्या ब्राह्मणाः ।

**मध्यमास्तु कौर्मे–**

**नैकगोत्रे हविर्दद्याद्यथा कन्या तथा हविः ।**
**अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ।।**

**निमन्त्रयीत पूर्वेद्युः स्वशाखीयान् द्विजोत्तमान् ।**
**स्वशाखीयद्विजाभावे द्विजानन्यान्निमन्त्रयेत् ॥**

**तथा–**

**उच्छिष्टोऽपि वरो दर्भो न दूर्वा जाह्नवीभवा ।**
**स्वशाखोऽपि वरो मूर्खः परशाखो न पण्डितः ॥**

इदं तु निर्मूलमिति कश्चित्–

**यत्नेन भोजयेच्छ्राद्धे ब्राह्मणं वेदपारगम् ।**
**[१]ऋक्शाखान्तमथाध्वर्युं छन्दोगं वा समाप्तिगम् ॥**

**एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः ।**
**पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥**

इति स्वशाखीयनियमाभावप्रतिपादकमनुवचनात् ।

**[२]मातामहो मातुलभागिनेयदौहित्रजामातृगुरुस्वशिष्याः ।**
**ऋत्विक्च याज्यश्वशुरौ स्वबन्धुशालागुणाढ्यास्त्वनुकल्पभूताः ॥**

अत्र बन्धवः ''मातृष्वसृपितृष्वसृमातुलपुत्रा इति बोपदेवः । सगुणस्वस्त्रीयाद्यतिक्रमे दोष एव ।

**सप्तपूर्वान् सप्तपरान् पुरुषानात्मना सह ।**
**अतिक्रम्य द्विजानेतान्नरके पातयेत्खग ॥**

**सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ।**
**भागिनेयं विशेषेण तथा बन्धुं खगाधिप ॥** इति भविष्योक्तेः

गुण्यतिक्रम एव दोषो न तु मूर्खे ।

**ब्राह्मणातिक्रमो नास्ति मूर्खे वेदविवर्जिते ।**
**ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥** इति कात्यायनोक्तेः ।

---

१ शाखान्तगमथाध्वर्युम् इति नि.सिं पाठः ।

२ अत्र मामकः श्लोकः इति निर्णयसिन्धौ अयं श्लोकः उदाहृतः ।

अत्रिः-

षड्भ्यस्तु पुरुषेभ्योऽर्वागश्राद्धेयास्तु गोत्रिणः ।
षड्भ्यस्तु परतो भोज्याः श्राद्धे स्युर्गोत्रजा अपि ।।

एतच्च ब्राह्मणालाभे । अत्रिर्विशेषमाह-

ऋत्विक्पुत्रादयोऽप्येते सकुल्या ब्राह्मणाः स्मृताः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ।
सगोत्रा न नियोक्तव्याः स्त्रियश्चैव विशेषतः ।।

आचार्यः-

सत्पात्राणामलाभे तु पात्रभूतान् स्वबान्धवान् ।
कृतोपकारिणश्चापि श्राद्धे पूजितुमर्हति ।।

मातुलो भागिनेयश्च जामाता स्वस्त्रियस्तथा ।
सुहृच्च श्वशुरः श्यालः सम्बन्धी ज्ञातिरेव च ।।

नियता दोषनिर्मुक्ता गुणैश्चोक्तैः समन्विताः ।
आनुकुल्येऽर्चनीया स्युर्बान्धवांश्चोपकारिणः ।। इति

निषिद्धास्तु स्ववर्णाश्रमाचाररहिताः, व्यङ्गाः, व्याधिताः, ज्योतिषाः, वैद्याः, आततायिनः इत्यादयो दोषिणः गुणहीना विप्राः इति ज्ञेयम् । तथा यमः-

अपत्नीकश्च वर्ज्यः स्यात्सपत्नीकोऽप्यनग्निकः ।
पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिः ।
सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत् ।।

क्वचिद्विप्राणां जातिमात्रेण ग्राह्यत्वमुक्तं पाद्मे-

तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन ।
अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ।।

स्कान्देऽपि-

ब्राह्मणान्न परीक्षेत तीर्थे क्षेत्रनिवासिनः ।।

मनुः—

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ।।

असम्भवपरमेतदिति मेधातिथिः ।

व्यासः—

[१]गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ।।

काणाः कूटाश्च कुब्जाश्च दरिद्रा व्याधितास्तथा ।
सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ।। इति

अथ विप्रनिमन्त्रणम्, वाराहे—

वस्त्रशौचादि कर्तव्यं श्वः कर्तास्मीति जानता ।
स्थानोपलेपनं कृत्वा ततो विप्रान्निमन्त्रयेत् ।
दन्तकाष्ठश्च विसृजेद् ब्रह्मचारी शुचिर्भवेत् ।।

कारिकायां—

शुचिर्निमन्त्र्य दैवे द्वौ त्रीन्विप्रान् पितृकर्मणि ।
दैवे पित्र्ये च वैकैकं सपिण्डीकरणं विना ।।

सायमौपासनं हुत्वा सायं भुक्तवतो द्विजान् ।
उपगम्य स्वयं शिष्यः सुतो वा प्रश्रयान्वितः ।
श्राद्धं श्वो भविता तत्र भवद्भिर्दीयतां क्षणः ।

एवमामन्त्र्य नियतो मनोवाक्कायकर्मभिः ।
भोक्तुर्भोजयितुश्चैव ब्रह्मचर्यमतः परम् ।।

स्मृत्यन्तरे—

पूर्वेद्युर्वा परेद्युर्वा श्राद्धकर्मण्युपस्थिते ।
निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान्यथोदितान् ।।

---

१ सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितः त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ।। इति मनुस्मृतौ (२.११८) पठितः ।

बृहस्पतिः–

उपवीती ततो भूत्वा देवार्थं तु द्विजोत्तमान् ।।

यमः–

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ।।

ब्राह्मणसंख्या–

पितॄणामयुजो युग्मान् देवानामिच्छया द्विज ।
देवानामेकमेकं वा पितॄणां च नियोजयेत् ।।

पराशरः–

सम्पत्तावथ पात्राणामेकैकस्य त्रयस्त्रयः ।
पित्रादेः ब्राह्मणाः प्रोक्ताश्चत्वारो वैश्वदैविके ।।

मनुः–

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ।।

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ।।

पञ्च वा स्युः द्विजाः शस्ताः द्वौ वा चाऽपि मृतेऽहनि ।

द्वौ दैवे च त्रयः पित्र्ये एकैको वोभयत्र तु ।।
चत्वारश्च द्विजाः श्राद्धे दैवे चैको भवेत्तदा ।

त्रयः पित्र्ये भवन्त्येके वदत्येवं हि संकटे ।।
अथ विप्रास्त्रयश्चेत्स्युः एकः स्यात्पितृषु त्रिषु ।
स्यातां दैवे तु विप्रौ द्वाविति केचिद्वदन्ति हि ।।

शातातपः–

द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत् ।
पित्र्ये तूदङ्मुखांस्त्रींश्च बह्वृचाध्वर्युसामगान् ।।

बृहस्पतिः–

यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ।।

सायणीये–

ऋचा तु तृप्यति पिता यजुषा तु पितामहः ।
पितुः पितामहः साम्ना छन्दोगोऽभ्यधिकस्ततः ।।

देवलः–

एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षडर्घ्यान् दापयेत्तत्र षड्भ्यो दद्यात्तथा हविः ।।

गोभिलः शंखः–

भोजयेदथवाऽप्येकं ब्राह्मणं पंक्तिपावनम् ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ।।

गोभिलः–

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ।।

देवतायतने कृत्वा ततः श्राद्धं समाचरेत् ।
प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ।।

एतच्च सपिण्डीकरणवर्ज्यम् । सपिण्डीकरणे तु नियतं त्रिभिर्भवितव्यमिति । दैवे पित्र्येऽथवैकैकं सपिण्डीकरणं विना ।। इति कारिकोक्तेः । अत्र एकविप्रे साग्नेर्विशेषं आह प्रचेताः–

एकस्मिन् ब्राह्मणे दैवे साग्नेरग्निर्भवेत्सदा ।
अनग्नेः कुशमुष्टिः स्यात् श्राद्धकर्मणि सर्वतः ।।

सत्यव्रतः–

निधाय दर्भनिचयमासनेषु समाहितः ।
प्रेषानुप्रैषसंयुक्तं सर्वश्राद्धं प्रकल्पयेत् ।।

कात्यायनः–

यज्ञवस्तुनि मुष्टौ च स्तम्बे दर्भवटौ तथा ।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेषु च ।। इति

एकब्राह्मणश्राद्धं विप्रालाभे अशक्तौ वेति ज्ञेयम् ।

एकविप्रेऽपि च श्राद्धे कुर्यात्पिण्डादिकं द्विजः ।
यद्येकोऽपि न लभ्येत श्राद्धे चोपवसेद् द्विजः ।।

कुर्यात्प्रत्याब्दिकं श्राद्धं यथाविध्यपरेऽहनि ।
तत्रापि न लभेद्दैवात्कुर्याद्दर्शादिकेषु च ।। इत्युक्तेः

निमन्त्रणानन्तरं वक्तव्यमाह । मात्स्ये–

पठन्निमन्त्र्य नियमान् श्रावयेत्पैतृकान् बुधः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ।।

पूर्वेद्युर्निमन्त्रणं चेत् मनुः–

सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिश्च श्वो भूते श्राद्धकर्मणि ।। इति पठेत्

देवलः–

असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।।

अथ श्राद्धकर्तृभोक्तृनियमाः । निमन्त्रितविप्रत्यागे यमः–

आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् ।
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ।।

प्रमादात् त्यागे तु हारीतः–

प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः ।
तर्पयित्वा यथान्यायं सर्वं तत्फलमश्नुते ।।

यमः– आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चाण्डालेष्वभिजायते ।।

देवल:-

पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहम् ।
भुक्ताहारोऽथवा भुंक्ते सुकृतं तस्य नश्यति ।।

आदित्यपुराणे-

आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन ।
देवतानां पितॄणां च दातुरन्नस्य चैव हि ।
चिरकारी भवेद् द्रोही पच्यते नरकाग्निना ।।

यमः-

निमन्त्रितस्तु यो विप्रो ह्यध्वानं याति दुर्मतिः ।
भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः ।।

शंखः-

निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः ।
श्राद्धं दत्वा च भुक्त्वा च युक्तः स्यान्महतैनसा ।।

आश्वलायनः-

श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वाऽपि निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ।।

भोक्ष्यन् करिष्यन् श्वः श्राद्धं पूर्वरात्रौ प्रयत्नतः ।
व्यवायं भोजनं चापि ऋतावपि विवर्जयेत् ।।

बृहस्पतिः-

पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जयेत् ।।

सन्ध्यानिषेधस्तु प्रायश्चित्तात् पूर्वं ज्ञेयः ।

यथाहोशनाः-

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ।।

होमनिषेधस्तु स्वविषयः ।

**सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।**
**एवमादिनिमित्तेषु हावयेन्नतु हापयेत् ।।** इति छन्दोगपरिशिष्टात् ।

**जाबालिः–**

**दन्तधावनताम्बूले तैलाभ्यञ्जनभोजनम् ।**
**रत्यौषधं परान्नं च श्राद्धकृत्सप्त वर्जयेत् ।।**

**वृद्धः–**

**निमन्त्र्य विप्रांस्तदहः वर्जयेन्मैथुनं क्षुरम् ।**

कर्तुरशक्तावुक्तं वाराहे–

**न शक्नोति स्वयं कर्तुं यदा चानवकाशतः ।**
**श्राद्धं शिष्येण पुत्रेण तदान्येनाऽपि कारयेत् ।।**

**नियमानाचरेत्सोऽपि नियतांश्च वसुन्धरे ।**
**यजमानोऽपि तान् सर्वानाचरेत्सुसमाहितः ।।**

स्त्रिया अपि नियमाः पाद्मे–

**मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च ।**
**हसते वदते चैव निराशाः पितरो गताः ।।**

**आश्वलायनः–**

**श्राद्धेऽह्नि भोजयेद्वास्तौ न बालानपि यत्नतः ।**
**प्राक्पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्यात्स्वविग्रहम् ।।**

**अथ श्राद्धवस्तूनि यमः–**

**समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्मणि ।**
**मूलेन लोकान् जयति शक्रस्य सुमहात्मनः ।।**

**व्यासः–**

**तर्पणादीनि कर्माणि पितृणां यानि कानिचित् ।**
**तानि स्युर्द्विगुणैर्दर्भैः [१]सदा पुत्रैः पितृक्रिया ।**

१. ''सप्तपत्रैर्विशेषतः'' इति निर्णयसिन्धुः ।

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् ।।

शङ्खः–

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ।।

रत्नावल्यां–

द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः ।।

स्कान्दे–

द्वाभ्यामनामिकाभ्यां तु धार्ये दर्भपवित्रके ।।

कुशाभावे सुमन्तुः–

कुशाः काशाः शरा गुन्द्रा यवा दूर्वाऽथ बल्वजाः ।
गोकेशमुञ्जकुन्दाश्च पूर्वाभावे परः परः ।।

शङ्खः–

काशहस्तस्तु नाचामेत्कदाचिद्विधिशङ्कया ।
प्रायश्चित्तेन युज्येत दूर्वाहस्तस्तथैव च ।।

हेमाद्रौ–

अन्यानि च पवित्राणि कुशदूर्वात्मकानि च ।
हेमात्मकपवित्रस्य ह्येकां नार्हन्ति वै कलाम् ।।

अथ हविर्द्रव्याणि ब्राह्मे–

[१]यवैर्व्रीहितिलैर्माषगोधूमैश्चणकैस्तथा ।

१ त्वष्टा वै यजमानेन वार्यमाणे महात्मना ।
पपौ शचीपतिः सोमं पृथिव्यां विप्लुषोऽपतन् ।।
श्यामाकास्तु ततो जाताः पित्रर्थमपि पूजिताः ।
गोधूमाश्च यवाश्चैव समुद्रा रक्तशालयः ।
एते सोमात्समुद्भूताः पितॄणाममृतं ततः ।
तस्मात्प्रयत्नतो देया एते श्राद्धेषु वंशजैः ।।
इति वीरमित्रोदये ब्रह्मवैवर्तश्लोका उदाहृताः ।

सन्तर्पयेत्पितॄन् मुद्रैः श्यामाकैः सर्षपद्रवैः ।।
नीवारैर्हरिशामाकैः प्रियंगुभिरथार्चयेत् ।।

[१]चणकश्चिन्त्यः ।

सायनीये-

अगोधूमश्च यच्छ्राद्धं माषमुद्गविवर्जितम् ।
तैलपक्वेन रहितं कृतमप्यकृतं भवेत् ।।

कार्ष्णाजिनिः-

यदिष्टं जीवतश्चासीत्तद्द्यात्तस्य यत्नतः ।
स तृप्तो दुस्तरं मार्गं ततो याति न संशयः ।।

आश्वलायनः-

कदल्यादिफलैः शस्तैर्मूलैरार्द्रादिकैरपि ।
गोरसैर्मधुना दध्ना श्राद्धे सन्तर्पयेत् पितॄन् ।।
कदल्याम्रफलादीनि श्राद्धे सम्पादयेत्सुधीः ।।

वायुपुराणे-

कालशाकं महाशाकं द्रोणशाकं तथार्द्रकम् ।
बिल्वामलकमृद्वीकापनसाम्रादिदाडिमम् ।।

चव्यं पालिवताक्षोटं खर्जूरं च कसेरुकम् ।
कोविदारश्च कन्दश्च पटोलं बृहतीफलम् ।।

पिप्पली मरिचश्चैव एला शुण्ठी च सैन्धवम् ।
[२]शर्करागुडकर्पूरबदरीद्रोणपत्रकम् ।।

---

१ ''चणको विकल्पितः'' इति धर्मसिन्धुः ।

अत्र यानि चणकादीनि विहितनिषिद्धानि तेषां विकल्पः । अन्यथा ''श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियङ्गुभिः । गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन्'' इति, ''गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि'' इति हेमाद्रौ कौर्मविष्णुधर्मादिविरोधः स्यात् । इति निर्णयसिन्धुः ।
चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः ।। इति स्मृतिमुक्तावली ।।

२ अमृतं पिबतो वक्त्रात्सूर्यस्यामृतबिन्दवः ।
निपेतुर्ये तदुत्था हि शालिमुद्गेक्षवः स्मृताः ।।

**मधुकं रामठश्चैव कर्पूरं गुडमेव च ।**
**श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा ।।**

रामठं हिङ्गु, मृद्वीका द्राक्षा, [१]पालिवतं कोशातकी, कन्दः सूरणः ।

**सुमन्तुः-**

**पयो दधि घृतश्चैव गवां श्राद्धेषु पावनम् ।**
**महिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित् ।।**

**याज्ञवल्क्यः-**

**सन्धिन्यनिर्दशाऽवत्सागोपयः परिवर्जयेत् ।।**

**देवलः-**

**अजाविमहिषीणां तु पयः श्राद्धेषु वर्जयेत् ।**
**विकारान् पयसश्चैव माहिषं तु घृतं हितम् ।।**

**ब्राह्मे-**

**याचितं च दधि क्षीरं घृतं चैव परित्यजेत् ।**
**दधि पर्युषितं चैव तक्रं चापि परित्यजेत् ।**
**देयं तक्रं तु सद्यस्कं नवनीतादनुद्धृतम् ।**

**अथ वर्ज्यवस्तूनि, मार्कण्डेयपुराणे-**

**यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितम् ।**
**अन्यायकन्याशुल्कार्थं द्रव्यं चात्र विगर्हितम् ।**
**पित्रर्थं मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतम् ।।**

**शंखः-**

**बिडालोच्छिष्टमाघ्रातं श्राद्धे यत्नेन वर्जयेत् ।**
**कूष्माण्डं महिषीक्षीरमाढक्यो राजसर्षपाः ।**
**चणका राजमाषाश्च घ्नन्ति श्राद्धं न संशयः ।।**

---

शर्करा परतस्तस्मादिक्षुसारोमृतात्मवान् ।
इष्टा रवेरतः पुण्या शर्करा हव्यकव्ययोः ।।

१ पालिवतं जम्बीरं इति निर्णयसिन्धुः ।

**माधवीये–**

**यावनालान् कुलित्थांश्च वर्जयन्ति विपश्चितः ।**
**[१]कृतश्च लवणं सर्वं वंशाग्रं च विवर्जयेत् ।।**

**राजमाषान् मसूरांश्च कोद्रवान् कोरदूषकान् ।**
**लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ।।**

**वायवीये–**

**सैन्धवं लावणं चैव [२]तथा मानससम्भवम् ।**
**पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यशः ।।**

**चन्द्रिकायाम्–**

**कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि ।**
**न वर्जयेत्तिलांश्चैव मुद्गमाषांस्तथैव च ।।**

**पृथ्वीचन्द्रोदये–**

**अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।**
**देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ।।** इति निगमोक्तेः

मधुमांसादिविधिः युगान्तरपर इति ज्ञेयम् ।

**द्विःस्विन्नं परिदग्धञ्च तथैवाग्रावलेहितम् ।**
**शर्कराकीटपाषाणैर्केशैर्यच्चाप्युपद्रुतम् ।**
**पिण्याकं मथितं चैव तथाऽतिलवणं च यत् ।**

**सिद्धाः कृताश्च ये भक्षाः प्रत्यक्षलवणीकृताः ।।**
**वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि ।**

द्विःस्विन्नं यत् सकृत्पाकेनैव भक्ष्यं पुनः हिङ्गुजीरकादि संस्कारार्थं पुनः पच्यते तद्वर्ज्यम् । यत्तु तिक्तशाकान्नविकारादि द्विःपाकेनैव भक्षणार्हं न तन्निषिद्धम् । अग्रावलेहितं आस्वादितपूर्वम् ।

---

१ ''कृतलवणं साम्भरभिन्नम्'' निर्णयसिन्धुः ।

२ ''यच्च सामुद्रिकं भवेत्'' इति शूलपाणौ पाठः । इति निर्णयसिन्धुः ।।

**शाकटायनः–**

**गान्धारिकापटोलानि श्राद्धकर्मणि वर्जयेत् ॥**

गान्धारिका तण्डुलीयं इति चन्द्रिका ।

**स्मृतिसारे–**

**क्षीरे तु लवणं दत्वा उच्छिष्टेऽपि च यद् घृतम् ।**
**स्नानं रजकतीर्थेषु ताम्रे गव्यं सुरासमम् ॥**

**नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु ।**
**गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥**

**ताम्रपात्रे धृतं मांसं यच्च गव्यं घृतेतरत् ।**
**अमिषं तु गवां मांसं दधि मद्यं पयो रजः ॥**

**द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि ।**
**पयोऽनुद्धृतसारं च ताम्रपात्रे न दुष्यति ॥**

**अथ जलम् । याज्ञवल्क्यः–**

**शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥**

**वर्ज्यं जलम्, ब्रह्माण्डे**

**दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम् ।**
**न भवेद्यत्र गोतृप्तिर्नक्तं यच्चाप्युपाहृतम् ॥**

**यन्न सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजम् ।**
**तद्वर्ज्यं सलिलं तात सदैव श्राद्धकर्मणि ॥**

निपानो जलाशयः ।

**शंखः–**

**स्नानमाचमनं दानं देवतापितृतर्पणम् ।**
**शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥**

अन्यान्यपि श्राद्धे पवित्राणि, मात्स्ये–

**[1]मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः ।**
**ते वै श्राद्धे पवित्राः स्युस्तिलास्ते न तिलास्तिलाः ॥**

**ब्राह्मे–**

**यतिस्त्रिदण्डः करुणा राजतं पात्रमेव च ।**
**दौहित्रं कुतपः कालश्छागः कृष्णाजिनं तथा ॥**

शस्तानीति शेषः । दौहित्रं खड्गपात्रमिति कल्पतरुः । अपरार्के स्मृत्यन्तरे–

**अपत्यं दुहितुश्चैव खड्गपात्रं तथैव च ।**
**घृतं च कपिलाया गोर्दौहित्रमिति कीर्तितम् ॥**

**ब्रह्माण्डे–**

**अमावास्यागते सोमे या तु खादति गौस्तृणम् ।**
**तस्या गोर्यद्भवेत्क्षीरं तद्दौहित्रमुदाहृतम् ॥**

**स्मृतिसंग्रहे–**

**उच्छिष्टं शिवनिर्माल्यं [2]वान्तञ्च मृतकर्पटम् ।**
**श्राद्धे सप्त पवित्राणि दौहित्रः कुतपस्तिलाः ॥**

उच्छिष्टं वत्सस्य दुग्धमित्यर्थः । शिवनिर्माल्यं गङ्गोदकम् । वान्तं मधु, मृतकर्पटं तसरीपट्टम् ।

---

१ अत्र पूर्वार्धोत्तरार्धयोर्मध्ये केचन श्लोका निर्णयसिन्धावुदाहृताः ते च–
रौप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ।
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥

२ रसांश्च सृजता पूर्वं मधु सृष्टं स्वयम्भुवा ।
तेन प्रशस्यते श्राद्धे पितॄणां तृप्तिदायकम् ॥
यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि ।
मिष्टान्नैरपि संयुक्तं पितॄणां नैव तृप्तये ॥
अणुमात्रमपि श्राद्धं यदि न स्याच्च माक्षिकम् ।
नामापि कीर्तनीयं स्यात्पितॄणां प्रीतये ततः ॥इति वीरमित्रोदये नागरखण्डवचनानि ।

**तिलेष्वापस्तम्बः—**

**अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।**
**ते वै श्राद्धे पवित्राः स्युस्तिलास्ते न तिलास्तिलाः ।।**

अभावे ग्राम्या ग्राह्याः । "गौराः कृष्णास्तथारण्यास्तथैव त्रिविधास्तिलाः" ।। इति ब्राह्मोक्तेः ।

**अथ वर्ज्यानि, यमः—**

**कुक्कुटो विड्वराहश्च काकश्चाथ बिडालकः ।**
**वृषलीपतिश्च वृषलः षण्ढोऽवीरा रजस्वलाः ।**
**एते तु श्राद्धकाले वै त्याजनीयाः प्रयत्नतः ।।**

**वायवीये—**

**अन्नं पश्येयुरेते तु यदि वै हव्यकव्ययोः ।**
**उत्स्रष्टव्यं प्रधानार्थं संस्कारस्त्वापदि स्मृतः ।।**

**अथ श्राद्धदिनकृत्यम्, उशनाः—**

गोमयोदकैः भूमिभाजनशौचं कुर्यात् ।

**पराशरः—**

**गृहाग्निशिशुदेवानां ब्रह्मचारितपस्विनाम् ।**
**तावन्न दीयते किञ्चिद्यावत्पिण्डान्न निर्वपेत् ।।**

**तथा—**

**दधिसर्पिर्धान्यभिक्षालवणव्यञ्जनादिकम् ।**
**अनलश्च न दातव्यो यावत्पिंडांस्तु निर्वपेत् ।।**

**देवलः—**

**तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः ।**
**आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ।।**

अत्रात्मने पदात्स्वयमेव पाकः कार्यः । अशक्तौ पत्न्यादयः । तदभावे बान्धवाः।

**श्राद्धान्नं त्वात्मना पच्यं पत्न्या भ्रात्रा सुतेन वा ।**
**तत्पत्न्या वा पितृव्यैश्च नान्यैः पच्यं कदाचन ।।** इत्युक्तेः

श्राद्धदीपे कारिकायाम्

समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः ।
कृतोपकारिभिश्चैव पाककार्यं प्रशस्यते ।।

व्यासः—

गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः ।
निष्पन्नेषु च पाकेषु पुनः स्नानं समाचरेत् ।।

स्मृतिसारे—

न पाकं कारयेत्पुत्रीं विधवां चान्यगोत्रजाम् ।
मृतवन्ध्यां च गर्भघ्नीं गर्भिणीं चैव दुर्मुखीम् ।।
वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् ।।

मातृपितृवंशजभिन्नां त्यजेदित्यर्थः ।

पाकभाण्डानि तु, नागरखण्डे—

सौवर्णान्यथ रौप्याणि कांस्यताम्रोद्भवानि च ।
मार्तिकान्यपि भव्यानि नूतनानि दृढानि च ।।

आदित्यपुराणे—

पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् ।
स्वर्णादिधातुजातेषु मृण्मयेष्वपि वा द्विजः ।।

वायुपुराणे—

न कदाचित्पचेदन्नमयस्थालिषु पैतृकम् ।
अयसो दर्शनादेव पितरो विद्रवन्ति हि ।।

कालायसं विशेषेण निन्दन्ति पितृकर्मणि ।
फलानां चैव शाकानां छेदनार्थानि यानि तु ।।

महानसेऽपि शस्त्राणि तेषामेव हि सन्निधिः ।
इष्यते नेतरस्यात्र शस्त्रमात्रस्य दर्शनम् ।।
महानसेऽपि युक्तानामपि कार्यं न दर्शनम् ।।

तत्रैव ।

पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु च ।
समुद्धरति वै घोरात् पितॄन् दुःखमहार्णवात् ।।

तैजसानामभावे तु पिठरे मृण्मयेऽपि च ।
नवे शुचौ प्रकुर्वीत पाकं पित्र्यर्थमादरात् ।।

आदित्यपुराणे–

पक्वान्नस्थापनार्थे तु शस्यन्ते दारुजान्यपि ।
दर्व्यादीन्यपि कार्याणि यज्ञियैरपि दारुभिः ।।

यमः–

विवाहे प्रेतकार्ये च मातापित्रोः क्षयेऽहनि ।
नवभाण्डानि कुर्वीत यज्ञकाले विशेषतः ।।

अथ पाकाग्निः । प्रजापतिः–

औपासनेनान्नसिद्धिरग्नौकरणमेव च ।।

अंगिराः–

शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ।।

कर्मप्रदीपे–

प्रातर्होमं तु निर्वृत्य समुद्धृत्य हुताशनात् ।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ।।

पाकान्तेऽग्निं तमाहृत्य गृह्याग्नौ तु पुनः क्षिपेत् ।
ततोऽस्मिन् वैश्वदेवादिकर्म कुर्यादतन्द्रितः ।।

तदभावे लौकिके ।

ततः पचेयुरन्नानि निर्वापानन्तरं शनैः ।
वैवाहिकेऽग्नावन्यत्र लौकिके वापि संयतः ।। इति संग्रहात्

पित्रर्थं निर्वापं कृत्वेत्यर्थः ।

**मात्स्ये–**

**अग्निमान् निर्वपेत् पैत्रं चरुं वा सममुष्टिभिः ।**
**पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत् ।।**

पिण्डपितृयज्ञार्थं पाकविषयोऽयं निर्वाप इति युक्तम् ।।

**ततो निवृत्ते मध्याह्ने कृत्तरोमनखान् द्विजान् ।**
**अभिगम्य यथान्यायं प्रयच्छेद्दन्तधावनम् ।।**

**तैलमभ्यञ्जनं स्नानं स्नानीयं च पृथग्विधम् ।**
**पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम् ।।**

औदुम्बरैस्ताम्रमयैः । अत्र क्षौरादि निषिद्धतिथ्यादिव्यतिरिक्तविषयमिति हेमाद्रिः।

**अपरार्के प्रचेताः–**

**स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।**
**श्राद्धकृच्छुक्लवासाः स्यान्मौनी च विजितेन्द्रियः ।।**

**वस्त्रे विशेषमाह भृगुः–**

**नग्नः स्यान्मलवद्वासाः नग्नः कौपीनकेवलः ।**
**द्विकच्छोऽनुत्तरीयश्च अकच्छोऽवस्त्र एव च ।।**

**नग्नः काषायवासाः स्यान्नग्नश्चार्द्रपटः स्मृतः ।**
**नग्नो द्विगुणवस्त्रः स्यान्नग्नो रक्तपटः स्मृतः ।**
**नग्नस्तु स्निग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा ।।**

ततः कर्ता ऊर्ध्वपुण्ड्रं कुर्यात् ।

**जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।**
**तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुण्ड्रं विना कृतम् ।।** इति हेमाद्रावुक्तेः

**यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च ।**
**वृथा भवति विप्रेन्द्र ऊर्ध्वपुण्ड्रं विना कृतम् ।।** इति बृहन्नारदीयात्
**ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि ।।**

यत्तु देवलः-

ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ।।

तत्तु गन्धेन त्रिपुण्ड्रविषयम् ।

प्राक्पिण्डदानाद्गन्धाद्यैः नालङ्कुर्यात्स्वविग्रहम् ।। इत्याश्वलायनोक्तेः ।

पुण्ड्रं वर्तुलं नेत्यपरार्के मदनरत्ने च-

ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् ।
निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम् ।। इति वृद्धपराशरोक्तेः ।

अथ श्राद्धारम्भकालः । गौतमः-

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ।।

रौहिणः नवमो मुहूर्तः, एतदेकोद्दिष्टे, पार्वणे तूक्तम् ।

ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ।।

स्मृत्यन्तरे-

शस्तं स्यात्कुतपे श्राद्धमासायमथवा यदि ।
रात्रावपि च तत्कुर्यान्मृताहं नैव लङ्घयेत् ।।

होमकालावधिश्राद्धं रात्रावपि च शस्यते ।
न कदापि तदूर्ध्वं स्यादुपवासो विधीयते ।।

उपवासविधिः पित्रोरुक्तः स्यात्प्रतिवार्षिके ।
नैव दर्शादिकं श्राद्धे रात्रौ भवतु वा न वा ।। इति

तथा

मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ।
तस्मादनन्त[१]फलदः तत्रारम्भो विशिष्यते ।।

---

१ बलदः इति निर्णयसिन्धुः ।

अथ श्राद्धपरिभाषा, कात्यायनः–

दक्षिणं पातयेज्जानुं देवान्परिचरन् सदा ।
पातयेदितरत् जानु [१]पितॄन् परिचरन् सदा ।
अन्यत्र दक्षिणं जानुं प्राग्वोदग्वा प्रदक्षिणम् ॥
यज्ञोपवीती स्वाहेति दैवं कुर्याद्यवैः सदा ।
प्राचीनावीतिना पित्र्यं सव्यं जान्वाच्य भूतले ॥
आग्नेयास्येन कर्तव्यमप्रदक्षिणतस्तिलैः ।
[२]देवार्चा दक्षिणाङ्गादिः पादजान्वंसमूर्धसु ॥
शिरोऽसजानुपादेषु वामाङ्गादिषु पैतृके ॥

बौधायनः–

प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा ॥

पृथ्वीचन्द्रोदये–

आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः ।
पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि ।
अक्षय्यासनयोः पाद्ये गोत्रं नाम प्रकाशयेत् ॥

तत्रैव ।

क्षणे च पिण्डदाने च गन्धधूपाक्षये तथा ।
सङ्कल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ।
अन्नार्घ्यदानाद्यन्तेषु गोत्रं नाम च कीर्तयेत् ॥

मात्स्ये–

सम्बन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च ।
पश्चाद्रूपं विजानीयात् क्रम एवं सनातनः ॥

---

१ पिण्डान् परिचरन्नपि ॥ इति गोभिलस्मृतिः ॥

२ देवार्चा दक्षिणादि स्यात्पादजान्वसमूर्धनि ।
शिरोंसजानुपादेषु वामाङ्गादिषु पैतृके ॥ इति लघ्वाश्वलायनस्मृतिः(२३.२७)

**गोत्राज्ञाने हेमाद्रि:-**

**गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ।**
**यस्मादाह श्रुतिः सर्वाः प्रजाः कश्यपसम्भवाः ।।**

नामोच्चारणे विशेषमाह । बौधायनः-

**शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।**
**गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ।।**

**पित्रादिनामाज्ञाने तु कारिका-**

**नामानि चेन्न जानीयात् ततेत्यादि वदेत्क्रमात् ।।**

**आश्वलायनसूत्रमपि-**

**यदि नामान्यविद्वान् ततपितामहप्रपितामह इति ब्रूयात् ।**

स्त्रीणां तु दान्तं नाम ज्ञेयम् । "दान्तं नाम स्त्रीणाम्" इति पृथ्वीचन्द्रोदये गोभिलोक्तेः । केचित् देवीशब्दान्तमाहुः अन्ये तु देवीदा इति द्वयोः समुच्चयमाहुः।

**नारायणः-**

**विभक्तिभिस्तु यत्किञ्चिद्दीयते पितृदैवते ।**
**तत्सर्वं सफलं ज्ञेयं विपरीतं निरर्थकम् ।।**

**चन्द्रिकायाम्-**

**अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा ।**
**अन्नदाने चतुर्थी स्यात् शेषाः सम्बुद्धयः स्मृताः ।।**

**अर्घ्यावनेजनं पिण्डमन्नं प्रत्यवनेजनम् ।**
**सम्बुद्धिं तत्र कुर्वीत शेषे षष्ठी विधीयते ।।** इति

**अग्नौ करणमर्घ्यश्च विकिरावाहनं स्वधा ।**
**पिण्डयुक्ते प्रकुर्वीत पिण्डहीने तु वर्जयेत् ।।**

अनुपनीतस्त्र्यादेस्तु उत्तरीयेणैव सव्यापसव्ये ज्ञेये । तस्योपवीतस्थानीयत्वात् ।

**अपसव्यक्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ।।** इति ब्राह्मात्

अथ श्राद्धपरिभाषा, कात्यायनः–

दक्षिणं पातयेज्जानुं देवान्परिचरन् सदा ।
पातयेदितरत् जानु [१]पितॄन् परिचरन् सदा ।

अन्यत्र दक्षिणं जानुं प्राग्वोदग्वा प्रदक्षिणम् ।।
यज्ञोपवीती स्वाहेति दैवं कुर्याद्यवैः सदा ।

प्राचीनावीतिना पित्र्यं सव्यं जान्वाच्य भूतले ।।
आग्नेयास्येन कर्तव्यमप्रदक्षिणतस्तिलैः ।

[२]देवार्चा दक्षिणाङ्गादिः पादजान्वंसमूर्धसु ।।
शिरोंऽसजानुपादेषु वामाङ्गादिषु पैतृके ।।

बौधायनः–

प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणास्तथा ।।

पृथ्वीचन्द्रोदये–

आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः ।
पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि ।
अक्षय्यासनयोः पाद्ये गोत्रं नाम प्रकाशयेत् ।।

तत्रैव ।

क्षणे च पिण्डदाने च गन्धधूपाक्षये तथा ।
सङ्कल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ।
अन्नार्घ्यदानाद्यन्तेषु गोत्रं नाम च कीर्तयेत् ।।

मात्स्ये–

सम्बन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च ।
पश्चाद्रूपं विजानीयात् क्रम एवं सनातनः ।।

---

१ पिण्डान् परिचरन्नपि ।। इति गोभिलस्मृतिः ।।

२ देवार्चा दक्षिणादि स्यात्पादजान्वसमूर्धनि ।
शिरोंसजानुपादेषु वामाङ्गादिषु पैतृके ।। इति लघ्वाश्वलायनस्मृतिः(२३.२७)

**गोत्राज्ञाने हेमाद्रिः–**

**गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते ।**
**यस्मादाह श्रुतिः सर्वाः प्रजाः कश्यपसम्भवाः ।।**

नामोच्चारणे विशेषमाह । बौधायनः–

**शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।**
**गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ।।**

**पित्रादिनामाज्ञाने तु कारिका–**

**नामानि चेन्न जानीयात् ततेत्यादि वदेत्क्रमात् ।।**

**आश्वलायनसूत्रमपि–**

**यदि नामान्यविद्वान् ततपितामहप्रपितामह इति ब्रूयात् ।**

स्त्रीणां तु दान्तं नाम ज्ञेयम् । "दान्तं नाम स्त्रीणाम्" इति पृथ्वीचन्द्रोदये गोभिलोक्तेः । केचित् देवीशब्दान्तमाहुः अन्ये तु देवीदा इति द्वयोः समुच्चयमाहुः।

**नारायणः–**

**विभक्तिभिस्तु यत्किञ्चिद्दीयते पितृदैवते ।**
**तत्सर्वं सफलं ज्ञेयं विपरीतं निरर्थकम् ।।**

**चन्द्रिकायाम्–**

**अक्षय्यासनयोः षष्ठी द्वितीयावाहने तथा ।**
**अन्नदाने चतुर्थी स्यात् शेषाः सम्बुद्धयः स्मृताः ।।**

**अर्घ्यावनेजनं पिण्डमन्नं प्रत्यवनेजनम् ।**
**सम्बुद्धिं तत्र कुर्वीत शेषे षष्ठी विधीयते ।।** इति

**अग्नौ करणमर्घ्यञ्च विकिरावाहनं स्वधा ।**
**पिण्डयुक्ते प्रकुर्वीत पिण्डहीने तु वर्जयेत् ।।**

अनुपनीतस्त्र्यादेस्तु उत्तरीयेणैव सव्यापसव्ये ज्ञेये । तस्योपवीतस्थानीयत्वात् ।

**अपसव्यक्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ।।** इति ब्राह्मात्

जमदग्निः–

सूक्तस्तोत्रजपं त्यक्त्वा पिण्डाघ्राणञ्च दक्षिणाम् ।
आह्वानं स्वागतं चार्घ्यं विना च परिवेषणम् ।।

विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा ।
विप्रप्रदक्षिणां चैव स्वस्तिवाचनकं विना ।।
पितॄनुद्दिश्य कर्तव्यं प्राचीनावीतिना सदा ।।

संग्रहे–

आदौ विप्रांघ्रिशौचान्तेऽभ्यर्चने विकिरे कृते ।
पिण्डानुप्यार्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा ।।

आचामेत् श्राद्धकर्ता च स्थानेष्वेतेषु सप्तसु ।
आद्यन्तयोः द्विराचामेच्छेषेषु तु सकृत्सकृत् ।।

मंत्रैश्चैव स्वशाखोक्तैः कर्म कुर्याद्यथाविधि ।
अन्यथा कर्महानिः स्याद्बह्वृचानामयं विधिः ।।

कर्मणां याजुषादीनां स्वस्वशाखा न लभ्यते ।
ऋक्शाखाविहितं कर्म सम्मतं सर्वशाखिनाम् ।।

बह्वृचानां तु यत्कर्म यदि स्यादन्यशाखया ।
पुनश्चैवाऽपि तत्कर्म कुर्याद् बह्वृचशाखया ।।

तत्रैव– दानाध्ययनदेवार्चाजपहोमव्रतादिकान् ।
न कुर्याच्छ्राद्धदिवसे प्राग्विप्राणां विसर्जनात् ।।

एतत् नित्यवर्जमिति बोपदेवः, इदं विष्णुभिन्नदेवपरम् ।

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते ।।

पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः ।। इति स्कान्दात्

पितरः सर्वमनुष्या विष्णुनाशितमश्ननन्ति ।। इति श्रुतेः

यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डांस्तुलसीविमिश्रानाकल्पकोटिं पितरस्तु तृप्ताः ।।

इति ब्राह्मोक्तेश्चेति श्रीधरस्वामिनृसिंहपरिचर्यादयः ।

हेमाद्रौ–

पिण्डदाने तु ये दर्भाः पिण्डाघ्राणे विसर्जयेत् ।
[१]श्राद्धारम्भे च ये दर्भा उच्छिष्टान्ते विसर्जयेत् ।।
आचान्तः प्राक्कुशांस्त्यक्त्वा पाणावन्यांश्च धारयेत् ।।

मार्जनादौ च ये दर्भाः पिण्डोत्थाने विवर्जयेत् ।।

उत्तानादौ तु ये दर्भाः दक्षिणान्ते विसर्जयेत् ।
प्रार्थनादौ ये दर्भाः नमस्कारे विवर्जयेत् ।।

अथाह, बह्वृचकारिका–

अर्घ्यप्रदानमन्त्रे तु मात्रादिपदमावपेत् ।
शुन्धन्तामिति पित्रादौ मात्रादिपदमावपेत् ।।

तथा–

मातृश्राद्धेऽप्यनूहेन कुर्यात्पिण्डानुमन्त्रणम् ।
दशदानमुपस्थानं तद्वत्कार्यमिति स्थितिः ।।

प्रवाहणमनूहेन तद्वत्प्राशनमिष्यते ।
आयन्तु नस्तिलोऽसीति उशन्तस्त्वेति यानि तु ।।
अनूह्यः पितृशब्दोऽत्र पितृसामान्यवाचकः ।। इति

मार्कण्डेयः–

स्नातः स्नातान्समाहूतान्स्वागतेनार्चयेत्पृथक् ।।

---

१ श्राद्धारम्भे तु ये दर्भाः पादशौचे विसर्जयेत् ।
अर्चनादौ तु ये दर्भा उच्छिष्टान्ते विसर्जयेत् ।। इति निर्णयसिन्धौ पठ्यते ।।

नारदीये–

द्विजान्सह पठेत्सूक्तं प्रायश्चित्तार्थमेव हि ।
तत्तु सूक्तं शुचीवोऽग्निः शुचिव्रततमश्च हि ।।

उदग्नेः शुचय इति त्रयो मन्त्राः क्रमेण तु ।
केचिद्वेदविदोऽन्यानि सूक्तानि कथयन्ति हि ।।

पौरुषं चास्य वामस्य ममाग्ने त्वर्च इत्यथ ।
वैष्णवं वारुणं सौम्यं पावमान्यमथापि वा ।।

ऋग्भिरेताभिरेवं हि जलं पात्रेऽभिमन्त्रयेत् ।
श्राद्धोपयोगिकं द्रव्यमपक्वं पक्वमेव च ।।

सर्वं चैव स्मरन्विष्णुं जलेन प्रोक्षयेत्यहम् ।
निमन्त्रितेषु विप्रेषु मिलितेषु द्विजोत्तमाः ।।

प्रायश्चित्तविशुद्धात्मा तेभ्योऽनुज्ञां प्रगृह्य च ।
दद्याद्वै ब्रह्मदण्डार्थं हिरण्यं कुशमेव वा ।।

स्मृत्यन्तरे–

तिथिवारादिकं स्मृत्वा सङ्कल्प्य च यथाविधि ।
प्राचीनावीतिना कार्यं सर्वं सङ्कल्पनादिकम् ।।

[१]तस्य सम्बन्धकं ब्रूयान्नामगोत्रतिलान्वितम् ।
वस्वादिरूपतां चापि स्वपितॄणामनुक्रमात् ।
श्राद्धार्थं [२]समुपज्ञातो विप्रान् भूयो निमन्त्रयेत् ।।

तद्विधिमाह शौनकः–

गृहीत्वाऽमुकसंज्ञस्यामुकगोत्रस्य चामुके ।
श्राद्धे तु वैश्वदेवार्थं करणीयः क्षणस्त्वया ।।

---

१ "सम्बन्धं प्रथमं ब्रूयान्नामगोत्रे तथैव च" इति निर्णयसिन्धुः ।
२ "समनुप्राप्तान्" इति निर्णयसिन्धुः ।

इत्येवं श्राद्धकृद् ब्रूयादों तथेति वदेत्तु सः ।
श्राद्धस्य कर्ता स ब्रूयात्तं प्राप्नोतु भवानिति ।।
स वदेत्प्राप्नुवानीति इतरस्तं प्रति द्विजः ।

देवौ पार्वणे पुरूरवार्द्रवौ वाच्यौ । ''पित्रादेरप्यनेनैव वृणीत विधिना द्विजान्'' । ततः कर्ता बह्वृचोऽनाहिताग्निः पिण्डपितृयज्ञं परिस्तरणादीध्माधानान्तं कुर्यात् । तदुक्तं कारिकायाम्-

कृत्वेध्माधानपर्यन्तं पितृयज्ञनिमन्त्रितान् ।
ध्यायन् ममैते पितर इति तानुपवेशयेत् ।।

शम्भुः-

सम्मार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डले ।
उदक्प्लवमुदीच्यां स्याद्दक्षिणं दक्षिणाप्लवम् ।।

संग्रहे-

प्रादेशमात्रं देवानां चतुरस्रं तु मण्डलम् ।
वितस्तिमात्रं पित्र्ये तु मण्डलं वर्तुलं भवेत् ।।

यज्ञोपवीती देवार्थं पित्र्यर्थं चापसव्यतः ।
अन्तरं तु प्रकुर्वीत तयोर्मध्ये षडङ्गुलम् ।।

गोमये विशेषमाह भृगुः-

अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः ।
आर्ताया नवसूताया न गोर्गोमयमाहरेत् ।।

व्याघ्रः-

उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत्कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेत्कुशान् ।।

ततो देवपितॄणां हि पादान् प्रक्षालयेत्क्रमात् ।
पादप्रक्षलनं प्रोक्तमासीनस्यैव सर्वदा ।।

श्राद्धे यज्ञे विवाहादौ दीक्षायामागते गुरौ ।
तिष्ठतः क्षालयेद्यस्तु निराशाः पितरो गताः ।।

स्मृत्यन्तरे–

पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजान् ।
तिष्ठतः क्षालनं कुर्यान्निराशाः पितरो गताः ।।

मात्स्ये–

विप्राणां क्षालयेत्पादानभिवन्द्य पुनः पुनः ।।

सायणीये–

दिवा वा यदि वा रात्रौ न कुर्यात् प्राङ्मुखः शुचिः ।
प्रत्यङ्मुखः स्थितः कुर्याद्विप्रं पादाभिषेचनम् ।।

व्यासः–

विप्राणां क्षालयेत्पादान् दैवे चैव पुरोमुखः ।
पितॄणां क्षालयेत्पादान् तथा प्रत्यङ्मुखः शुचिः ।।

भविष्ये–

प्रक्षालयेद्विप्रपादान् शन्नो देवीरिति ह्यृचा ।।

वृद्धवसिष्ठः–

न कुशग्रन्थिहस्तस्तु पाद्यं दद्याद्विचक्षणः ।।

संग्रहे–

ततः प्रक्षालयेत्पादौ भार्यास्त्रावितवारिणा ।।

तथा

श्राद्धकाले यदा पत्नी वामे नीरप्रदा भवेत् ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ।।

तत्रैव–

मण्डलादुत्तरे देशे दद्यादाचमनीयकम् ।।

तत्रैव–

विधाय क्षालनं तेषां द्विराचमनमिष्यते ।
स्वयं चापि द्विराचामेद्विधिज्ञः श्रद्धयान्वितः ।।

नारदीये–

यत्राचमनवारीणि पादप्रक्षालनोदकैः ।
सङ्गच्छन्ते बुधाः श्राद्धमासुरं तत्प्रचक्षते ।।

स्मृत्यन्तरे तु–

ईशान्येऽथाचमेत्कर्ता देवाः प्राच्यामथोत्तरे ।
पितरोऽथ पवित्राणि स्वस्वस्थाने हि सन्त्यजेत् ।। इति उक्तम् ।

व्यासः–

सव्येनैवासनं धृत्वा दक्षिणे दक्षिणं करम् ।
व्याहृतीभिः समस्ताभिरासनेषूपवेशयेत् ।।

समाध्वमिति चैवोक्त्वा दक्षिणं जानु संस्पृशन् ।
आस्यतामिति तान् ब्रुयादासनं संस्पृशन्नपि ।।

तत्रासनानि यमः–

आसनं कुतपं दद्यादितरद्वा पवित्रकम् ।।

संग्रहे–

क्षौमं दुकूलं नैपालमाविकं दारुजं तथा ।
तार्णं पार्णं बृसीं चैव विष्टरादि च विन्यसेत् ।।

अग्निदग्धान्यासनानि भग्नानि च विवर्जयेत् ।
अयःशङ्कुमयं पीठं प्रदेयं नोपवेशने ।।

दारुजेऽपि विशेषः । पुलस्त्यः–

श्रीपर्णी वारुणी क्षीरी जम्बुकाम्रकदम्बकम् ।
सप्तमं बाकुलं पीठं पितॄणां दत्तमक्षयम् ।।

याज्ञवल्क्यः– (१.२२८)

द्वौ दैवे प्राक् त्रयः पित्र्य उदगेकैकमेव च ।।

छागलेयः–

पश्चाद्भागादुपक्रम्य प्राच्यां पंक्तिर्यथा भवेत् ।
दक्षिणा संस्थिता ह्येषा पितॄणां श्राद्धकर्मणि ।।

आचार्यः

प्राणायामत्रयं कृत्वा गायत्रीस्मरणं तथा ।
श्राद्धं कर्तास्मीति वदेद्विप्रैर्वाच्यं कुरुष्वथ ।।

ब्राह्मे–

ततस्तिलान् गृहे तस्मिन्विकिरेच्चाप्रदक्षिणम् ।
श्रद्धया परया युक्तो जपेदपहता इति ।।

स्मृत्यर्थसारे–

अपहता इति तिलान् विकीर्य उदीरितामित्यृचा प्रोक्षयेत् ।।

ब्रह्माण्डे–

[१]श्राद्धकाले गयां ध्यायेत् ध्यात्वा देवं [२]जनार्दनम् ।
वस्वादींश्च पितॄन् ध्यात्वा ततः श्राद्धं प्रवर्तयेत् ।।

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ।।

आदिमध्यावसानेषु त्रिरावृत्तं जपेद्बुधः ।
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ।।

वसिष्ठः शुद्धवतीभिः कूष्माण्डीभिः पावमानीभिश्च पाकादि प्रोक्षयेदित्याह ।।

## अथ देवार्चा

तत्र प्रत्युपचारं आद्यन्तयोरपो दद्यादित्युक्तं वृत्तौ स्मृत्यर्थसारे च ।

ब्राह्मे–

आसनेष्वासनं दद्याद्वामे वा दक्षिणेऽपि वा ।
पितृकर्मणि वामे च दैवे दद्यात्तु दक्षिणे ।।

प्रचेताः–

आसनेष्वासनं दद्यान्न तु पाणौ कदाचन ।।

---

१ श्राद्धभूमौ गयां ध्यात्वा इति निर्णयसिन्धुः ।। २ गदाधरम्

गालवः–

दर्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणे करे ।
दैवे क्षणः क्रियतां तु निरङ्गुष्ठं करं ततः ।।

ॐ तथेति द्विजा ब्रुयुस्ते प्राप्नोतु भवानिति ।
कर्ता ब्रूयात्ततो विप्रः प्राप्नुवानीति वै वदेत् ।।

बृहन्नारदीये–

यवैर्दर्भैश्च विश्वेषां देवानामिदमासनम् ।
दत्वेति भूयो दद्याद्वै दैवे क्षण इति क्षणम् ।।

ततोऽर्घ्यं प्रकल्पयेदिति भान्वादयः–

देवेभ्योऽपि पृथग्दद्यादिहार्घ्यं श्रुतिचोदनात् ।। इति शौनकोक्तेश्च ।

अथार्घ्यपात्रम्, प्रजापतिः–

सौवर्णं राजतं ताम्रं खाड्गं मणिमयं तथा ।
याज्ञियं चमसं वापि अर्घ्यार्थं पूरयेद्बुधः ।।

पाद्मे–

पात्रं वनस्पतिमयं तथा पर्णमयं पुनः ।
जलजं वापि कुर्वीत तथा सागरसम्भवम् ।।

वृद्धमनुः–

मृण्मयं दारुजं पात्रमयःपात्रं तु यद्भवेत् ।
राजतं दैविके कार्ये शिलापात्रं तु वर्जयेत् ।।

हारीतः–

दत्तमक्षयतां याति खड्गेनार्घ्यं तु यत्कृतम् ।।

तत्रैव–

अष्टाङ्गुलं भवेत्पात्रं पितृणां राजतं शुभम् ।
दशाङ्गुलं तु देवानां सौवर्णं शक्तितः कृतम् ।।

स्थापयेदर्घ्यपात्रे द्वे न्युब्जे तत्र कुशोपरि ।
द्वे द्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत् ।।

अत्र विप्रैकत्वचतुष्ट्वादावपि अर्घ्यपात्रे द्वे एव । ''त्रीणि पैतृकपात्राणि द्वे पात्रे वैश्वदैविके'' इति बृहत्पराशरोक्तेः ।

**वसिष्ठः-**

**तूष्णीं प्रोक्ष्याम्भसा पात्रे कुर्यादूर्ध्वबिले ततः ।**
**पूरयेत्पात्रयुग्मं तु कृत्वोपरि पवित्रके ।।**

वृद्धपराशरः-

**पात्रद्वयमथार्घ्यार्थं तैजसं चैकवस्तुनः ।**
**प्राङ्मुखोऽमरतीर्थेन शंनो देव्योदकं क्षिपेत् ।।**

**परिशिष्टे-**

**यवोऽसि धान्यराजो वा वारुणो मधुसंयुतः ।**
**निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम् ।।**

यमः-

**यवहस्तस्ततो देवान् विज्ञाप्यावाहनं प्रति ।**
**आवाहयेत्यनुज्ञातो विश्वे देवास इत्यृचा ।।**

वृद्धपराशरः-

**ततः सव्यकरं न्यस्य विप्रदक्षिणजानुनि ।**
**देवानावाहयिष्येऽहमिति वाचमुदीरयेत् ।।**

**आवाहयेदनुज्ञातो विश्वे देवास आगत ।**
**विश्वे देवाः शृणुतेममिति मन्त्रद्वयं पठेत् ।।**

श्राद्धविशेषे विश्वेदेवनामाज्ञाने बृहस्पतिः-

**उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।**
**अयमुच्चारणीयस्तैर्मन्त्रः श्रद्धासमन्वितैः ।।**

**आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।**
**ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ।।**

इदं चावाहनार्घ्यपात्रासादनात्पूर्वं कातीयैः कार्यम् ।

**सयवं पुष्पमादाय चरणादिशिरोऽन्तकम् ।**
**अर्चयेत्यर्चनं कुर्यादन्तरे चोदकं तथा ।।**

पित्र्ये तु मूर्धादिपादान्तम् ।

**पादप्रभृति मूर्धान्तं दैविके पूजनं भवेत् ।**
**शिरःप्रभृति पादान्तं नमो व इति पैतृके ।** इति प्रचेताः

**यमः–**

**तिष्ठन् कृताञ्जलिर्भूत्वा पठेन्मन्त्रौ समाहितः ।**
**विश्वेदेवाः शृणुत इत्यागच्छन्त्वपरं ततः ।।**

**जातूकर्ण्यः–**

**ततोऽर्घ्यपात्रसम्पत्तिं वाचयित्वा द्विजोत्तमान् ।**
**तदग्रे चार्घ्यपात्रं तु स्वाहार्घ्या इति विन्यसेत् ।।**

**दत्वा हस्ते पवित्रं च कृत्वा पूजां च पादतः ।**
**या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ।।**

**संग्रहे–**

**विश्वेदेवा इदं वोऽर्घ्यमिति दानं समादिशेत् ।**

तदन्ते स्वाहा नम इति वाच्यम् ।

**या दिव्या इति मन्त्रेण स्वाहाकारनमोऽन्तकम् ।।** इति नागरखंडात् ।

**गभस्तिः–**

**अर्घ्यं पिण्डप्रदानञ्च स्वस्त्यक्षय्ये तथैव च ।**
**गन्धपुष्पादिकं सर्वं हस्तेनैव तु दापयेत् ।।**

प्रतिविप्रं या दिव्येत्यावृत्तिः । बह्वृचानां त्वनेन दत्तार्घ्यानुमन्त्रणम् ।

ततः पात्रं दक्षिणे ''देवेभ्यः स्थानमसि'' इति न्युब्जमुत्तानं वा कार्यमिति गारुडे उक्तम् । एतदापस्तम्बानां नियतम् । अन्येषां न ।

विष्णुधर्मे–

गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः ।
अर्चयेद् ब्राह्मणान् शक्त्या श्रद्दधानः समाहितः ।।

व्यासः–

अपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।
तथा– पादशौचं गन्धदानं न कुर्याद्दर्भपाणिकः ।।

कालिकायां स्मृतिः–

गन्धद्वारेति वै गन्धमायने ते च पुष्पकम् ।
धूरसीत्यमुना धूपमुद्दीप्यस्वेति दीपकम् ।।

युवं वस्त्राणि मन्त्रेण वस्त्रं दद्यात्प्रयत्नतः ।
आसने स्वासनं ब्रूयादर्घ्ये स्वर्घ्यं द्विजोत्तमः ।।

सुगन्धाश्च सुपुष्पाणि सुमाल्यानि सुधूपकः ।
सुज्योतिश्चैव दीपे तु स्वाच्छादनमिति क्रमः ।।

अत्र तुलस्यापि पूजा कार्या । प्रयोगपारिजाते पाद्मे

तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः ।
प्रयान्ति गरुडारूढास्तत्पदं चक्रपाणिनः ।। इति स्मृतिसारे

अगस्त्यं भृङ्गराजश्च तुलसी शतपत्रिका ।
चम्पकं तिलपुष्पश्च षडेते पितृवल्लभाः ।।

केतकीं करवीरश्च बकुलं कुन्दकं तथा ।
पाटलश्चैव जातीश्च श्राद्धे यत्नेन वर्जयेत् ।।

पिण्डेऽपि तुलसी ग्राह्या ।

मार्कण्डेये–

पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः ।
तर्पिताः पितरस्तैस्तु यावच्चन्द्रार्कमेदिनी ।।
चन्दनागरुकर्पूरकुङ्कुमानि प्रदापयेत् ।

आदित्यपुराणे–

पितॄन् सत्कृत्य वासोभिर्दद्याद्यज्ञोपवीतकम् ।
यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलम् ।।

नन्दिपुराणे–

अलङ्काराः प्रदातव्या यथाशक्ति हिरण्मयाः ।
केयूरहारकटकमुद्रिकाकुण्डलादयः ।।

हेमाद्रौ–

उपानच्छत्रवस्त्राणि भुक्तिपात्रं कमण्डलुम् ।
शयनासनयानानि दर्पणं व्यजनानि च ।।

अन्नं सुसंस्कृतं गन्धांस्ताम्बूलं दीपचामरे ।
पितृभ्यो यः प्रयच्छेत्तु विष्णुलोकं स गच्छति ।।

स्त्रीणां श्राद्धे तु सिन्दूरं दद्युश्चण्डातकानि च ।
निमन्त्रिताभ्यः स्त्रीभ्यो ये ते स्युः सौभाग्यसंयुताः ।।

स्त्रीश्राद्धेषु प्रदेयाः स्युरलङ्कारास्तु योषिताम् ।
मञ्जीरमेखलादामकर्णिकाकंकणादयः ।।

पराशरः–

वाचयेत्परिपूर्णत्वं वासो दत्वा विधानतः ।।

## अथ पितृपूजा

नारदीये–

देवैश्च समनुज्ञातो यजेत्पितृगणं तथा ।

तत्र पित्र्ये आसनाद्यशेषमर्चनकाण्डं वैश्वदैविकं ज्ञेयम् । विशेषस्तूच्यते । तत्रासने द्विगुणभुग्नाः कुशाः ।

बह्वृचकारिकायां–

[1]दर्भान् द्विगुणभुग्नांस्तु दत्वैषामासनेष्वथ ।

---

१ आश्वलायनगृह्यकारिकायां, दर्शश्राद्धप्रकरणे, त्रयोदशः श्लोकः ।

**अपो दत्वाथ दर्भेषु पात्राण्यासादयेत्क्रमात् ।।** आ.गृ.का१३

[१]**एकद्रव्येषु चाग्नेयीदिक्संस्थेषु ततः परम् ।**
**निषिच्यापो निमन्त्र्याथ शंनो देवीरभिष्टये ।।**

**आश्वलायनः-**

[२]त्रिषु पात्रेषु दर्भान्तर्हितेषु अपः प्रसिच्य ''शं नो देवीः'' इत्यनुमन्त्र्य तिलानावपति ।

**तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः ।**
**प्रत्नवद्भिः प्रत्तः स्वधया पितृनिमान् लोकान् प्रीणयाहि नः स्वधा नम ।** इति

**मनुः-**

**अन्नाभावे द्विजाभावे यद्येको ब्राह्मणो भवेत् ।**
**पात्राण्यासादयेत्त्रीणि नतु ब्राह्मणसंख्यया ।।**

**माधवीये-**

**अर्घ्ये पितृणां त्रीण्येव कुर्यात्पात्राणि धर्मवित् ।**
**एकस्मिन् वा बहुषु वा ब्राह्मणेषु यथाविधि ।।**

अत्रानुमन्त्रणं सकृत् । तिलोऽसीति प्रतिपात्रमावृत्तिः । पितृशब्दस्यानूहश्चेति वृत्तिकृत् । कारिकायाम्-

**अनुमन्त्रः सकृत्कार्यः तिलोऽसीत्यावपेत्तिलान् ।**
**आवृत्तिः प्रतिपात्रं स्यात् मन्त्रस्योहस्तु नेष्यते ।।**

दर्भश्च त्रिगुणं पवित्रम् ।

**त्रिस्रः तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे ।**
**एकोदिष्टे शलाकैकां निधायोदकमाहरेत् ।।** इति चतुर्विंशतिमतात् ।

१ एकद्रव्येषु चाग्नेयीदिक्संस्थेषु च तेष्वथ ।
निषिच्यापोऽनुमन्त्र्यर्चा शं नो देवीरभिष्टये ।। इति पाठः आश्वलायनगृह्यकारिकायां, दर्शश्राद्धप्रकरणे पञ्चदशः श्लोकः ।

२ तैजसाश्ममयमृण्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वप आसिच्य शन्नो देवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति । आ.गृ.सू.४.७.८

**विष्णुः–**

**दक्षिणाग्रदर्भेषु दक्षिणापवर्गचमसेषु पवित्रान्तर्हितेष्वप आसिञ्चेत् ।**

**कारिकायाम्–**

**गन्धपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ ।।**

**जातूकर्ण्यः–**

**ततोऽर्घ्यपात्रसम्पत्तिं वाचयित्वा द्विजोत्तमान् ।**
**तदग्रे चार्घ्यपात्राणि स्वधार्घ्या इति विन्यसेत् ।।**

ततस्तिलहस्तो विप्रसव्यजानौ दक्षिणकरं न्यस्यावाहनं पृच्छेत् । अत्र सम्बन्ध–गोत्रनाम्नां द्वितीयान्तत्वं प्रागुक्तम् । बैजवापगृह्ये ''तिष्ठन् पितॄनावाहयिष्यामी–त्यामन्त्र्यावाहयेत्'' इत्युक्तम् ।

**कौर्मे–**

**अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ।**
**आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः ।**
**आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ।।**

अत्र सव्यस्यापि प्रागुक्तेर्विकल्पः । अत्राद्यमन्त्रावृत्याऽस्मत्पितरं अमुकशर्माणं अमुकगोत्रं वसुरूपमावाहयामीत्याद्युक्त्वा मूर्धादिपादान्तं तिलान् विकीर्य ''आयन्तु न इति सकृत् जपेदिति विशेषः । ततः ''स्वधार्घ्या इत्युक्त्वा अर्घ्यं दद्यात्'' इत्युक्तं कारिकायाम् । ''स्वधार्घ्या इत्यपोऽर्घ्यास्ता उपवीती निवेदयेत्'' निवेदनात्प्राक् प्राचीनावीतमेवेत्यर्थः ।

**अन्या आपः प्रदातव्या विप्रपाणिष्वतःपरम् ।**
**अर्घ्यं सशेषमादाय दक्षिणेन तु पाणिना ।।**

**सव्यहस्तगृहीतेन निनयेत्पितृतीर्थतः ।**
**त्रिभिः पितरि दत्तेऽर्घ्यमिति पाणिष्वनुक्रमात् ।**
**दत्वा दत्वा निनीतास्ता या दिव्यार्चानुमन्त्रयेत् ।।**

अत्र पितुः स्थाने विप्रत्रयं चेदेकार्घ्यं विभज्य दद्यात्, त्रयाणां स्वधार्घ्या इति सकृत्प्रश्नः । एवं पैतामहादावपि । अन्यदाने अर्घ्यमंत्राश्च प्रतिविप्रमावर्तते ।

पित्रादित्रयाणामेकविप्रपक्षे त्रिभिः पात्रैः एकस्यैवार्घ्यं दद्यादिति वृत्तिः । यत्तु "या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्" इति, यच्च "तिलाम्बुना चापसव्यं दद्यादर्घ्यादिकं द्विजः" इति अपसव्येन दानप्रतिपादकं वाराहम्, यच्च व्यासः-

**गोत्रसम्बन्धनामानि पितॄणामनुकीर्तयन् ।**
**एकैकस्य तु विप्रस्य अर्घ्यपात्रं विनिक्षिपेत् ।।**

इति वचनं तद्वह्वृचातिरिक्तविषयम् । तदनन्तरं,

**पितृपात्रे प्रसिच्याघ्यं शेषं पात्रद्वये स्थितम् ।**
**अनक्ति पुत्रकामस्तैर्मुखमेकीकृतैर्जलैः ।।** इति कारिकायाम्

**तदनन्तरं कौर्मे-**

संस्रावांश्च ततस्सर्वा पात्रे कुर्यात्समाहितः ।
पितृभ्यः स्थानमसीति न्युब्जपात्रं निधापयेत् ।।

**कारिकायाम्**

**न्यग्बिलं पितृपात्रं स्यादासमाप्ति न चालयेत् ।**
**उत्तानं वा तृतीयेन पिहितं तन्न चालयेत् ।।**

**आश्वलायनः-**

**नोद्धरेत्प्रथमं पात्रं पितॄणामर्घ्यपातितम् ।**
**आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ।।**

**अन्यत्राऽपि-**

**पितृभ्यः स्थानमसीति न्युब्जमुत्तानमेव वा ।**
**तृतीयां पिहितं कुर्यादुत्तानो परिभाजनम् ।।**

**स्थापितं प्रथमं पात्रं स्थानान्नैव हि चालयेत् ।**
**जलसेचनपर्यन्तं पिण्डानां पुरतश्च हि ।।**

**यमस्तु -**

**पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत् ।**
**प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत् ।।** इत्याह

संस्रवानानीय तृतीयेनाच्छाद्य न्युब्जीकुर्यादिति तस्यार्थ इति केचित् ।

**अत्रिः–**

> **गन्धादिभिस्तदभ्यर्च्य तृतीयेनापिधापयेत् ।**
> **पितृभ्यः स्थानमसीति शुचौ देशेऽर्चितेऽर्चयेत् ॥**

अर्चनं न्युब्जीकृतेऽपि तुल्यम् । विप्रवामे इति हलायुधः । कर्तुर्वामे इति शूलपाणिः ।

> **उत्तानं विवृतं वापि पितृपात्रं न तद्भवेत् ।**

इत्युशनसोक्ते न्युब्जतैव साधु । मातामहादिसंस्रवानपि पितृपात्रे एव गृहित्वा प्रयाजवत्तन्त्रेण न्युब्जीकुर्यादिति शूलपाणिः । एकोद्दिष्टे तु ऊहेन न्युब्जेतेति श्रीदत्तः।

**यमोऽपि–**

> **स्पृष्टमुत्तानमन्यत्र नीतमुद्घाटितं तथा ।**
> **पात्रं दृष्ट्वा व्रजन्त्याशु पितरस्ते शपन्ति च ॥**

**ततो वैजवापः**

> **तस्योपरि कुशान् दत्वा प्रदद्याद्देवपूर्वकम् ।**
> **गन्धपुष्पाणि धूपञ्च दीपं वस्त्रोपवीतके ॥**

**कारिकापि–**

> **प्राचीनावीत्यथेदानीं गन्धमाल्यं सधूपकम् ।**
> **दीपं वस्त्रं यथाशक्ति ब्राह्मणेभ्यो ददात्यथ ॥**

अत्र सम्बुद्ध्या विभक्त्या गन्धादि देयम् । तदनन्तरकृत्यमुक्तं कालिकापुराणे–

> **निर्वर्त्य ब्राह्मणादेशात् क्रियामेवं यथाविधि ।**
> **भाजनानि ततो दद्याद्धस्तशौचं पुनः क्रमात् ॥**

आदेशात्पात्राणि दद्यादित्यन्वयः । तेन तत्रापि प्रश्नानुज्ञे ज्ञेये ।

## अथ मण्डलम्

**बह्वृचपरिशिष्टे–**

दैवे चतुरस्रं पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण सयवान् सतिलांश्च दर्भान् दद्यादित्युक्तम् । अन्यत्रापि–

**चतुरस्रं मण्डलञ्च दैवे वृत्तं तु पैतृके ।**
**प्रमाणं मण्डलस्योक्तं पात्रमानं मुनीश्वरैः ॥**

**ब्राह्मे–**

**मण्डलानि च कार्याणि नैवारैश्चूर्णकैः शुभैः ।**
**गौरमृत्तिकया वापि भस्मना गोमयेन वा ॥**

**भृगुः–**

**भस्मना वारिणा वापि कारयेन्मण्डलं ततः ॥** इति

**मार्कण्डेयः–**

**यातुधानाः पिशाचाश्च क्रूरा ये चैव राक्षसाः ।**
**हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् ॥**

तत्र पात्राणि निदध्यात् ।

**अत्रिः–**

**भोजने हैमरौप्यणि दैवे पित्र्ये यथाक्रमम् ॥**

**स्मृतिसंग्रहे–**

**श्राद्धे पलाशपत्राणि मधुकौदुम्बराणि च ।**
**पारिकाकुटजप्लक्षक्रकचानि क्रमाज्जगुः ॥**

**कदलीचूतपनसजम्बूपुन्नागचम्पकाः ।**
**अलाभे मुख्यपात्राणां ग्राह्या स्युः पितृकर्मणि ॥** इति

एतेषु पलाशपत्राणां मुख्यत्वम् ।

**पलाशेभ्यो विना न स्युः पर्णपात्राणि भोजने ॥** इत्युक्तेः ।
कदलीपत्रमधमम् ।

**न जातीकुसुमानि दद्यान्न कदलीपत्रम् ।।** इति अङ्गिरोक्तेः ।

एवं पात्राण्यासाद्य कुशाद्यैः परिस्तरेदित्युक्तम् ।

**परिस्तरेत्कुशाद्यैस्तु पात्राणि पितृपूर्वकम् ।।**

भस्मनापि मर्यादां कृत्वा विप्रहस्तशोधनं कुर्यादित्युक्तम् ।

**मात्स्ये–**

**अकृत्वा भस्ममर्यादां यः कुर्यात्पाणिशोधनम् ।**
**आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ।।**

**अथाग्नौकरणम्, त्रिकाण्डमण्डनः–**

**पितृयज्ञे तु जुहुयाद्दक्षिणाग्नौ समाहितः ।**

पितृयज्ञे पिण्डपितृयज्ञे ।

**श्राद्धे त्वौपासनाग्नौ तु निरग्निर्लौकिकेऽनले ।**
**अनग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।**
**सन्धायाग्निं ततः कुर्याद्धोममग्निं समुत्सृजेत् ।।** इति

श्राद्धे गृह्याग्नावेवेति । लौकिकाग्न्यादिविधानं तैत्तिरीयादिविषयम् । बह्वृचस्य त्वनग्नेरपि पाणिहोम एव ।

**अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।।** इति मनूक्तेः

वृत्तावप्येवम् । आश्वलायनस्याहिताग्नेः पाणावेवेति वृत्तिः । अर्धाधानिनः गृह्ये एव व्यतिषङ्गेणेति प्रयोगपारिजाते ।

**आपस्तम्बानां तु**

**आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः ।**
**अनाहिताग्निश्चौपासनाग्न्यभावे द्विजेषु वा ।।**

इति मार्कण्डेयोक्तेः दक्षिणाग्नावेव । आहिताग्निः सर्वाधानी । अर्धाधानी तु गृह्य एवेति माधवादयः । एवं दर्शश्राद्ध एव ।

**पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।**

**पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ।।**

इति लौगाक्ष्यादिभिः क्रमोक्तेः विहृतदक्षिणाग्नेः सत्वात् । साग्निकः आहिताग्निः। आब्दिकादिषु तु सर्वाधानी पाणौ अर्धाधानी गृह्ये कुर्यादिति हेमाद्रिर्माधवश्चेति । अत्र वृत्तिकारमते पार्वणे आर्थिकस्यानङ्गस्य व्यतिषङ्गस्य वार्षिकादिष्वनतिदेशादर्धाधानिनोऽपि पाणिहोम एव । एवं मासिकादावपि ।

**षोडशे मासिके श्राद्धे सपिण्डीकरणे तथा ।**
**पाणावेव तु होतव्यमन्यत्राग्नौ तु हूयते ।।** इति बोपदेवोक्तेः

भाष्यकारमते तु पार्वणे व्यतिषङ्गोऽङ्गम् । तेन तन्मते अर्धाधानिन अग्नावेव होम इति । व्यतिषङ्गाभावेऽप्यग्नौ होमो भवतीति बोपदेवः । अनाहिताग्नेर्गृह्याग्निमतस्तु सर्वमते अग्नावेव । वार्षिकादौ वृत्तिमते व्यतिषङ्गो न । अन्यमते त्वस्ति । यथाचारमनुष्ठेयम् ।

**व्यतिषङ्गपक्षे कारिकायाम्–**

**पितृयज्ञचरोरन्नमुद्धृत्याभ्यज्य सर्पिषा ।**
**अग्नौ करिष्य इत्येतान् पृष्ट्वोक्तः क्रियतामिति ।**
**मेक्षणानुप्रहृत्यन्तं पितृयज्ञं करोत्यथ ।।**

व्यतिषङ्गपक्षेऽतिप्रणीतेऽयं होमोऽन्यथा मुख्ये । ''अतिप्रणीतेऽग्नाविध्ममुपसमाधाय'' इति बह्वृचपरिशिष्टात् । केचित्तु अतिप्रणीतस्य रक्षोनिबर्हणार्थत्वान्मुख्ये होमं वदन्ति । शौनकः–

**स्वाहाकारेण होमे तु भवेद्यज्ञोपवीतिमान् ।**
**तत्र प्रागग्नये हुत्वा पश्चात्सोमाय हूयते ।**
**अग्नौ यज्ञोपवीत्येव प्रक्षिपेन्मेक्षणं ततः ।।**

**छन्दोगपरिशिष्टे–**

**अग्नौ करणहोमश्च कर्तव्य उपवीतिना ।**
**अपसव्येन वा कार्यो दक्षिणाभिमुखेन च ।।**

कातीयानां त्वपसव्यमेव । सव्यं तु छन्दोगपरम् । ''छन्दोगा जुहुयुः सव्येनापसव्येन याजुषा'' इति वृद्धवसिष्ठोक्तेः ।

## अथ पाणिहोमः

आश्वलायनः– अभ्यनुज्ञायां पाणिष्वेवेति । पाणिष्विति बहुवचनात् सर्वविप्रपाणिषु होम इति वृत्तिः । एवं मातामहेऽपि ।

**शौनकोऽपि–**

**सर्वेषामुपविष्टानां विप्राणामथ पाणिषु ।**
**विभज्य जुहुयात्सर्वं सोमायेत्यादिमन्त्रतः ।।**

**यत्तु कात्यायनः–**

**पित्र्ये यः पंक्तिमूर्धन्यः तस्य पाणावनग्निकः ।**
**हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ।।**

इति बह्वृचातिरिक्तविषयम् ।

**यत्तु मात्स्ये–**

**अग्न्यभावे तु विप्रस्य पाणावथ जलेऽपि वा ।**
**अजकर्णेऽश्वकर्णे वा गोष्ठे वाथ शिलान्तिके ।।**

इति तत्तीर्थश्राद्धविषयम् ।

**तद्यदापां समीपे स्याछ्राद्धं ज्ञेयो विधिस्तदा ।।**

इति कात्यायनोक्तेः । यत्तु यमः–

**दैवविप्रकरेऽनग्निः कृत्वाग्नौ करणं द्विज ।।**

इति तदभार्यपरम् ।

**अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्वणम् ।**
**पित्र्यविप्रैरनुज्ञातो विश्वेदेवेषु हूयते ।।** इति कात्यायनोक्तेः

**वायवीये–**

**विधुरो दैविके कुर्याच्छेषं पित्र्ये निवेदयेत् ।**

देवविप्रानेकत्वे तु तत्रैव ।

**वैश्वदेवे यदैकस्मिन् भवेयुः व्याद्यो द्विजाः ।**
**तदैकपाणौ होतव्यं स्याद्विधिर्विहितस्तदा ॥**

सोऽप्याद्यो ज्ञेयः । [१]"प्रथमं वा नियम्येत..." इति न्यायात् । तेन मृतभार्यस्य दैवे होमः । अनुपनीतब्रह्मचार्यादेस्तु पित्र्ये । सभार्यनष्टाग्नेरपि पित्र्यकर इति पृथ्वीचन्द्रः । उपवीतिना दैवे होमः । प्राचीनावीतिना पित्र्ये । एवं साग्नेरपि विदेशादौ पाणिहोमः ।

**यत्तु बृहन्नारदीये–**

**अनग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।**
**भ्रातृभिः कारयेच्छ्राद्धं साग्निकैर्विधिवद् द्विजः ॥**

एतदुपरि संग्रहे इत्यारभ्य प्रायश्चितं न कर्म तत् इत्यन्तं प्रक्षिप्तम् । प्रकृतासङ्गतत्वात् ।

**संग्रहे–**

**यत्किंचिद्दीयते श्राद्धे देवतीर्थेन दैविकम् ।**
**पितृतीर्थेन पित्र्यर्थं सर्वत्रैवं विधिः स्मृतः ॥**

**पितॄणामासनं दद्याद्वामपार्श्वे तथा सुधीः ।**
**दक्षिणे चैव देवानां सर्वदा श्राद्धकर्मणि ॥**

**भृगुः–**

**स्वाहां देवहविर्दाने पैतृके तु स्वधां वदेत् ।**
**दैविके हव्यमित्युक्त्वा पैतृके कव्यमित्यपि ॥**

**बोधायनः–**

**देवानामृजवो दर्भा अच्छिन्नाग्राः समूलकाः ।**
**अमूलाः पितृकार्येषु दक्षिणाग्रा द्विभुग्नकाः ॥**

**युग्मत्वं दैविके कार्ये अयुग्मत्वं तु पैतृके ।**
**आसनाद्युपचारेषु सर्वत्रैष विधिः स्मृतः ॥**

---

१ "प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्" इति जैमिनिसूत्रम्. ११.१.४२ ॥

यत्किञ्चिद्दीयते श्राद्धे सयवं सतिलं भवेत् ।
दर्भैरद्भिस्तिलैर्दत्तमक्षय्यं परिकल्प्यते ।।

आपस्तम्बः—

दर्भैर्मन्त्रैस्तिलैर्नाम्ना रजतेन विना जलम् ।
दत्तं हरन्ति रक्षांसि तस्माद्दद्यान्न केवलम् ।।

संग्रहे—

मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ।।

तथा—

त्यजेत्क्रोधं प्रमादञ्च न श्राद्धे त्वरितो भवेत् ।
यदि वाग्यमलोपः स्याज्जपहोमार्चनादिषु ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ।।

तन्मन्त्रः, यस्य स्मृत्या चेति ।

आदिमध्यावसानेषु श्राद्धस्येदमुदाहृतम् ।।

नारायणः—

कर्मणां करणे मन्त्र उपस्थानाभिमन्त्रणे ।
श्राद्धकर्मण्युपांशुः स्यादेवं स्फुटमिति स्थितिः ।।

संग्रहे—

मन्त्रिते कर्म कर्तव्यं सर्वत्र करणत्वतः ।
मन्त्रार्थं चिन्तयन्नेव देवतां चानुसंस्मरेत् ।।

कर्म कुर्यात्प्रयत्नेन अन्यथा तु वृथा भवेत् ।
इदं करिष्य इत्युक्त्वा न येन विधिना कृतम् ।।

अज्ञानाद्वा प्रमादाद्वा तत्कर्म पुनराचरेत् ।
अङ्गलोपे तु नावृत्तिः प्रधाने तु भविष्यति ।।
तदङ्गाकरणे कुर्यात्प्रायश्चित्तं न कर्म तत् ।। इति

**क्षयाहदिवसे प्राप्ते स्वस्याग्निर्दूरगो यदि ।**
**तथैव भ्रातरः स्युश्चेल्लौकिकाग्नाविति स्थितिः ॥**

**औपासनाग्नौ दूरस्थो समीपे भ्रातरि स्थिते ।**
**यद्यग्नौ जुहुयाद्वापि पाणौ वा स हि पातकी ॥**

**औपसनाग्नौ दूरस्थे केचिदिच्छन्ति सत्तमाः ।**
**पाणावेतत्तु होतव्यमिति नैतत्समञ्जसम् ॥** इति

तत्तु वृद्धानादरादुपेक्ष्यम् ।

**यमः–**

**अग्नौकरणवत्तत्र होमो विप्रकरे भवेत् ।**
**पर्युक्ष्य दर्भानास्तीर्य यतो ह्यग्निसमो द्विजः ॥**

**स्मृतिरत्नावल्याम्–**

[१]**नानुज्ञा पाणिहोमे स्यान्न स्तः पर्यूहनोक्षणे ॥** इत्युक्तम्

माधवीये तु अनुज्ञादि सर्वं भवतीत्युक्तम् । पाणौ हुतं पात्रे निधाय विप्रं आचामेत् । न तु अश्नीयात् ।

**अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।**
**पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥**

**यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।**
**एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥** इति बह्वृचपरिशिष्टात् ।

**यमः–**

**पित्र्ये पाणिहुताच्छेषं पितृपात्रेषु वै क्षिपेत् ।**
**अग्नौकरणशेषं तु न दद्याद्वैश्वदेविके ॥ एतदग्निहोमेऽपि समम् ।**

**वृद्धवसिष्ठः–**

**पित्र्यविप्रकरे हुत्वा शेषं पात्रेषु निक्षिपेत् ।**
**पिण्डेभ्यः शेषयेत्किञ्चिन्न दद्याद्वैश्वदेविके ॥**

---

१ "नाग्ने तमद्यादिति च न स्यातामिध्ममेक्षणे" इत्युत्तरार्धः निर्णयसिन्धौ पठितः ।

**नष्टाग्निविधुरादेर्विशेषो बृहन्नारदीये–**

**नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते ।**
**सन्धायाग्निं ततो होमं कृत्वा तं विसृजेत्पुनः ॥**

अयाश्चेति तत्कालेऽग्निं सन्धाय हुत्वा त्यजेदित्यर्थः । एतदापस्तम्बानामेव । पाणिहोमस्तु छन्दोगादीनाम् । विश्वप्रकाशेऽपि–

**साग्निरौपासनेऽनग्निरग्नौ कुर्वीत लौकिके ।**
**पाणौ होमं प्रशंसन्ति नत्वापस्तम्बशाखिनाम् ॥**

**स्नातका विधुरा वा स्युर्यदि वा ब्रह्मचारिणः ।**
**अग्नौकरणहोमं तु कुर्युस्ते लौकिकेऽनले ॥**

**अथ परिवेषणम् ।**

तच्चोपवीत्येव आज्येन देवपूर्वं "आमासु पक्वम्" इति पात्राण्युपस्तीर्य कुर्यादिति हेमाद्रिः । भारते दानधर्मेऽपि–

**आज्याहुतिं विना नैव यत्किञ्चित्परिविष्यते ।**
**दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ॥**

**तत्रैव शौनकः**

**विधिना देवपूर्वं तु परिवेषणमाचरेत् ।**

**धर्मः–**

**फलस्यानन्तता प्रोक्ता स्वयञ्च परिवेषणे ॥**

**भविष्ये–**

**भार्यायाः श्राद्धकाले तु प्रशस्तं परिवेषणम् ॥**

**अन्यत्र–**

**पत्नी स्वयं वा पुत्रो वा शिष्यो वा परिवेषयेत् ॥**

**परिवेषणप्रकारस्तु–**

**अन्नं च पायसं भक्ष्यं घृतं सूपं तथैव च ।**
**क्रमेण च यथाशाकं श्राद्धेषु परिवेषयेत् ॥**

अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम् ।
शाकानां नियमो नास्ति भक्ष्यभोज्यादि वामतः ।।

ब्रह्माण्डे–

नापवित्रेण नैकेन हस्तेन न विनाकुशम् ।
नायसे नायसेनैव श्राद्धे तु परिवेषयेत् ।।

वसिष्ठः–

आयसेन तु पात्रेण यदन्नं सम्प्रदीयते ।
भोक्ता विष्ठासमं भुंक्ते दाता च नरकं व्रजेत् ।।

हारीतः–

सौवर्णराजताभ्यां च खड्गेनोदुम्बरेण च ।
दत्तमक्षय्यतां याति फल्गुपात्रेण वा पुनः ।।

कार्ष्णाजिनिः–

दर्व्या देयं घृतं चान्नं समस्तव्यञ्जनानि च ।
उदकञ्चैव पक्वान्नं नो दर्व्या तु कदाचन ।।

यमः–

पंक्त्यां विषमदातुश्च निष्कृतिर्नैव विद्यते ।।

पराशरः–

सर्वदा च तिला ग्राह्याः पितृकृत्ये विशेषतः ।
भोज्यपात्रे तिलान् दृष्ट्वा निराशाः पितरो गताः ।।

वृद्धशातातपः–

हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः ।
पितॄणां नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ।।

घृतपात्रे विशेषो ग्रन्थान्तरे–

ओदने परमान्ने च पात्रमासाद्य मुग्धधीः ।
घृतेन पूरयेत्पात्रं तद्घृतं रुधिरं भवेत् ।।

घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्रे इति मदनरत्ने ।

**संग्रहे–**

**हस्तदत्तं तु नाश्नीयाल्लवणव्यञ्जनादिकम् ।**
**अपक्वं तैलपक्वं च हस्तेनैव प्रदीयते ।।**

**परिवेषणानन्तरं कारिकायाम्–**

**अन्नेषु परिविष्टेषु हुतशेषं ददात्यथ ।**
**उद्दिश्य चान्नं विप्रेभ्यः पितृभ्यः श्रद्धयान्वितः ।।**

**पात्रालम्भनमुक्तं चतुर्विंशतिमते–**

**उत्तानं दक्षिणं सव्यं नीचं पात्राण्युपस्पृशेत् ।।**

**याज्ञवल्क्यः–**

**दत्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।**
**कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत् ।।**

**बौधायनः–**

विप्राङ्गुष्ठेनानखेनानुदिशति । ''पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षितमसि [१]मा मे क्षेष्ठा अमुत्रामुष्मिन् लोके इति ।

**अङ्गुष्ठविशेषमाह धौम्यः–**

**परिवृत्य न चाङ्गुष्ठं द्विजस्यान्ने निवेशयेत् ।**

**तथा–**

**उत्तानेन तु हस्तेन द्विजाङ्गुष्ठनिवेशनम् ।**
**यः करोति द्विजो मोहात्तद्वै रक्षांसि भुञ्जते ।।**

**यमः–**

**विष्णो हव्यञ्च कव्यञ्च ब्रूयाद्रक्षस्व च क्रमात् ।।**

दैवे पित्र्ये चेत्यर्थः ।

---

१ ''मा मे पितृणां क्षेष्ठाः'' इति निर्णयसिन्धुः ।

**अत्रिः–**

**सम्बन्धनामगोत्रणि इदमन्नं ततः स्वधा ।**
**पितृक्रमादुदीर्येति स्वसत्तां विनिवर्तयेत् ।**
**हस्तेनाभुक्तमन्नाद्यमिदमन्नमुदीरयेत् ।।**

अत्र ''अन्नदाने चर्तुर्थी स्यात्'' इत्यादिविशेषा ज्ञेयाः । अत्र [१]पूर्वोपक्रान्ते ''पुरूरवार्द्रवसंज्ञका विश्वेदेवा देवता इदमन्नं सपरिकरं हव्यं अयं ब्राह्मणस्त्वाहवनीयार्थे दत्तं दास्यमानं चातृप्तेः गयेयं भूः गदाधरो भोक्ता इदमन्नं सौवर्णपात्रस्थं अक्षयवटच्छायास्थं अमुकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नं अमृतरूपं परिविष्टं परिवेक्ष्य-माणं चातृप्तेः स्वाहा नमो न मम इति बह्वृच इति दैवे । एवं पित्र्ये अमुक-गोत्रवसुरूपादितत्तन्नाम ज्ञेयम् । ये चेह पितर इति पित्र्ये केचिज्जपन्ति । तत अच्छिद्रं वाचयेत् । प्रचेताः-

**आपोशनकरे विप्रे सङ्कल्पाच्छिद्रभाषणात् ।**
**निराशाः पितरो यान्ति देवैः सह न संशयः ।।**

अत एव बृहन्नारदीयेऽन्नत्यागमुक्त्वोक्तम् ।

**दत्तं हविश्च तत्कर्म विष्णवे वै समर्पयेत् ।।**

इति तच्च ब्रह्मार्पणम् ।

**धर्मप्रदीपे–**

**ततोऽन्नं पितृदेवेभ्यः सङ्कल्प्य च यथाविधि ।**
**दत्तं यद्दास्यमानश्च आतृप्तेर्न ममेति च ।।**

तथा– **श्राद्धीयान्नस्य सङ्कल्पो भूमावेव प्रदीयते ।**

प्रचेताः– **आपोशनं प्रदायाऽथ [२]सावित्रीमधुमज्जपः ।**

---

१ अत्र पूर्वोक्तमन्त्रान्ते इति निर्णयसिन्धुः ।

२ (आपोशनं प्रदायाऽथ) सावित्रीं त्रिर्जपेदथ ।
मधुवाता इति तृचं मध्वित्येकत्रिकं तथा ।।
मिताक्षरायां पारस्करः-
सङ्कल्प्य पितृदेवेभ्यः (सावित्री मधुमज्जपः)

श्राद्धं निवेद्यापोशनं जुषप्रैषोऽथ भोजनम् ।।
जुषप्रैषः यथासुखं जुषध्वमिति वाच्यम् ।

अत्रिः–

असङ्कल्पितमन्नाद्यं पाणिभ्यां यद्युपस्पृशेत् ।
अभोज्यं तद्भवेदन्नं पितृणां नोपतिष्ठते ।।

अन्नं दत्तं न गृह्णीयाद्यावत्तोयं न सम्पिबेत् ।
आपोशनं वामभागे सुरापानसमं भवेत् ।
दक्षभागे तु यः कुर्यात्सोमपानफलं लभेत् ।।

तथा–

पुनरापूर्यापोशनं सुरापानसमं भवेत् ।।

अत्रिः–

दत्ते वाप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम् ।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतैः ।।

माधवीये यमः–

भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः कामं तमपि भोजयेत् ।
ततस्ते ब्राह्मणाः सर्वे भुञ्जीरन् वाग्यता द्विजाः ।।

प्रचेताः–

भुञ्जानेषु तु विप्रेषु ऋग्यजुःसामलक्षणम् ।
जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः ।
यजूंषि चैव [१]सामानि राक्षोघ्नी ऋच एव च ।।

सौरपुराणे–

ऐन्द्रं च पौरुषं सूक्तं श्रावयेद्ब्राह्मणास्ततः ।।

---

आपोशनं प्रदायाऽथ सावित्रीमधुमज्जपः इति पादयोर्मध्ये इदमधिकं निर्णयसिन्धौ दृश्यते ।

१ रुद्रश्च इति निर्णयसिंधुपाठः ।

ब्राह्मे च–

जपेच्च पौरुषं सूक्तं नाचिकेतत्रयं तथा ।
त्रिमधु त्रिसुपर्णं च पावमानीर्यजूंषि च ।।

यमः–

स्वाध्यायं श्रावयेत्सम्यग्धर्मशास्त्राणि चैव हि ।।

पाद्मे–

अभावे सर्वविद्यानां गायत्रीजपमाचरेत् ।।

कारिकायामपि–

भुञ्जानान् श्रावयेद्विप्रान् राक्षोघ्नान् पितृलिङ्गकान् ।
पुराणानि पवित्राणि ऋषिगीतां पितृस्तुतिम् ।।

तथा–

यः श्राद्धं कुरुते मूढः अभिश्रवणवर्जितः ।
तदन्नं राक्षसान् गच्छेत् तद्दत्तं निष्फलं भवेत् ।।

तस्यापवादः–

तीर्थश्राद्धे गयाश्राद्धे आमश्राद्धे तथैव च ।
एकोद्दिष्टे सपिण्डे च प्रीतिश्राद्धानुमासिके ।
सांवत्सरविमोके च न जपेत्पितृसूक्तकम् ।।

अत्रिः– हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वापि वदेद्गुणान् ।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत् ।।

प्रौढपादो बहिःकच्छो बहिर्जानुकरोऽपि वा ।
अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः ।।

पीतावशिष्टतोयानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्धात्पुनः खादेन्मोदकानि फलानि च ।।

मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा ।
इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम् ।।

**जाबालिः–**

**इष्टमुष्णं हविष्यञ्च दद्यादन्नं शनैः शनैः ।।**

**वृद्धशातातपः–**

**अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।**
**न याचते द्विजो मूढः स भवेत्पितृघातकः ।।**

**प्रचेताः–**

**न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।**
**न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ।।**

**श्राद्धपंक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।**
**तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ।।**

**भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथञ्चन ।**
**अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ।।**

विप्रवमने तु । दक्षः-

**निमन्त्रितस्य यच्छ्राद्धे भोजने मुखनिःसृते ।**
**तदैव होमं कुर्वीत स्वाग्नौ विप्रः समाहितः ।।**
**प्राणादिपञ्चभिर्मन्त्रैर्यावद् द्वात्रिंशसंख्यया ।।**

**ऋग्विधाने तु–**

**इन्द्राय सोमसूक्तेन श्राद्धविघ्नो यदा भवेत् ।**
**अग्न्यादिभिर्भोजनेन श्राद्धं सम्पूर्णमेव हि ।।** इत्युक्तम्

तत्र अग्न्यादिभिरित्यनेन लौकिकाग्निस्थापनचरुनिर्वापाद्याज्यभागान्ते नामगोत्र-पूर्वमग्नौ पितॄनावाह्य सम्पूज्यान्नत्यागं कृत्वा प्राणादिभिर्द्वात्रिंशदाहुतीर्हुनेदित्युक्तं भवति ।

**सर्वमन्नं समुद्धृत्य होमं कुर्याद्विधानतः ।**
**लौकिकाग्निं प्रतिष्ठाप्य अर्चयित्वा हुताशनम् ।**
**अन्नत्यागं प्रकुर्वीत ततोऽग्नौ जुहुयाच्चरुम् ।।** इत्युक्तेः

भोजनेन पुनःश्राद्धेन इत्यर्थः । तेन होमः पुनःश्राद्धं वेति पक्षद्वयमुक्तं भवति । सूक्तजपस्तु उभयानुमतः । श्राद्धे पिण्डदानमेव प्रधानमिति एकः पक्षः । ब्राह्मणभोजनमेवेति अपरः पक्ष इति । तत्र प्रथमपक्षे ।

**स्मृतिसंग्रहे–**

**प्राधान्यं पिण्डदानस्य भोजनस्य तदङ्गता ।**
**अतो भुक्तिक्रियाहानौ श्राद्धावृत्तिं न मन्वते ।।**

पिण्डदानोत्तरं वान्तौ होम एव नावृत्तिः । पिण्डदानात्प्राक् वान्तौ तद्दिन उपवासं कृत्वा परेद्युः पुनः श्राद्धं कुर्यादित्यर्थः ।

**तत्रैव–**

**श्राद्धपंक्तौ तु भुञ्जानो ब्राह्मणो वमते यदि ।**
**लौकिकाग्निं प्रतिष्ठाप्य अर्चयेच्च हुताशनम् ।।**

**तथा–**

**एक एव यदा विप्रो भोजने छर्दितो यदि ।**
**तदैवाग्निं समाधाय होमं कुर्याद्यथाविधि ।।**

**द्वितीयपक्षे ऋग्विधाने–**

**भोजनोपक्रमादूर्ध्वं प्रक्रमात्पूर्वतो यदि ।**
**श्राद्धविघ्ने पुनः कार्यं जपहोमौ न तृप्तिदौ ।।**

**स्मृतिसंग्रहे–**

**अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत् ।**
**पुनः पाकात्तु कर्तव्यं पिण्डदानं यथाविधि ।।**

पिण्डदानं श्राद्धम् ।

**प्रकृते पिण्डदाने तु पिता यदि वमेत्तदा ।**
**पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधि ।।** इति तत्रैवोक्तेः

पुनःश्राद्धं परेद्युरिति ज्ञातव्यम् ।

**वमने वा विरेके वा तद्दिनं परिवर्जयेत् ।।** इत्युक्तेः

इदं तु मासिकाब्दिकादिविषयम् । दर्शादौ तु वान्तौ आमेन तदैव कार्यम् ।

**श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।**
**अमावस्यादिनियतं माससंवत्सरादृते ।।** इति मरीचिस्मृतेः

अत्रेदं तत्त्वम् । वैश्वदेविकस्य वमने होम एव नावृत्तिः । अङ्गत्वात् । तच्च रक्षार्थत्वात् । "इष्टिश्राद्धे क्रतूदक्षौ" इत्यादिस्मृतेश्च । तत्र जयान् जुहुयादितिवत् । पितामहादेरपि तथा । पितेत्युक्तेरिति केचित् । तस्यापि प्रधानत्वात् पितृवदिति तु युक्तम् । सपिण्डीकरणादौ तु वार्षिकवत् ।

**सपिण्डीकरणादीनि यानि श्राद्धानि षोडश ।**
**तत्र पिण्डप्रधानत्वं प्रेतत्वविनिवर्तकम् ।।** इति स्मृतेः

महैकोद्दिष्टादौ तु उभयप्राधान्यादावृत्तिरेव ।

**एक एव द्विजो भोज्यः पिण्डोऽप्येको विधीयते ।।** इति स्मृतेः

**वृद्धिश्राद्धे विकल्पेन पिण्डदानविवर्जितम् ।।** इति स्मृतेः

**भुक्तिक्रियायाः प्राधान्यं श्राद्धे सङ्कल्पसंज्ञिके ।**
**तत्रैव पित्र्यविप्रस्य तूपघाते पुनः क्रिया ।।**

इति संग्रहोक्तेश्च । मघादावप्येवम् । तीर्थमहालयादौ दर्शवदिति प्रतीयेत ।

अथ भोजनानन्तरम्, आश्वलायनः- "तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमी मदन्तेति च सम्पन्नं पृष्ट्वा यद्यदन्नमुपभुक्तं तत् स्थालीपाकेन हि पिण्डार्थमुद्धृत्य शेषं निवेदयेदभिमतेऽनुमते वा" इति । अत्र गायत्रीमध्विति ऋग्जपोऽपि ज्ञेयः ।

**तृप्तान् बुद्ध्वान्नमादाय सतिलं पूर्ववज्जपेत् ।।** इति प्रचेतसोक्तेः ।

**कारिकायाम्-**

**भोजनस्य तु पर्याप्तं देयं किञ्चित्ततोऽधिकम् ।**
**तृप्तेषु श्रावयेत्तिस्रो मधुवाता ऋतायते ।।**

**अक्षन्निति च तान् विप्रान् सम्पन्नमिति पृच्छति ।**
**तेऽपि सम्पन्नमित्येवं प्रतिब्रूयुस्ततः परम् ।।**

व्यासः-

तृप्ताः स्थेति तु पृष्टास्ते ब्रूयुः तृप्ताः स्म इत्यथ ॥

याज्ञवल्क्यः-

अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य वा ।
तदन्नं प्रकिरेद्भूमौ दद्यादापः सकृत्सकृत् ॥

देवलः-

ततः सर्वाशनं पात्रे गृहीत्वा विविधं बुधः ।
तेषामुच्छेषणस्थाने विकिरं भुवि निक्षिपेत् ॥

प्रचेताः-

सार्ववर्णिकमादाय ये अग्नीति [१]विनिक्षिपेत् ॥

स च कुशे कार्यः, मन्त्रः कातीयः-

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ इति

अन्ये तु-

असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥

इत्यग्निपुराणोक्तेन पित्र्येऽन्नं विकीर्य "ये अग्निदग्धाः" इत्युच्छिष्टपिण्डं कुशोपरि पृथक् दद्यादित्याहुः । इदं चाऽत्र विकिरदानं अन्यशाखिनाम् । आश्वलायनानां तु पिण्डान्त एव सूत्रकृतोक्तम् । कारिकायामपि-

यद्यद्भुक्तं ततः किञ्चिदन्नं पिण्डार्थमुद्धरेत् ।
पितृयज्ञचरोरन्नमुद्धृतं प्रक्षिपेदथ ॥

---

१ "भुवि क्षिपेत्" इति निर्णयसिन्धुः ।

अन्नप्रकिरणार्थश्च सर्वस्मादन्नमुद्धरेत् ।
ब्राह्मणेभ्यस्ततः शिष्टं सर्वमन्नं निवेदयेत् ।
तेऽपि स्वीकुर्युरिष्टं चेदनुजानन्ति वा पुनः ।।

शौनकोऽपि–

अन्नशेषैश्च किं कार्यमिति पृच्छेत्तु तांस्ततः ।
त इष्टैः सह भोक्तव्यमिति प्रत्युक्तिपूर्वकम् ।
प्रदद्युः सकलं तस्मै स्वीकुर्युर्वा यथारुचि ।।

कारिकायाम्–

पिण्डदानमनाचान्तेष्वाचान्तेष्वथवा [1]पुनः ।
अम्भोनिनयनाद्यन्तं पितृयज्ञं समापयेत् ।।

अन्नं प्रकिरणार्थाय तदानीय जलाप्लुतम् ।
आचान्तानां समीपे तु त्वग्रतः प्रकिरेद्भुवि ।।

ततः श्राद्धकारिकायाम्–

यजमानस्य दासादीनुद्दिश्य द्विजसत्तम ।
तस्मादन्नं त्यजेद्भूमौ वामभागेषु पैतृके ।।

ब्राह्मे–

ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत् ।

हस्तप्रक्षालनं गण्डूषमकृत्वा न कर्तव्यमित्याह मरीचिः–

हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ।।

व्यासः–

उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि शोधयेत् ।।

अथ पिण्डदानम्

तच्चार्चनोत्तरं, अग्नौकरणोत्तरं, भोजनोत्तरं, विकिरोत्तरं, स्वधावाचनोत्तरं,

१ ''भवेत्'' इति मुद्रिते आश्वलायनगृह्यकारिकापुस्तके पठितः ।

विसर्जनोत्तरं इति बहवः पक्षा हेमाद्रौ स्मृतिषूक्ताः । तेषां शाखाभेदेन व्यवस्था । भोजनोत्तरमिति बहवः ।

**आश्वलायनः–**

**भुक्तवत्स्वानाचान्तेषु पिण्डान्निदध्यात् ।।**

(आ.गृ.सू.४.८.१२) आचान्तेष्वेके ।। (आ.गृ.सू.४.८.१३) भुक्तवत्स्विति भोजनात्पूर्वं निषेधार्थम् । साग्निरतिप्रणीतसमीपे, अनग्निर्द्विजसमीपे ।

**जातूकर्ण्यः–**

**व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।**

प्रसारितभुजान्तरं व्यामः । अरत्निमात्रमुत्सृज्येति व्यासः ।

**देवलः–**

**ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य च ।**

**चन्द्रिकायाम्–**

**पिण्डनिर्वापणं कार्यं कुशाभावे विचक्षणैः ।**
**काशेषु राजदूर्वासु पवित्रे परमे हिते ।।**

**आश्वलायनः–**

स्फ्येन रेखामुल्लिखेत् ''अपहता असुरा रंक्षासि वेदिषदः'' इति तामभ्युक्ष्य सकृदाछिन्नैर्दर्भैरवस्तीर्य प्राचीनावीती रेखां त्रिरुदकेनोपनयेत् शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति तस्यां पिण्डान् निपृणीयात् पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेऽसौ ये च त्वामत्रानु इति ।

**पारस्करः–**

**कराभ्यामुल्लिखेत् स्फ्येन कुशैर्वापि महीं द्विजः ।**

बह्वृचानां करेणैव लेखा चाग्रेय्याभिमुखा इति वृत्तिः ।

देवलः– **आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पयेत् ।**
**तेष्वासीनेषु पात्रेण प्रयच्छेत्सतिलोदकम् ।।**

पराचीनेन निम्नपितृतीर्थेन ।

वायवीये–

मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान् निर्वपेद्बुधः ।
अग्नौकरणशेषेण पिण्डो न स्पृश्यते यदि ।
तद्दिने चोपवासश्च पुनःश्राद्धं परेऽहनि ।।

याज्ञवल्क्यः–

सर्वमन्त्रमुपादाय सतिलं दक्षिणामुखः ।
उच्छिष्टसन्निधौ पिण्डान् दद्याद्वै पितृयज्ञवत् ।।

स्मृतिसारे–

माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चैवाग्निपिण्डयोः ।
ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः ।। इति

स्मृत्यन्तरे च–

माषान् सर्वत्र वै दद्यात् पिण्डेऽग्नौ च विवर्जयेत् ।। इति

## अथ पिण्डप्रमाणम्

कपित्थमानं प्रत्यब्दे पिण्डं कुर्याद् द्विजोत्तमः ।
आर्द्रामलकमात्रांस्तु पिण्डान् कुर्वीत पार्वणे ।।

उच्छिष्टे मुष्टिमात्रं तु जम्बीरं प्रेतपिण्डके ।।

भट्टास्तु –

एकोद्दिष्टे सपिण्डे च कपित्थं तु विधीयते ।
नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ।।

तीर्थे दर्शे च सम्प्राप्ते कुक्कुटाण्डप्रमाणतः ।
महालये गयाश्राद्धे कुर्यादामलकोपमम् ।। इत्याहुः

आचार्यः–

यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः ।
यत्र चैको भवेत्पिण्डस्तत्र खर्जूरसन्निभः ।
प्रेतपिण्डस्तु दैर्घ्येण द्वादशाङ्गुल उच्यते ।। इति

**शाट्यायनिः–**

**असावेतत्त इत्युक्त्वा तदन्ते च स्वधा नमः ।**

असावित्यत्र सम्बन्धरूपगोत्रादिविशिष्टं पित्रादिनाम सम्बुद्ध्यन्तमुक्त्वा पुन-श्चतुर्थ्यन्तं तदन्ते अयं पिण्डः स्वधा नमः, न ममेति वदेदिति हेमाद्रिः । एवं माता-महेषु, मातृषु च । या कलिकायाम्,

**यावदेवोच्चरेन्मन्त्रं तावत्प्राणं निरोधयेत् ।**

बह्वृचानां दर्शे षट् पिण्डा इत्युक्तं प्राक् । येषां गृह्ये दर्शे मातृश्राद्धं पृथगुक्तं तेषां पितृभ्यः पश्चिमे मातृभ्यः, तत्पश्चिमे मातामहेभ्यः, पिण्डादि देयमिति साङ्ख्यायनः । अस्मिन् पक्षे तत्पश्चिमे मातामहीभ्योऽपि दद्यादिति हेमाद्रिः ।

"पूर्वासु पितृभ्यो दद्यादपरासु स्त्रीभ्यः" इति सूत्रात् । एवं तीर्थमहालयादौ "पित्रादिनवदैवत्यं तथा द्वादशदैवतम्" इत्यग्निपुराणाच्च मातॄणां पृथगुक्तम् । यत्र वा, "केचिदिच्छन्ति नारीणां पृथक् श्राद्धं महर्षयः" इति चतुर्विंशतिमतात् पुत्रादिस्त्रीणां च पृथगुक्तं, तत्रापि स्वस्वपतिपश्चिमे पिण्डदानं ज्ञेयम् । येषां न पृथक् तैः सपत्नीकाः पित्रादयो वाच्याः ।

**अन्वष्टकागयामातृश्राद्धं चैव मृतेऽहनि ।**
**एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवेत् ।।** इति शङ्खोक्तेः

**स्मृत्यन्तरे–**

**द्व्यङ्गुलान्तरमात्रेण पिण्डांश्च विनियोजयेत् ।**
**संयुक्तान् यदि दद्यात्तान् तदा नरकमाव्रजेत् ।।**

**अन्तरा पतिते पिण्डेऽप्यथवा द्विदले सति ।**
**पुनःश्राद्धं प्रकुर्वीत पुनःपाकेन तत्क्षणात् ।।** इति मनुः

**आचम्योदक्परावृत्य त्रिराचम्य शनैरसून् ।**
**षड् ऋतूंश्च नमस्कुर्यात् पितॄनेव च मन्त्रवत् ।**
**उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ।।**

**शौनकः–**

**अथैषामत्र पितर इत्याद्येनानुमन्त्रणम् ।**
**अमीमदन्तेत्याद्येन मन्त्रेणाप्यनुमन्त्र्य तान् ।**
**पिण्डशिष्टाच्चरोरन्नं किञ्चिदाघ्राय तत्त्यजेत् ।।**

**प्रक्षाल्याचम्य शुन्धन्तामित्याद्यैरेव पूर्ववत् ।**
**मन्त्रैः पिण्डेषु पानीयं निषिञ्चेत् पितृतीर्थतः ।।**

**व्याघ्रः–**

**अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिण्डं तु पूर्ववत् ।**
**कृत्वाऽवनेजनं कुर्यात् पिण्डपात्रमधोमुखम् ।।**

एतत्कातीयादीनां, आश्वलायनः-

**असावभ्यंक्ष्वासावंक्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने ।**

वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया उर्ध्वं स्वं लोमैतद्वः पितरो वासो मानोतोऽन्यत् पितरो युङ्ध्वमिति ।

**ततः व्याघ्रः–**

**गन्धपुष्पाणि धूपञ्च दीपञ्च विनिवेदयेत् ।।**

**देवलः–**

**दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् ।**
**भक्षाण्यपूपानिक्षूंश्च व्यञ्जनान्यशनानि च ।।**

ततो ''नमो वः पितर इषे'' इत्युपस्थानम् ।

**मात्स्ये–**

**अथाचान्तेषु वाचम्य वारि दद्यात् सकृत् सकृत् ।**
**तिलपुष्पाक्षतान् पश्चादक्षय्योदकमेव च ।।**

अत्र दैवे सव्यं पित्रे त्वपसव्यमिति कर्कः । परिभाषोक्तवचनात् सव्यमिति युक्तम् । ''शिवा आपः सन्तु सौमनस्यमस्तु'' इत्यादिप्रयोगो ज्ञेयः ।

मात्स्ये–

**दत्वाशीः प्रतिगृह्णीयाद् द्विजेभ्यः प्राङ्मुखो बुधः ।**
**अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ॥**

**गोत्रं तथा वर्धतां नस्तथेत्युक्तः स तैः पुनः ।**
**दातारो नोऽभिवर्धन्तामन्नं चैवैवेत्युदीरयेत् ॥**
**स्वस्तिवाचनकं कुर्यात् पिण्डानुद्धृत्य भक्तितः ॥**

स्वस्तिवाचनात् प्राक् पात्रचालनं कार्यम् ।

बृहस्पतिः–

**भाजनेषु तु तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः ।**
**तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतैः ॥**

जातूकर्ण्यः–

**पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।**
**[१]असंस्कृतो न च स्त्री च न चान्यश्चालयेत् क्वचित् ॥**

**स्वस्ति वाच्यं ततः कुर्यादक्षय्योदकमेव च ॥** (या.स्मृ.१.२४३)

वृद्धशातातपः–

**पितॄणां नामगोत्रेण करे देयं तिलोदकम् ।**
**प्रत्येकं पितृतीर्थेन अक्षय्यमिदमस्त्विति ॥**

अत्र षष्ठीविभक्तिः इत्युक्तम् ।

नागरखण्डे–

**उत्तानमर्घ्यपात्रं तु कृत्वा दद्याच्च दक्षिणाम् ।**
**हिरण्यं देवतानां च पितॄणां रजतं तथा ॥**

आचार्यः–

**दद्याद्यज्ञोपवीत्येव ताम्बूलं दक्षिणां तथा ॥**

---

१. ''न स्त्रीभिर्न च बालेन नासजात्या कथञ्चन'' इति निर्णयसिन्धावुत्तरार्धः पठितः ।

**अत्रिः–**

**वदेच्च तांस्ततो विप्रान् पित्रादिभ्यः स्वधोच्यताम् ।।**

**गोभिलः–**

स्वधां वाचयिष्य इति पृच्छति पितृभ्यः स्वधोच्यतामित्युक्तेऽस्तु स्वधेत्युच्यमाने धारां दद्यादूर्जं वहन्तीति ।

**आश्वलायनः–**

**अथैतान् प्रवाहयेत् । परेतन पितरः**
**सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः ।**
**दत्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत इति । आ.श्रौ.सू.२.७.९**

**मात्स्ये–**

**वाजे वाजे इति जपन् कुशाग्रेण विसर्जयेत् ।**
**आमावाजेति मन्त्रं तु पठित्वा च प्रदक्षिणाम् ।।**

**द्वारोपान्ते ततः कृत्वा संयतः प्रविशेद् गृहम् ।**
**प्राञ्जलिश्च ततः प्राह तान्विप्रान् सत्यवादिनः ।।**

**दातारो नोऽभिवर्धन्तामन्नं च न इतीव हि ।**
**एवमस्त्विति ते तं च कथयन्ति समाहिताः ।।**

एतन्मण्डलदेशे कार्यमिति हेमाद्रिः ।

**मनुः–**

**दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव नः ।**
**श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ।।**

**अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।**
**याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ।।** इति

अत्र दातारो वोऽभिवर्धन्ताम्, लभध्वम्, याचिद्ध्वम् इत्याद्यूहेन पठित्वा विप्रैः प्रतिवचनं कार्यमिति सुदर्शनभाष्ये । ''स्वादुषं सदः'', ''ब्राह्मणासः पितरः'' इति मन्त्रद्वयं च पठन्ति ।

शौनकः–

ब्राह्मणानथ निर्यातान् परीत्य त्रिः प्रदक्षिणम् ।
सस्त्रीकः स्वजनैः सार्धं प्रणमेद्रचिताञ्जलिः ।
कनिष्ठप्रथमा ज्येष्ठचरमाः स्युः प्रदक्षिणे ।।

बृहस्पतिः–

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् ।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ।।

पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ ।।

प्रचेताः–

विसृजेद्भक्तिसंयुक्तः सीमान्तं चाप्यनुव्रजेत् ।।

अथ पिण्डप्रतिपत्तिः ब्रह्माण्डे–

पिण्डमग्नौ सदा दद्याद् भोगार्थी प्रथमं नरः ।
पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकम् ।।

उत्तमां गतिमन्विच्छन् गोषु नित्यं प्रयच्छति ।
प्रज्ञां प्रजां यशः कीर्तिमप्सु पिण्डं प्रवेशयेत् ।।

प्रार्थयन् दीर्घमायुष्यं वायसेभ्यः प्रयच्छति ।
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ।।

मन्त्रमाह अश्वलायनः–

वीरं मे दत्त पितर इति पिण्डानां मध्यमं पत्नी प्राशयेत् ।

आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ।

यथायमरपा असत् ।। इति भर्त्रा दत्तस्याद्येनादानम्, द्वितीयेन प्राशनम् ।

छागलेयः–

[१]प्राचीनावीतिनामन्त्र्य पत्नीः पिण्डो विभज्यते ।

१. "प्राचीनावीतमामन्त्र्य" इति निर्णयसिन्धुः ।

प्रतिपत्त्यस्य मन्त्रस्य कर्तव्यावृत्तिरत्र तु ॥

विष्णुधर्मे–

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः ॥

अथ पिण्डोपघाते, देवलः–

श्वसृगालखरैः पिण्डः स्पृष्टो भिन्नः प्रमादतः ।
कर्तुरायुष्यनाशः स्यात्प्रेतस्तं नोपसर्पति ॥

जातूकर्ण्यः–

तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् ।
पुनः स्नात्वा तदा कर्ता पिण्डं कुर्याद्यथाविधि ॥

अत्रिः–

मार्जारमूषकस्पर्शे पिण्डे च द्विदलीकृते ।
पुनः पिण्डाः प्रदातव्यास्तेन पाकेन तत्क्षणात् ॥

अन्यत्र तु–

अन्तरापतिते पिण्डेऽप्यथवा द्विदले सति ।
पुनः श्राद्धं प्रकुर्वीत पुनःपाकेन तत्क्षणात् ॥ इत्युक्तम्

तथा–

अग्नौकरणशेषं च पिण्डो न स्पृश्यते यदि ।
तद्दिने चोपवासश्च पुनः श्राद्धं परेऽहनि ॥

उच्छिष्टोद्वासनमाह, वसिष्ठः–

श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात् ।
श्च्योतन्ते वै सुधाधारास्ताः पिबन्त्यकृतोदकाः ॥

व्यासः–

उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः ॥

इदं गृहान्तरसत्वे, एकगृहे तु मनुः–

उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहे बलिं कुर्यादिति धर्मो व्यवस्थितः ॥ म.स्मृ.३.२६५

बलिं ब्रह्मयज्ञादिनित्यकर्मेति मेधातिथिः-

**ब्रह्माण्डे-**

**शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।।**

**जातूकर्ण्यः-**

**द्विजभुक्तावशिष्टं तु शुचिभूमौ निखानयेत् ।।**

**अथ वैश्वदेवादि, मार्कण्डेयः-**

**ततो नित्यक्रियां कुर्याद् भोजयेच्च ततोऽतिथीन् ।**
**ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ।।**

ततः श्राद्धशेषात्, नित्यक्रियां नित्यश्राद्धम् ।

## अथ नित्यश्राद्धम्

**व्यासः-**

**एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृही ।।**

अपीत्यनुकल्पः ।

**प्रचेताः-**

**नामन्त्रणं च होमं च नाह्वानं न विसर्जनम् ।**
**न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम् ।।**

**अत्र-**

**निर्दिश्य भोजयित्वा तु किञ्चिद्दत्वा विसर्जयेत् ।।**

इति तेनैवोक्तेर्दक्षिणायां विकल्पः ।

**नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।**
**दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ।।** इति काशीखण्डे

तद्विप्राभावपरमिति पृथिवीचन्द्रः ।

**विप्राभावे कौर्मे-**

**उद्धृत्य वा यथाशक्ति किञ्चिदन्नं प्रकल्पयेत् ।**

**प्रतिपत्तिमाह विष्णुः-**

**भिक्षुकाभावेऽन्नं गोभ्यो दद्यादग्नौ वा प्रक्षिपेत् ।।** इति

**नागरखण्डे-**

**नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्ध्यति ।**
**श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत् ।।**

षड्दैवते पृथक् नेत्यर्थः । मात्स्ये-

**ततस्तु वैश्वदेवान्ते सभृत्यसुतबान्धवः ।**
**भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ।।**

**जातूकर्ण्यः-**

**अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः ।**
**अन्यथा त्वासुरं श्राद्धं परपाके च सेविते ।।**

श्राद्धशेषभोजनस्य क्वचिन्निषेधमाह मार्कण्डेयः-

**पित्रादीनामथान्येषां श्राद्धशेषान्नभोजनम् ।**
**व्रतिनां विधवनाञ्च यतीनाञ्च विगर्हितम् ।।**

**अन्येषां भिन्नगोत्राणां व्रतिनो ब्रह्मचारिणः ।**
**श्राद्धावशिष्टभोक्तारः ते वै निरयगामिनः ।।**
**सगोत्राणां सकुल्यानां ज्ञातीनां च न दोषकृत् ।।** इति तत्रैवोक्तेः

**जाबालिः-**

**विप्रस्त्वन्यगृहे श्राद्धशिष्टान्नं भोजनं चरेत् ।**
**प्राजापत्यं विशुद्धिः स्यात् ज्ञातिगोत्रे न दोषकृत् ।।**

यतीनां वपनं, लक्षप्रणवजपश्च प्रायश्चित्तं इति तत्रैवोक्तम्, अस्यापवादमाह-

**श्वशुरस्य गुरोर्वापि मातुलस्य महात्मनः ।**
**ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः ।।**
**एतेषां श्राद्धशिष्टान्नं भुक्त्वा दोषो न विद्यते ।।** इति

जाबालिः–

ताम्बूलं दन्तकाष्ठञ्च स्नेहस्नानमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकर्ता विवर्जयेत् ।।

।। इति पार्वणश्राद्धम् ।।

अथानुकल्पः स्मृत्यन्तरे–

द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत् ।
पैतृकेन च सूक्तेन होमं कुर्याद्विचक्षणः ।।

देवलः–

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धीयाहनि सम्प्राप्ते भवेन्निरशनोऽपि वा ।।

अत्यन्तद्रव्यशून्यश्चेच्छक्त्या दद्यात्तृणं गवाम् ।
स्नात्वा च विधिवद्विप्रः कुर्याद्वा तिलतर्पणम् ।।

अथवा रोदनं कुर्यादित्युच्चैर्विजने वने ।
दरिद्रोऽहं महापापी वदन्निति विचक्षणः ।।

अशक्तावामश्राद्धं कुर्यात् ।

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं तदा कुर्याद्धस्तेऽग्नौकरणं भवेत् ।

आहिताग्नौ प्रवासस्थे तत्पत्नी गेहे दर्शं ऋत्विगादिना कारयेत् ।

अमावास्यादिनियतं प्रोषिते धर्मचारिणी ।
पत्यौ तु कारयेन्नित्यमन्येनाप्यृत्विगादिना ।। इति लघुहारीतोक्तेः ।

सुमन्तुः–

पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप ।
अपत्नीनां महाबाहो विदेशगमनादिभिः ।
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ।।

अत्र प्रवासादौ आमहेमश्राद्धमेव पाकश्राद्धं तु न भवत्येवेति हेमाद्र्यादयः । विष्णुः-

**आत्मनो देशकालाभ्यां विप्लवे समुपस्थिते ।**
**आपद्यनग्नौ तीर्थे च प्रवासे पत्यसम्भवे ।।**

**चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः ।**
**न पक्वं भोजयेद्विद्वान् सच्छूद्रोऽपि कदाचन ।**
**भोजयन् प्रत्यवायी स्यान्नच तस्य फलं लभेत् ।।** इति विष्णूक्तेः

विज्ञानेश्वरादयस्तु "पाकाभावे द्विजातीनामामश्राद्धं विधीयते" इति सुमन्तूक्तेः साग्निकैर्निरग्निकैश्च प्रवासादौ सर्वत्र पाकाभावे आमादिना कार्यम् । पाकसम्भवे तु अन्नेनैवेत्याहुः । अत एव पाकश्राद्धमुक्त्वा,

**एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।**
**भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः ।।**

इति मात्स्ये निरग्नेरपि पाकश्राद्धोक्तेरिति शूलपाणिः ।

**मरीचिः-**

**श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।**
**अमावास्यादिनियतं माससंवत्सरादृते ।।**

**स्मृतिदर्पणे-**

**मृताहं च सपिण्डं च गयाश्राद्धं महालयम् ।**
**आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ।।**

**आमश्राद्धविधिस्तु व्यासः-**

**सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ।**
**आवाहनादि सर्वं स्यात्पिण्डदानं च भारत ।।**

**दद्याद्यच्च द्विजातिभ्यः शृतं वाऽशृतमेव वा ।**
**तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ।।**

**आमं ददतु कौन्तेय तद्दानं द्विगुणं चरेत् ।**
**त्रिगुणं चतुर्गुणं वापि नत्वेकगुणमर्पयेत् ।।**

निरग्नेस्तु पाणौ होमो ज्ञेयः । अत्र अर्घ्यं च देयम् ।

**आवाहनं भवेत्कार्यमर्घ्यदानं तथैव च ।।** इति भविष्योक्तेः

**मरीचिः–**

**आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।**
**अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः ।।**

आवाहने ''हविषे अत्तवे'' इत्यत्र स्वीकर्तवे इत्यूहः । स्वधाकारे ''नमो वः पितर इषे'' इत्यत्र इषेपदस्थाने आमद्रव्याय इत्यूहः । विसर्जने ''वाजे वाजे'' इत्यत्र तृप्ता इति स्थाने ''तृप्यत तृप्यत'' इति वा ऊहः ।

**तृप्तिप्रश्नोऽवगाहश्च जुषप्रश्नो यथासुखम् ।**
**आमश्राद्धे भवेन्नैतदपोशानं च पञ्चमम् ।।**

**आवाहनाग्नौकरणं विकिरं पात्रपूरणम् ।**
**तृप्तिप्रश्नं न कुर्वीत आमे हैमे कदाचन ।।**

इति धर्मप्रदीपोक्तं तु पूर्वोक्तविरोधाच्चिन्त्यम् । शाखान्तरविषयं वास्तु । विकिरोऽप्यामेनेति हेमाद्रिः ।

**तस्य कालमाह, हारीतः–**

**आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं च मध्यतः ।**
**पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ।।**

**तदभावे हेमश्राद्धमाह मरीचिः–**

**आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान् ।**
**धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा ।।**

**धर्मः–**

आमं तु द्विगुणं प्रोक्तं हेमं तद्वच्चतुर्गुणम् ।।

**षट्त्रिंशन्मते–**

**नामन्त्रणाग्नौकरणे विकिरो नैव दीयते ।**
**तृप्तिप्रश्नोऽपि नैवात्र कर्तव्यः केनचिद्भवेत् ।।**

हेमश्राद्धे पिण्डदानं नेति दिवोदासः, स्मृत्यर्थसारे तु विकल्पः भविष्ये–

**गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ।**
**पिण्डदानं प्रकुर्वीत हेमश्राद्धे कृते सति ।।**

पूर्ववत् मन्त्रोहः पूर्वाह्णकालता च ज्ञेयेति ।

**आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च ।**
**व्यतीपातादिके श्राद्धे नियमान्परिवर्जयेत् ।।**

पूर्वोक्तविशेषान् विना हेमश्राद्धमामश्राद्धवत् ।

**व्यासः–**

**हिरण्यमामं श्राद्धीयं लब्धं यत् क्षत्रियादितः ।**
**यथेष्टं विनियोज्यं स्याद्भुञ्जीयाद् ब्राह्मणात् स्वयम् ।।**

भोजनार्हेणापि तेन श्राद्धवैश्वदेवादि न कार्यम् । देवोद्देशेन त्यक्तस्य देवतान्तरे त्यागायोगादिति देवयाज्ञिकः ।

**सङ्कल्पश्राद्धम्, स्मृत्यन्तरे–**

**अङ्गानि पितृयज्ञस्य यदा कर्तुं न शुक्नुयात् ।**
**स तदा वाचयेद्विप्रान् सङ्कल्पात्सिद्धिदस्त्विति ।।**

**छागलेयः–**

**पिण्डो यत्र निवर्तेत मघादिषु कथञ्चन ।**
**साङ्कल्पं तु तदा कार्यं नियमात् ब्रह्मवादिभिः ।।**

**कार्ष्णाजिनिः–**

**मौञ्जीबन्धात्तु षण्मासं वत्सरं पाणिपीडनात् ।**
**पिण्डान्सपिण्डा नो दद्युः प्रेतपिण्डं विनात्र तु ।।**

अस्यापवादः पित्रोराब्दिकादौ पूर्वमुक्तः । त्यक्ताग्नेरपि साङ्कल्पमुक्तम् । षट्त्रिंशन्मते-

**अनग्निको यदा विप्र उत्सन्नाग्निस्तथैव च ।**
**तथा वृद्धिषु सर्वासु सङ्कल्पश्राद्धमाचरेत् ।।**

**स्मृत्यन्तरे-**

**त्यजेदावाहनं चार्घ्यमग्नौकरणमेव च ।**
**पिंडांश्च विकिराक्षय्ये श्राद्धे साङ्कल्पसंज्ञके ।।**

**अपि सङ्कल्पविधिना काले तस्य विधीयते ।**
**पात्रे भोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते ।।**

## अथ श्राद्धभोजने प्रायश्चित्तम्

दर्शे षट् प्राणायामाः, वृद्धौ त्रयः, संस्कारेषु जातकर्मादिचूडान्तेषु सान्तपनम् । आद्ये चान्द्रं वा । अन्यसंस्कारेषूपवासः । सीमन्ते चान्द्रमिति विज्ञानेश्वरः । आपदि नवश्राद्धैकादशाहेषु भोजने कृच्छ्रः कार्यः । द्वादशाहे ऊनमासे च पादोनः । द्विमासे त्रिपक्षे ऊनषष्ठोनाब्दयोश्चार्धं कृच्छ्रः । त्रिमासाद्याब्दिकान्तेषु सपिण्डेषु पादकृच्छ्रः, उपवासो वा । गुरुद्रव्यार्थं भोजनेऽर्द्धम् । जपशीले तदर्धम् । अनापदि तु ऊन-मासान्तेषु चान्द्रं कार्यं वा । द्विमासादौ पादोनम् । त्रिमासादावर्धं कार्यम् । आब्दिके पादोनः कार्यः । पुनराब्दिके एकाहः । क्षत्रियादिश्राद्धेषु द्वित्रिचतुर्गुणानि ज्ञेयानि । चण्डालसर्पश्वादिहतपतितक्लीबादिनवश्राद्धे चान्द्रम् । आद्यमासिकाद्याब्दिकान्ते श्राद्धे चान्द्रपराकातिकृच्छ्रादि ज्ञेयम् । अभ्यासे सर्वं द्विगुणम् । आमहेमश्राद्धेषु तत्तदर्धानि । यतिः ब्रह्मचारी चोक्तप्रायश्चित्तं कृत्वा त्रीनुपवासान् प्राणायामान् घृतापोशनं चाधिकं कृत्वा व्रतशेषं समापयेत् । अनापदि द्विगुणम् । दर्शादिके तु दशगायत्रीमन्त्रिताः अपः पिबेत्, षट् प्राणायामान्वा । संस्कारेषु चौले कृच्छ्रः । सीमन्ते चान्द्रम् । अन्येषूपवास इति ज्ञेयम् । अत्र एकादशाहे चान्द्रं पुनः संस्कारश्चेति हेमाद्रिः ।

**यत्तु उशनाः-**

**दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।।** इति

तदनुक्तप्रायश्चित्तश्राद्धपरमिति विज्ञानेश्वरः ।।

अथ क्षयाहश्राद्धम् तत्स्वरूपमाह व्यासः-

**मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।**
**प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥**

नारदीये-

**पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ॥**

अत्र चान्द्रमानं ग्राह्यम् ।

**आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥**

इति गार्गोक्तेः । मलमासे मृतस्य तु सौरम् ।

**मलमासमृतानां तु सौरमानं समाश्रयेत् ॥**

इत्युक्तेः । एतत् मृतिमासस्यैवाधिक्ये ज्ञेयम् ।

ब्राह्मे-

**प्रतिसंवत्सरं कार्यं मातापित्रोर्मृतेऽहनि ।**
**पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥**

अपुत्रस्येति भ्रात्राप्यन्वयः । ज्येष्ठस्येति कनिष्ठस्यानावश्यकत्वार्थम् ।

भविष्ये-

**सर्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतम् ।**

तथा-

**भोजको यस्तु वै श्राद्धं न करोति खगाधिप ।**
**मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि ।**
**स याति नरकं घोरं तामिस्रं नाम नामतः ॥**

तच्च पार्वणम् ।

शातातपः-

**सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।**
**प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधिः ॥**

**चतुर्विंशतिमते–**

**पितृव्यभ्रातृमातृणां ज्येष्ठानां पार्वणं भवेत् ।**
**एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः ।।**

**अपुत्रस्य पितृव्यस्य भ्रातुश्चैवाग्रजन्मनः ।**
**मातामहस्य तत्पत्न्याः श्राद्धं पार्वणवद्भवेत् ।।**

पत्न्याः कर्तृत्वेऽपि पार्वणमेव ।

**सर्वाभावे स्वयं पत्न्याः स्वभर्तृणाममन्त्रकम् ।**
**सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ।।**

इति लौगाक्षिस्मृतेः । ''स्वभर्तृप्रभृतित्रिभ्यः'' इति विरोधाच्च ।

**मातुः कात्यायनः–**

**प्रत्यब्दं यो यथा कुर्यात्पुत्रः पित्रे सदा द्विजः ।**
**तथैव मातुः कर्तव्यं पार्वणं चान्यदेव वा ।।**

**जातूकर्ण्यः–**

**पितृव्यभ्रतृमातृणामपुत्राणां तथैव च ।**
**मातामहस्यासुतस्य श्राद्धादि पितृवत् भवेत् ।।**

**पुलस्त्यः–**

**मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।**
**तेषाञ्च पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः ।।** इति

यानि तु यमः–

**सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।**
**मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ।।**

इत्यादि एकोद्दिष्टविधायकानि तानि,

**प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।**
**कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ।।**

इति जातूकर्ण्यवाक्यानुसारेण योज्यानि । वस्तुतस्तु सर्वेषां पार्वणैकोद्दिष्टयोः व्रीहियववद्विकल्पः । स च देशाचाराद् व्यवस्थितः इति सर्वनिबन्धसिद्धान्तः । अत एव वृद्धपराशरः "मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि" इत्युक्त्वाह-

**देशधर्मं समाश्रित्य वंशधर्मं तथाऽपरे ।**
**सूरयः श्राद्धमिच्छन्ति पार्वणं च क्षयाद्यपि ।।** इति

**प्रचेताः-**

**सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते ।**
**अपुत्राणां च सर्वेषामपत्नीनां तथैव च ।।**

**अपत्नीनां ब्रह्मचार्यादीनां वृद्धगार्ग्यः-**

**मातुः सहोदरा या च पितुः सहभवा च या ।**
**तयोश्च नैव कुर्वीत पार्वणं पिण्डनादृते ।।**

**वसिष्ठः-**

**सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।**
**भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।।**

**पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ।**
**मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्य एव च ।।**
**दद्याद्वै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा ।।**

अन्यथा पार्वणं इत्युक्त्वा सर्वत्र पार्वणमुक्तम् । एकोद्दिष्टवाक्यानि तु तीर्थ-महालयपराणीत्युक्तं पारिजाते । "पितृव्यभ्रातृपुत्राणामेकोद्दिष्टं च पार्वणम्" इति पुलस्त्योक्तेर्विकल्प इत्याहुः । केचित्तु एकोद्दिष्टवाक्यानि "व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डना" इत्यस्य पितृव्यादिपरत्वादकृतसपिण्डनपितृव्यादिपराणीत्याहुः।

## अथ क्षयाहद्वैधे निर्णयः

तत्रैकोद्दिष्टं मध्याह्ने कार्यम् ।

**आमश्राद्धं तु पूर्वाह्ने एकोद्दिष्टं तु मध्यमे ।**
**पार्वणं चापराह्ने तु प्रातर्वृद्धिनिमित्तकम् ।।** इति हारीतः

प्रातःशब्दसाहचर्यात् मध्याह्नं पञ्चधाविभक्तदिनतृतीयभाग इति माधवः । तत्रापि कुतुपादिमुहूर्तद्वये ज्ञेयम् ।

**प्रारभ्य कुतुपे श्राद्धं कुर्यादारौहिणं बुधः ।।**

तेन कुतुपादिरौहिणान्तो मुख्यः कालः । दिनद्वये तद्व्याप्त्यावंशे समव्याप्तौ च पूर्वा । विषमव्याप्तावाधिक्येन निर्णयः । अव्याप्तौ पूर्वैव । परविद्धाया निषेधात् । पार्वणं त्वपराह्ने कार्यम् । पूर्वोक्तवचनात् ।

**मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथिर्भवेत् ।**
**अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ।।** इति गौतमोक्तेश्च

पूर्वेद्युरेव परेद्युरेव वाऽपराह्णव्याप्तौ सैव ग्राह्या । दिनद्वये तव्द्याप्तौ तदस्पर्शेऽशतः समव्याप्तौ वा पूर्वैव । विषमव्याप्तौ त्वधिका ग्राह्या,

**व्यपराह्णव्यापिनी स्यादब्दिकस्य यदा तिथिः ।**
**महती यत्र तद्विद्धा प्रशंसन्ति महर्षयः ।।** इति मरीचिस्मृतेः ।

**दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम् ।**
**पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ।।** इति नारदोक्तेः ।

**व्यहेऽप्यव्यापिनी चेत्स्यान्मृताहस्य यदा तिथिः ।**
**पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदि ।।** इति सुमन्तूक्तेः ।

**पूर्वस्यां निर्वपेत्पिण्डानित्याङ्गिरसभाषितम् ।।** इति हेमाद्रौ पाठः

**वृद्धमनुः-**

**न व्यहव्यापिनी चेत्स्यान्मृताहस्य च या तिथिः ।**
**पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता च या भवेत् ।।**

पूर्वेद्युः सायं त्रिमुहूर्ताभावे तु परैव ।

**त्रिमुहूर्ता न चेद् ग्राह्या परैव कुतुपे हि सा ।।** इति गोभिलोक्तेः

**प्रत्याब्दिकेऽप्येवमेव तिथिर्ग्राह्याऽपराह्णिकी ।**
**उभयत्र तथात्वे तु महत्त्वेन विनिर्णयः ।।**

**समत्वे पूर्वविद्धैव ह्यतथात्वेऽपि सा यदि ।**
**त्रिमुहूर्ता भवेत्सायं सर्वेष्टोऽयं विनिर्णयः ।।** इति माधवीये ।

दिनद्वये अपराह्णव्याप्तौ समव्याप्तौ च क्षये पूर्वा वृद्धौ परेत्युक्तम् ।

**तिथिर्योदयमारभ्य सायाह्नं यदि चेत् स्पृशेत् ।**
**प्रत्यब्दे मासिके चैव ग्राह्येति मुनिरब्रवीत् ।।**

**उभयत्रापराह्णश्च भवेद्यत्राधिका मता ।**
**तुल्या चेदुभयत्रापि पूर्वा नोचेत्तथैव तु ।।**

**क्षीयमाणे तु पूर्वैव वर्धमाने तु वै परा ।**
**समत्वेऽपि तथैवास्य ग्राह्या कुतपकालिका ।।**

इत्यन्यत्रोक्तम् । मलमासे तु यत्र द्वादशं मासिकं शुद्धमासे भवति तत्र त्रयोदशे अधिक एवाब्दिकं कार्यम् । यत्राधिकमध्ये द्वादशमासिकं तत्र तस्य द्विरावृत्तिं कृत्वा चतुर्दशे शुद्ध एव प्रथमाब्दिकमिति निष्कर्षः । द्वितीयादिकं तु शुद्धमासे एव नाधिके, नाप्युभयोः । मलमृतानां तु यदा स एवाधिकः स्यात्तदा तत्रैव कार्यमन्यथा शुद्ध एवेति प्रागुक्तम् । दर्शे वार्षिकं चेत्तदा पूर्वं वार्षिकं कृत्वा ततः पिण्डपितृयज्ञो दर्शश्राद्धं चेति निर्णयदीपे क्रम उक्तः ।

**स्मृतिसारेऽपि–**

**दर्शे क्षयाहे सम्प्राप्ते कथं कुर्वन्ति याज्ञिकाः ।**
**आदौ क्षयाहं निर्वर्त्य पश्चाद्दर्शो विधीयते ।।** इति

**अथ शुद्धिश्राद्धम्, दिवोदासीये–**

**सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत् ।**
**तावदेव न भोक्तव्यं क्षयेऽहनि कदाचन ।।**

वर्षान्तसपिण्डनेऽप्येतत्तुल्यम् ।

**मृताहनि तु सम्प्राप्ते यावदब्दचतुष्टयम् ।**
**बहिः श्राद्धं प्रकुर्वीत न कुर्याच्छ्राद्धभोजनम् ।।**

**प्रथमेऽस्थीनि मज्जा च द्वितीये मांसभक्षणम् ।**
**तृतीये रुधिरं प्रोक्तं श्राद्धं शुद्धं चतुर्थकम् ।।** इति श्राद्धकारिकोक्तेः ।

शुद्धं किञ्चिदिति ज्ञेयम् । स्मृत्यन्तरे-

**सप्तत्रिंशच्च यो मासान् श्राद्धे भुंक्ते तमोहतः ।**
**स पंक्तिदूषितः पापः प्रेताशी च भवेत्तु सः ।।**

तत्र प्रथमेऽब्दे वर्षान्तसपिण्डनपक्षे मृताहात्पूर्वेऽह्नि सपिण्डनमब्दपूर्तिश्राद्धं च कृत्वा परेद्युर्वार्षिकं कुर्यादिति स्मृत्यर्थसारे उक्तम् । कालकाण्डे हेमाद्रिस्तु मृताहे सपिण्डीकरणेनैव वार्षिकसिद्धिः ।

**पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तितः ।**
**तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते ।।** इति वचनादित्याह

इदमेव च युक्तम् ।

**अथ क्षयाहाज्ञाने बृहस्पतिः-**

**न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति ।**
**मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यादथाब्दिकम् ।।**

**दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।**
**प्रस्थानमासदिवसौ ग्राह्यौ पूर्वोक्तया दिशा ।।**

**भविष्ये-**

**मृताहं यो न जानाति मानवो विनतात्मज ।**
**तेन कार्यममावास्यां श्राद्धं सांवत्सरं सदा ।।**

**दिनमेव न जानाति मासं नैव तु यो नरः ।**
**मार्गशीर्षेऽथवा भाद्रे माघे वा तद्दिनं भवेत् ।।**

**कालादर्शे–**

**मासाज्ञाने दिनज्ञाने कार्यमाषाढमाघयोः ॥**

**प्रभासखण्डे–**

**मृताहं यो न जानाति मासं वापि कथञ्चन ।**
**तेन कार्यममायां स्यात् श्राद्धं माघेऽथ मार्गके ॥**

**भविष्ये–**

**मृतवार्ताश्रुतेः ग्राह्यौ तौ पूर्वोक्तक्रमेण तु ॥**

पूर्वोक्तेति दिनाज्ञाने मासज्ञाने च तद्दर्शे । मासाज्ञाने दिनज्ञाने च मार्गादौ इतिवत् श्रवणदिनेऽपि ज्ञेयमित्यर्थः । श्रवणदिनमासाज्ञाने माघमार्गदर्शे कार्यम् । पूर्वोक्त-प्रभासखण्डात् ।

**तिथितत्त्वे यमः–**

**गतस्य न भवेद्वार्ता यावद् द्वादशवार्षिकी ।**
**प्रेतावधारणं तस्य कर्तव्यं सुतबान्धवैः ॥**

**यन्मासि यदहर्यातस्तन्मासि तदहःक्रिया ।**
**दिनाज्ञाने कुहूस्तस्य आषाढस्याथवा कुहूः ॥**

## अथ श्राद्धविघ्ने निर्णयः

**निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि ।**
**निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च ।**
**देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥**

इति ब्राह्मोक्तेः । विप्रस्य निमन्त्राणोत्तरं सूतके मृतके चाशौचाभावः । कर्तुस्तु विष्णुराह–

**व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।**
**प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥**

श्राद्धे प्रारम्भस्तेनैवोक्तः ।

**प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।**
**नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ।।** इति

अयं पाकोत्तरशौचाभावः कर्तुरेव । भोक्तुस्तु दोषोऽस्त्येव ।

**अपि दातृगृहीत्रोश्च सूतके मृतकेऽथवा ।**
**अविज्ञाते न दोषस्याच्छ्राद्धादिषु कथञ्चन ।।**
**विज्ञाते भोक्तुरेव स्यात्प्रायश्चित्तादिकं क्रमात् ।।** इति ब्राह्मोक्तेः ।

आदिशब्देन आशौचम् । मिताक्षरादौ तु श्राद्धकर्तुः भोक्तुश्च सर्वथा दोषाभाव उक्तः । आशौचमध्ये श्राद्धदिनप्राप्तौ तु माधवीये ऋष्यशृङ्गः -

**देये पितॄणां श्राद्धे तु आशौचं जायते यदा ।**
**आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते ।।**

**श्राद्धचिन्तामणौ–**

**प्रतिसंवत्सरश्राद्धमाशौचात्पतितश्च यत् ।**
**मलमासेऽपि तत्कार्यमिति भागुरिभाषितम् ।।**

आशौचान्त्यदिनत्वेन निमित्तत्वादित्यर्थः । एतन्मासिकाब्दिकपरम् । न दार्शिकादौ ।

**षट्त्रिंशन्मते–**

**मासिके चाब्दिके त्वह्नि सम्प्राप्ते मृतसूतके ।**
**वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणः ।।**

अथ भार्यारजोदर्शने दार्शिकमामेन कार्यम् ।

**श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।**
**अमावास्यादिनियतं माससंवत्सरादृते ।।** इति हारीतोक्तेः

**व्याघ्रपादोऽपि–**

**आर्तवे देशकालानां विप्लवे समुपस्थिते ।**
**आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि ।।**

**वस्तुतस्तु–**

**पाकाभावे द्विजातीनामामश्राद्धं विधीयते ।।** इति सुमन्तूक्तेः

पाककर्त्रन्तरे सति अन्नेन, अन्यथा आमेनेति युक्तम् ।

**मासिकानि सपिण्डानि अमावास्या तथाब्दिकम् ।**
**अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ।।**

इति कलिकायां वचनाच्च । एवं महालययुगादावपि । आब्दिकं तु अन्नेनैव ।

**पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।**
**अन्नेनैवाब्दिकं कुर्याद्धेम्ना वाऽमेन न क्वचित् ।।** इति माधवोक्तेः

**मरीचिः–**

**अनग्निश्च प्रवासी च यस्य भार्या रजस्वला ।**
**आमश्राद्धं प्रकुर्वीत न तत्कुर्यान्मृतेऽहनि ।।** इति

एवं मासिकेऽपि, यत्तु,

**आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला ।**
**श्राद्धं तदा न कर्तव्यं कर्तव्यं पञ्चमेऽहनि ।।**

तदपुत्रस्त्रीकर्तृकश्राद्धविषयम् ।

**अपुत्रा तु यदा भार्या सम्प्राप्ते भर्तुराब्दिके ।**
**रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि ।।** इति श्लोकगौतमोक्तेः ।

ननु अशुचित्वादेव तत्र पञ्चमेऽहनि अर्थात् प्राप्तं श्राद्धं इति वचनं व्यर्थम् । मैवं, अनुपनीतस्त्रीशूद्राश्च श्राद्धमृत्विजा वा कारयेयुः । 'स्वयं वाऽमन्त्रकं कुर्युः' इति स्मृत्यर्थसाराच्च अन्यद्वारा करणनिवृत्त्यर्थत्वात्तस्य, अन्यथा त्वदुक्तदिशा आशौचानन्तरं श्राद्धकर्तव्यतावेदकवाक्यवैयर्थ्यं स्यात् । अतः पञ्चमेऽहनि इति युक्तम् । हेमाद्रिस्तु श्राद्धादौ स्त्रिया सहैव अधिकारात् तस्यां रजोदुष्टायां तन्निवृत्तेः एकभार्येण पञ्चमेऽहनि कार्यम्, प्रागुक्तमरीच्युक्तेः । भार्यान्तरसत्वे तु 'पुष्पवत्स्वपि' इति वचनात्तद्दिन एवेत्याह, तच्चिन्त्यम् । सहाधिकारः सहत्वश्रुत्या वा, एकफलभाक्त्वेन वा, पाककर्तृत्वेन वा । नाद्यः तदभावात् । पाणिग्रहणाद्धि सहत्वं कर्मस्वित्यस्याग्निसाध्यकर्मविषयत्वात् । आब्दिकस्य निरग्नेरपि पाकेनैवोक्तेः ।

स्मार्ताग्निसाध्यत्वानियमात् । कथञ्च भार्यान्तरसत्वे सहाधिकारः? ''जेष्ठया न विनेतरा'' इति नियमात्। ज्येष्ठापरत्वे च तेनैव सिद्धे वचनवैयर्थ्यात् । न द्वितीयः, अविभक्तभ्रातृषु एकस्याशुचित्वेऽन्यस्यानधिकारापत्तेः । न तृतीयः, रोगिण्यादिष्वप्यनधिकारापत्तेः । बान्धवानामपि पाककर्तृत्वोक्त्या विरोधाच्च ।

**अथ अन्वारोहणे निर्णयः, लौगाक्षिः-**

**मृताहनि समासेन पिण्डनिर्वपणं पृथक् ।**
**नवश्राद्धं च दम्पत्योरन्वारोहण एव तु ।।**

अत्र मृताहनीत्येकत्वाद्दिनभेदे दिनैक्ये वा मृततिथेरेकत्वे कालैक्यम्, कर्त्रैक्यं पाकैक्यञ्च ।

**एकचित्यधिरोहे तु तिथिरेकैव जायते ।**
**एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी ।।** इति स्मृत्यन्तराच्च

**अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया ।**
**पिण्डदानक्रिया तद्वत् श्राद्धं प्रत्याब्दिकं तथा ।।**

**नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक् ।**
**एक एव वृषोत्सर्गो गौरेका तत्र दीयते ।।** इति

तिथिभेदे तु वार्षिकं पृथगेव । पृथ्वीचन्द्रिकादयस्तु- द्वयोरेकपिण्डदानं लौगाक्षिवचनं चापद्विषयम् । पृथक्पिण्डदानं तु मुख्यः कल्पः । तदाह बृहत्पराशरः-

**आरुह्य भर्तुश्चितिमङ्गनाया प्राप्नोति मृत्युं खलु सत्वयुक्ता ।**
**एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक् स्वर्गमपेक्ष्य सद्भिः ।।**

**एकत्वमिच्छन्ति मतिप्रहीणा एकादशाहादिषु ये नृनार्योः ।**
**ते स्वर्गमार्गं विनिहत्य कुर्युः स्त्रीसत्वघातान्नरकादिवासम् ।।**

**भर्त्रा सह मृता या तु नाकलोकमभीप्सती ।**
**सार्हेत् श्राद्धं पृथक् पिण्डान् नैकत्वं तु स्मृतं तयोः ।।**

**पृथगेव हि कर्तव्यं श्राद्धमेकादशाहिकम् ।**
**यानि श्राद्धानि सर्वाणि तान्युक्तानि पृथक् पृथक् ।।** इति

विश्वादर्शेऽपि–

मातुर्गयाष्टकावृद्धिः मृताहेषु महालये ।
श्राद्धं कुर्यात् पृथक् दैवं तन्त्रं वाऽनुगतावपि ।।

एकचित्यां समारुह्य मृतयोरेकबर्हिषि ।
पित्रोः पिण्डान् पृथग्दद्यात्पिण्डं त्वापत्सु तत्सुतः ।।

इत्यग्निस्मृतेरित्याहुः । यत्तु षट्त्रिंशन्मते–

एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके ।
न पृथक् पिण्डदानं तु तस्मात्पत्नीषु विद्यते ।।

इति तद्दर्शादिपरम् । चन्द्रप्रकाशेऽपि–

एकचित्यां समारूढौ दम्पती प्रमृतौ यदि ।
पृथक् श्राद्धं प्रकुर्वीत पत्युरेव क्षयेऽहनि ।।

पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्यात्सन्निपातेष्वयं क्रमः ।।

सहगमने सर्वत्र श्राद्धार्थमेकः पाक इत्याह प्रचेताः–

एकचित्यां समारूढौ म्रियेते दम्पती यदि ।
तन्त्रेण श्रपणं कुर्यात् पृथक्पिण्डं समावपेत् ।।

अन्यात्रापि–

सहानुगतयोः पित्रोः श्राद्धे चैव क्षयाहके ।
शाकभक्षादिकं चान्नं तयोः कुर्यात् पृथक् पृथक् ।।

यदि कर्तुं न शक्येत कालातिक्रमभीतितः ।
अन्नमात्रं पृथक्कुर्यादिति वेदविदो विदुः ।।

एकमेव भवेदत्र प्रायश्चित्ततिलोदकम् ।
एकस्मिन्नेव काले तु द्विजस्तुतिप्रदक्षिणम् ।।

**विश्वेदेवादिकं सर्वमर्चनं च पृथक् पृथक् ।**
**पितुरादौ ततो मातुः कुर्यात्सङ्कल्पपूर्वकम् ।।**

अत्र भर्तुराशौचमध्ये अन्त्यदिने स्त्रीमरणे पतिमरणदिनगणनया आशौच-पिण्डदानैकादशाहादि कार्यम् । नात्र पक्षिणी वृद्धिः ।

**मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ।**
**न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यति ।।**

**पुत्रोऽन्यो वाग्निदस्तस्यास्तावदेवाशुचिस्तयोः ।**
**नवश्राद्धं सपिण्डश्च युगपत्तु समापयेत् ।।** इति षडशीतिमतात्

**यदा नारी विशेदग्निं प्रियस्य प्रियवाञ्छया ।**
**तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हि ।।** इति लघुहारीतोक्तेश्च

**व्यासः-**

**संस्थितं पतिमालिंग्य प्रविशेद्या हुताशनम् ।**
**तस्याः पिण्डादिकं देयं क्रमशः पतिपिण्डवत् ।।**

**अन्विता पिण्डदानं तु यथा भर्तुः दिने दिने ।**
**तदन्वारोहिणी यस्मात्तस्मात्सा नात्मघातिनी ।।** इति विष्णुः

पृथक् चितौ तु भर्त्राशौचमध्ये तदूर्ध्वं वा सत्यां त्र्यहेण दशपिण्डाः ।

**अन्विताया: प्रदातव्या दश पिण्डाः त्र्यहेण तु ।**
**स्वाम्याशौचे व्यतीते तु तस्याः श्राद्धं प्रदीयते ।।** इति पैठीनसिस्मृतिः

**अत्र विशेषः स्मृत्यन्तरे-**

**माता मङ्गलसूत्रेण म्रियते यदि तद्दिने ।**
**उद्दिश्य विप्रपंक्तौ तां भोजयेच्च सुवासिनीम् ।।**

**अथ श्राद्धसम्पाते निर्णयः-**

तत्र पित्रोः मृततिथ्येकत्वे मरणक्रमेण दर्शे वर्गद्वयवत् तन्त्रेण श्राद्धं कुर्यात् । पौर्वापर्याज्ञाने तु पितृपूर्वं कुर्यादिति हेमाद्रिः । माधवादयस्तु-

**पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा ।**
**पितृपूर्वं सुतः कुर्यादन्यत्रासन्नियोगतः ।।** इति कार्ष्णाजिनिस्मृतेः ।

सर्वत्र पितृपूर्वं भिन्नं प्रयोगमाहुः । पार्वणैकोद्दिष्टयोः सम्पाते माधवीये जाबालिः-

**यद्येकत्र भवेयातामेकोद्दिष्टं च पार्वणम् ।**
**पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ।।**

**गृहदाहादिना युगपन्मरणे तु भृगुः-**

**एककाले गतासूनां बहूनामथवा द्वयोः ।**
**तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक् पृथक् ।।**

**पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।**
**तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः ।।**

**ऋष्यशृङ्गः-**

**भवेद्यदि सपिण्डानां युगपन्मरणं तदा ।**
**सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ।।**

**बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेऽहनि ।**
**तन्त्रेण श्रपणं कृत्वा पृथक् श्राद्धानि कारयेत् ।।**

इदं च पृथक्पाकेन भिन्नश्राद्धाशक्तौ । पृथक्पाकेन सम्बधासत्त्यां श्राद्धभेदस्तु मुख्यः पक्षः ।

**एकत्रैव दिने श्राद्धद्वयं प्राप्तं यदा तदा ।**
**चरेदेव पुरा वर्षात् पितुर्मातुश्च तत्सुतः ।।**

**एकस्मिन्यः करोत्यह्नि द्वयोः श्राद्धं यदा द्विजः ।**
**तदा पूर्वमृतस्यादौ कृत्वा स्नात्वा यथाविधि ।।**

**पश्चात्पश्चान्मृतस्यैव पृथक्पाकैः समाचरेत् ।**

**नैकस्मिन् दिवसे श्राद्धं त्रयाणां कुत्रचिद् द्विजः ।**
**एकः कुर्यात्तथा प्राप्ते अन्यो भ्राता समाचरेत् ।।**

**प्रातर्यविद्यमाने तु तत्परेऽह्नि समाचरेत् ।**
**अन्यथा श्राद्धहन्ता स्यात् श्राद्धसङ्करकृद्भवेत् ।।**

इत्याश्वलायनोक्तेरिति पृथ्वीचन्द्रः ।

**कात्यायनः–**

**द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।**
**नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् ।।**

**कालादर्शे–**

**नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि ।**
**दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ।।**

**दार्शिकस्य च मन्वादेः सम्पाते श्राद्धकर्मणः ।**
**प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ।।**

अस्य देवताभेदे अपवादमाह–

**नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि ।**
**दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ।।**

**नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ।**
**युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा ।।**

**प्रत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च ।**
**सम्पाते देवताभेदात् श्राद्धयुग्मं समाचरेत् ।।**

**निमित्तानियतिश्चात्र पूर्वानुष्ठानकारणम् ।**
**पित्रोस्तु पितृपूर्वत्वं सर्वत्र श्राद्धकर्मणि ।।**

**अथ श्राद्धाङ्गतर्पणम्, गार्ग्यः–**

पूर्वं तिलोदकं कृत्वा अमाश्राद्धं तु कारयेत् ।
प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् ।।

पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ।
यस्तर्पयति तान् विप्रः श्राद्धं कृत्वा परेऽहनि ।।

**पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम् ।**
**प्रत्यब्दाङ्गं तिलं दद्यान्निषिद्धेऽपि परेऽहनि ।**
**वर्गैकस्य वचो येषामन्येषां तु विवर्जयेत् ।।**

गर्गः– **कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।**
**पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ।।**

तर्पणं तिलतर्पणम्, ''निषिद्धाहेऽपि'' इत्युक्तेः ।

**सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि ।**

श्राद्धाङ्गतर्पणस्यापवादः बृहन्नारदीये–

**वृद्धिश्राद्धे सपिण्ड्याश्च प्रेतश्राद्धेऽनुमासिके ।**
**संवत्सरविमोके च न कुर्यात्तिलतर्पणम् ।।**

तदयमर्थः, दर्शे विप्रनिमन्त्रणोत्तरं, पाकारम्भोत्तरं वा श्राद्धप्रयोगस्यारब्धत्वात् ब्रह्मयज्ञोत्तरं नित्यतर्पणेनैव श्राद्धाङ्गतर्पणस्य तन्त्रेण प्रसङ्गेन वा सिद्धिः । ततः पूर्वं वैश्वदेवोत्तरं वा ब्रह्मयज्ञकरणे श्राद्धाङ्गतर्पणं पृथक्कार्यम् । पित्रोर्वार्षिके तु नित्यतर्पणं तिलवर्ज्यं कार्यम् ।

**नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम् ।**
**श्राद्धं कृत्वापराह्णे च तर्पणं च तिलै[१]र्विना ।।** इति वचनात्

**सप्तम्यां भानुवारे च मातापित्रोः मृतेऽहनि ।**
**तिलैर्यस्तर्पणं कुर्यात् स भवेत्पितृघातकः ।।** इति वृद्धमनूक्तेश्च

अत्र नित्यतर्पणे तिलमात्रनिषेधः, न तु तर्पणस्य, तिलैरित्यस्य वैयर्थ्यापत्तेः । सकृन्महालये परेद्युस्तर्पणम् । अनेकश्राद्धसम्पाते तु यदि प्रसङ्गसिद्धिः तदीयमेव तर्पणम् । तन्त्रत्वे तु श्राद्धसमसंख्यत्वे आदावन्ते वा । विषमसंख्यायां बह्वनुरोध इति।

**श्राद्धाङ्गतर्पणविधिः, स्कान्दे–**

**श्राद्धं कृत्वा तु पूर्वेद्युः प्रातः स्नात्वा परेऽहनि ।**
**तिलैः पितॄंस्तर्पयित्वा पश्चात्सन्ध्यादिकाः क्रियाः ।।**

---

१ 'सह' इति क्वचित्पाठः ।

**संग्रहे–**

**स्नात्वा तीरं समागत्य उपविश्य कुशासने ।**
**सन्तर्पयेत् पितॄन् सर्वान् स्नात्वा वस्त्रञ्च धारयेत् ।।**

तर्पणोत्तरं स्नानं कृत्वेत्यर्थः ।

**अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले ।**
**नामगोत्रस्वधाकारैः द्वितीयान्तेन तर्पयेत् ।।**

**तत्र वस्वादिरूपतोक्ता स्मृत्यर्थसारे–**
**वसुरुद्रादितिसुतान् श्राद्धार्थे तर्पयेत्पितॄन् ।।**

अत्र प्रत्यञ्जलि मन्त्रावृत्तिः । निर्वापवत् सन्ध्यार्घ्यदानवच्च द्रव्यभेदात् । अवघातवेदिप्रोक्षणादौ तु द्रव्यैकत्वान्न मन्त्रावृत्तिः । एवं नित्येऽपि ।

**मातापितॄणामब्दे तु यः कुर्यात्तिलतर्पणम् ।**
**तर्पणेनैव तृप्तिः स्यात्तच्छ्राद्धं निष्फलं भवेत् ।।**

**पित्रोः क्षयाहे सम्प्राप्ते यः कुर्यान्नित्यतर्पणम् ।**
**आसुरं तद्भवेच्छ्राद्धं तत्तोयं रुधिरं भवेत् ।।**

**सर्वदा तर्पणं कुर्याद् ब्रह्मयज्ञपुरस्सरम् ।**
**मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेत् ।।**

इति तु सतिलतर्पणविषयम् ।

**आदौ तु याजुषाः कुर्युरन्ते बह्वृचसामगाः ।**
**ब्रह्मयज्ञं ततः पश्चात्तर्पणं तु तिलैर्विना ।।** इति वचनात्

**कपिलः–**

**मन्वादिषु युगाद्यासु दर्शसंक्रमणेषु च ।**
**पौर्णमास्यां व्यतीपाते दद्यात्पूर्वं तिलोदकम् ।।**

**अर्धोदये गजच्छाये षष्ठ्यां चैव महालये ।**
**भरण्यां च मघाश्राद्धे तदन्ते तर्पणं विदुः ।।**

**शौनकः–**

**मातापित्रोर्मृताहे तु परेऽहनि तिलोदकम् ।**
**कारुण्यश्राद्धविषये सद्यो दद्यात्तिलोदकम् ।।**

इदं निर्मूलमित्याहुः ।

**अथ वृद्धिश्राद्धम्, तन्निमित्तं कालादर्शे–**

सीमन्तव्रतचौलनामकरणान्नप्राशनोपनयनस्नानाधानविवाहयज्ञतनयोत्पत्ति-प्रतिष्ठासु च । पुंसूत्यावसथप्रवेशनसुताद्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषेक-दयिताद्यर्तौ च नान्दीमुखम् ।। इदं चावश्यकम् ।

**वृद्धौ न तर्पिता ये वै पितरो गृहमेधिभिः ।**
**तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः ।।** इति शातातपोक्तेः

**अत्र श्राद्धत्रयं स एवाह–**

**मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।**
**ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ।।**

**तत्कालमाह गार्ग्यः–**

**मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम् ।**
**मातामहं चोत्तरेद्युः वृद्धौ श्राद्धत्रयं स्मृतम् ।।**

**अत्राप्यशक्तौ स एवाह–**

**पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्ववासरे ।**
**श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ।।**

**वृद्धमनुरपि–**

**अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।**
**पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ।।**

अत्र महत्सु पूर्वेद्युः तदहरल्पेष्विति गृह्यपरिशिष्टाद् व्यवस्था ज्ञेया । तच्च प्रातरेव ''पार्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्'' इति शातातपोक्तेः । अत्र प्रातःशब्दः सार्धप्रहरपरः । ''प्रहरोऽप्यर्धसंयुक्तः प्रातरित्यभिधीयते'' इति गार्ग्योक्तेः इति पृथ्वीचन्द्रः । इदं च मातृपितृमातामहक्रमेण नवदैवत्यं कार्यम् । तत्र मातामहाः सपत्नीकाः ।

**शंखः-**

**नान्दीमुखे सत्यवसू सङ्कीर्त्यौ वैश्वदेविके ।।**

**यत्तु-**

**नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।**
**नाम सङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ।।**

इति व्युत्क्रमप्रतिपादकं वृद्धवसिष्ठवचनं तच्छाखान्तरविषयम् । पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः इति बह्वृचपरिशिष्टे आनुलोम्याम्नानात् । वृद्धपदं पित्रादिषु न प्रयोक्तव्यम् ।

**अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम् ।**
**अनाम्नामतिलाद्यैश्च नान्दीश्राद्धं तु सव्यवत् ।।**

इति संग्रहोक्तेः । गोत्रनामादिनिषेधस्तु सङ्कल्पश्राद्धपरः ।

**शुभार्थी प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् ।।**

इत्युपक्रम्याऽनस्मद्वृद्धशब्दानामित्युक्तेः । सपिण्डके तु सर्वं भवतीति प्रयोगपारिजाते- ''गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत्'' इति छन्दोगपरिशिष्टे तद्विधानात् ।

**यत्तु ब्राह्मे-**

**पिता पितामहश्चैव तथैव प्रपितामहः ।**
**त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ।।**

**तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखैधिताः ।**
**ते तु नान्दीमुखा नान्दीसमृद्धिरिति कथ्यते ।।** इति

तत्तु प्रौष्ठपदीश्राद्धे प्रपितामहात्पूर्वेषां देवतात्वप्रतिपादकम् ।

**नान्दीमुखानां श्राद्धं तु कन्याराशिगते रवौ ।**
**पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ।।** इत्युक्तेः

**मातृश्राद्धं तु युग्मैः स्याददैवं प्राङ्मुखैः पृथक् ।**

इति वाक्यं भिन्नप्रयोगमातृश्राद्धपरम् । एतच्च मातृपूजापूर्वकं कार्यम् ।

**कौर्मे-**

**पुष्पैर्धूपैः सनैवेद्यैः गन्धाद्यैः भूषणैरपि ।**
**पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ।।**

**शातातपः-**

**अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत् ।**
**तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ।।** इति छन्दोगपरिशिष्टे ।

**कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः ।**
**पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ।।**

**प्रतिमासु च शुद्धासु लिखिता वा पटादिषु ।**
**अपि वाक्षतपुञ्जेषु नैवेद्यैस्तु पृथग्विधैः ।।**

**आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।**
**षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।।**

आयुष्याणि आनो भद्रा इत्यादीनि षड्भ्य इति मात्रादित्रिकोपलक्षणं । मातरश्चोक्ताः छन्दोगपरिशिष्टे-

**गौरी पद्मा शची मेधा सावित्री विजया जया ।**
**देवसेना स्वधा स्वाहा मातारो लोकमातरः ।।**

**धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।**
**गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चर्तुदश ।।**

चतुर्विंशतिमते त्वन्या उक्ताः ।

**तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।**
**इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसाष्टमी ।।**

आसां जीवने प्रत्यक्षं पूजनम्, मृतानां त्वक्षतपुञ्जेषु इति हेमाद्रिः ।

**ब्रह्माण्याद्यास्तथा सप्त दुर्गाक्षेत्रगणाधिपान् ।**
**वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दीमुखान् पितॄन् ।।**

ब्रह्मण्याद्यास्तु–

**ब्राह्मी माहेश्वरी चैव कौमरी वैष्णवी तथा ।**
**वाराही च तथेन्द्राणी चामुण्डाः सप्त मातरः ।।** इत्युक्ताः

अत्र चौलादीनां यौगपद्ये तु

**गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत् ।**
**सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ।।**

गणशः एकानेकपुत्राणां संस्कारेषु एकदिने एकदेशकालकर्त्रैक्यादित्यर्थः । तथा–

**असकृद्यानि कर्माणि क्रियेरन् कर्मकारिभिः ।**
**प्रतिप्रयोगं नैव स्युः मातरः सगणाधिपाः ।।**

**अथ अत्राधिकारिणः**

**जातस्य जातकर्मादि क्रियाकाण्डमशेषतः ।**
**पिता पुत्रस्य कुर्वीत श्राद्धं चाभ्युदयात्मकम् ।।**

**हारीतः–**

**अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि ।**
**येभ्य एव पिता दद्यात्तानेवोद्दिश्य तर्पयेत् ।।**

**न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः ।**
**येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः ।।**

**पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः ।**
**साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे ।।**

इति सुमन्तुवाक्यं भिन्नप्रयोगवृद्धिश्राद्धपरम् । पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रः ।

**तथा कात्यायनः–**

**स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।**
**पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ।।**

सुतानां चौलादिसंस्कारेषु पिता पितृभ्यः पिण्डान् श्राद्धं । 'पिण्डदोंऽशहरस्तेषाम्' इति दर्शनात्, ओद्वहनात् विवाहपर्यन्तं दद्यात् । विवाहश्च प्रथमः ।

**नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः ।**
**अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ।।** इति स्मृतेः

तस्य पितुरभावे तत्क्रमात्, "असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः" इति यः कर्तृक्रमः तेन क्रमेण ज्येष्ठभ्रत्रादिर्दद्यादिति चन्द्रिकादयः । हेमाद्रिस्तु तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्यात् संस्कार्यपितृक्रमात् दद्यात् । न तु स्वपितृभ्यः इति व्याचख्यौ । समावर्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात् पितैव नान्दीश्राद्धं कुर्यात् । तदभावे ज्येष्ठभ्रात्रादिः । तदभावे स्वयमेव कुर्यात् । उपनयनेन कर्माधिकारस्य जातत्वात् । एवमाद्यविवाहेऽपीति पृथ्वीचन्द्रादयः । यदा तु पितरि सन्यस्ते प्रोषिते पतिते वा धर्मार्थं तत्पुत्रमन्यः संस्कुर्यात्तदा संस्कार्यपितुः पित्रादिभ्यो दद्यात् ।

**पितरो जनकस्येज्या यावद् व्रतमनाहितम् ।**
**समाहितव्रतः पश्चात् स्वान्यजेत पितामहान् ।।** इति यमोक्तेः

जीवत्पितृकस्य विशेषमाह ।

**वृद्धौ तीर्थे च सन्यस्ते ताते च पतिते सति ।**
**येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ।।**

**अथेतिकर्तव्यता ब्रह्माण्डे–**

**कुशस्थाने च दूर्वास्युर्मङ्गलस्याभिवृद्धये ।**

**छन्दोगपरिशिष्टे–**

**प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा ।**

उभयतः दैवे पित्र्ये च वैश्वदेवे द्वौ विप्रौ, पित्रादीनामेकैकस्य द्वौ द्वाविति विंशतिः । त्रिके वा द्वावित्यष्टौ विप्राः । अत्र विप्रालाभे स्त्रियोऽपि भोज्या इत्याह वृद्धवसिष्ठः–

**मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।**
**पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः ।।**

ब्राह्मे–

विप्रान् प्रदक्षिणावर्तं प्राङ्मुखानुपवेशयेत् ।

पाद्मे पित्र्ये चतुरस्रं मण्डलमिति जयन्तः । छन्दोगपरिशिष्टे–

नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् ।
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः ॥

तथा–

गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत् ।
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ॥

ज्येष्ठोत्तरकरान्युग्मान् कराग्राग्रपवित्रकान् ।
कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते ॥

पित्रादेः द्वौ द्वौ विप्रौ तयोर्दक्षिणहस्तौ संयोज्य प्रथमोपवेशितविप्रकरोपरि तन्त्रेण द्वयोरर्घ्यं दद्यादित्यर्थः । बह्वृचकारिकायां तु

दत्तार्घ्यादेकदेशः स्यादर्घ्यदानं प्रति द्विजम् ।
आवृत्तिरपि मन्त्रस्य प्रतिब्राह्मणमिष्यते ॥
प्रतिद्विजं पृथक्कुर्यान्निवीत्यर्घ्यानुमन्त्रणम् । इत्युक्तम्

मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरं स्तोत्रं मधुमन्त्रविवर्जितम् ॥
न चाश्नंस्तु जपेदत्र कदाचित्पितृसूक्तकम् ।

तथा–

सम्पन्नमिति तृप्ताः स्थप्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥

अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते ।
षष्ठ्यैव नियतं कुर्यान्न चतुर्थ्या कदाचन ॥

ब्राह्मे– पठेच्छकुनिसूक्तञ्च स्वस्तिसूक्तं शुभं तथा ।
नान्दीमुखान् पितॄन् भक्त्या साञ्जलिश्च समाह्वयेत् ॥

**दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ।**
**द्राक्षामलकमूलानि यवांश्च विनियोजयेत् ।**
**तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु वै सदा ।।**

**चतुर्विंशतिमते–**

**द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्मै विनिक्षिपेत् ।**
**एकं नाम्ना परं तूष्णीं दद्यात्पिण्डान् पृथक्पृथक् ।।**

**वसिष्ठः–**

**प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च ।**
**दत्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम् ।।**

नान्दीमुखेभ्यः पितृभ्यः स्वाहेति वा पिण्डदानमन्त्र इति वृत्तिः । अत्र पिण्डाः कृताकृताः । भविष्ये–

**पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः ।**
**वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ।।**

अत्र सङ्कल्पे विशेषः सङ्ग्रहे

**शुभार्थी प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् ।**
**न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ।।**

नामगोत्रादिनिषेधोऽप्यत्रैव न सपिण्डकश्राद्धे । छागलेयः–

**अग्नौकरणमर्घ्यं वाऽऽवाहनं चावनेजनम् ।**
**पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ।।**

तेनाऽत्र भोजनस्यैव प्रधानत्वाद्यदि विप्रस्य वमनं तदा तस्यैव पार्वणस्य पुनरावृत्तिरिति सिद्धम् । अत्राऽयं क्रमः, नान्दीश्राद्धे दैवे क्षणः क्रियताम् इति द्वौ युगपन्निमन्त्र्य ओं तथेति विप्राभ्यां युगपदुक्ते प्राप्नुतां भवन्तौ प्राप्नुवाव इति वैश्वदेववत् पित्र्ये च द्विवचनान्तेन विप्रद्वये प्रयोगं कुर्यात् । बह्वृचपरिशिष्टे द्वौ दर्भौ पवित्रे, पवित्राणि चत्वारि । शंनो देवीरित्यनुमन्त्रितासु यवानावपति ''यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् पितॄनिमान्

लोकान् प्रीणयाहि नः स्वाहा'' इति स्वाहार्घ्याः इति पृच्छति । विश्वेदेवाः इदं वोऽर्घ्यं, नान्दीमुखाः पितर इति यथालिङ्गमर्घ्यदानं गन्धादिदानं द्विर्द्विः । पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा, सोमाय पितृमते स्वाहेति । अतो देवा अवन्तु नः इत्यङ्गुष्ठग्रहणम् । पावमानीः शंवतीरैन्द्रीरप्रतिरथं च श्रावयेत् । मधुवाता ऋचःस्थाने उपास्मै गायतेति पञ्च मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च षष्ठीं भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यादिति ।

**वृद्धवसिष्ठः**–

> **तृप्तिप्रश्ने तु सम्पन्नं दैवे रुचितमित्यपि ।**
> **दधिकर्कन्धुमिश्राश्च पिण्डाः कार्या यथाक्रमम् ॥**

**कात्यायनः**–

> **त्यमूषु वाजिनमिति विप्रांश्चैव विसर्जयेत् ।**

नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने, स्वधां वाचयिष्ये इत्यस्य स्थाने, नान्दीमुखान् पितॄन् वाचयिष्ये इति, न स्वधां प्रयुञ्जीतेति । अत्र वैश्वदेवं प्रथमं कुर्यात् ।

> **आदौ वृद्धौ क्षये चान्ते श्राद्धे मध्ये तु पार्वणे ।**
> **एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥**

इति सांख्यायनपरिशिष्टात् । अत्र श्राद्धाङ्गतर्पणं नास्तीत्युक्तं प्राक् ।

## अथ जीवत्पितृकश्राद्धम्

''सपितुः पितृकृत्येषु अधिकारो न विद्यते'' इति कात्यायनोक्तेः पितरि जीवति सति श्राद्धानारम्भ एवेति पूर्वपक्षः । सपिता पितुः पितृभ्यो दद्यादिति सिद्धान्तः । ''ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्'' इति मनूक्तेः । पितुः पितृभ्यो वा दद्यात्सपितेत्यपराश्रुतिरिति कात्यायनोक्तेश्च । अयं बहुसम्मतः पक्षः । एवं जीवन् मातामहेनाऽपि ऊहेन कार्यम् ।

> **मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।**
> **मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ।** इति विष्णूक्तेः

"एवं मात्रादिकस्यापि तथा मातामहादिके" इति अग्निपुराणाच्च । दाक्षिणात्यास्तु–

**पितृवर्गे मातृवर्गे तथा मातामहस्य च ।**
**जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् ।**

इति वचनात् तद्वर्गत्याग एवेत्याहुः । एवञ्च पतितसन्यस्तपितृकादेरपि ज्ञेयम् ।

**वृद्धौ तीर्थे च सन्यस्ते ताते च पतिते सति ।**
**येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ।।**

इति षट्त्रिंशन्मतात् । सन्यस्ते जीवतीत्यर्थः । मृतस्य परमहंसस्य वार्षिकादि किमपि न कार्यमिति शूलपाण्यादयः । इदमेव युक्तम् । यत्तु हेमाद्रौ कौण्डिण्यः–

**दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपक्षिकम् ।**
**न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव च ।।**

इति तत् सन्यस्तपित्राद्यतिरिक्तविषयमिति निर्णयसिन्धुः । मैत्रायणीयपरिशिष्टे–

**उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।**
**तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ।।**

**तत्रैव–**

**महानदीषु सर्वासु तीर्थेषु च गयामृते ।**
**जीवत्पितापि कुर्वीत श्राद्धं पार्वणधर्मवत् ।।**

गयामृते इति मातृव्यतिरिक्तविषयम् ।

**अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।**
**मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ।।**

इति तत्रैवोक्तेः । गयाप्राप्तिः प्रासङ्गिकी ज्ञेया । गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेत् । इति वचनात् । तेन मृतमातृको गयायां तत्पार्वणमात्रं कुर्यात् । यदा पितुः प्रतिनिधित्वेन गयां याति, तदा यजमानस्य पितृपितामहाप्रपितामहा इत्येवं श्राद्धम् । तत्र स्वमातुः पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातृत्वेन पुनः पार्वणं कुर्यादिति

त्रिस्थलीसेतौ । तच्च सर्वस्थलेषु । अथ पितामहे जीवति मृते च पितरि पितामहं विहाय पितृप्रपितामहवृद्धप्रपितामहेभ्यो देयम् ।

**पिता यस्य तु प्रेतः स्याज्जीवेद्यदि पितामहः ।**
**पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ।।** इति मनूक्तेः ३.२२१

अयमेव सर्वसम्मतः पक्षः । एवं पूर्वयोर्मृतयोः प्रपितामहे जीवति पितृमात्रे मृते परयोर्जीवतोश्च वृद्धप्रपितामहादिभ्यो ज्ञेयम् । यत्तु विज्ञानेश्वरेणोक्तम्, पितुरेकोद्दिष्टविधिना श्राद्धं कृत्वा प्रपितामहादिभ्यः पार्वणं कुर्यादिति तत् व्युत्क्रममृतसपिण्डीकरणाभावपक्षे सपिण्डीकरणस्थानापन्नं ज्ञेयम् ।

**व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता ।** इति वचनात् ।

दर्शादौ तु पितुरेकोद्दिष्टमेव कार्यम् । ''न जीवन्तमतिददाति'' इति श्रुतेः ।

**जीवेत्पितामहो यस्य पिता चान्तरितो भवेत् ।**
**पितुरेकस्य दातव्यमेवमाहुर्मनीषिणः ।।**

इति यज्ञपार्श्वोक्तेः । ''पितामहे जीवति वै पितर्येव समापयेत्'' इति हारीतोक्तेश्च । शिष्टास्तु-

**व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता ।**
**यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ।।**

इति माधवीये स्कान्दोक्तेः व्युत्क्रममृतसपिण्डीक्रणाभावः पितृव्यादिविषय इत्याहुः । एष विधिः निषेधरूपः । मदनरत्ने क्रतुः-

**अष्टकादिषु सङ्क्रान्तौ मन्वादिषु युगादिषु ।**
**चन्द्रसूर्यग्रहे पाते स्वेच्छयाऽलभ्ययोगतः ।।**
**जीवत्पिता नैव कुर्यात् श्राद्धं काम्यं तथाऽखिलम् ।।** इति

# अथ विभक्ताविभक्तनिर्णयः

**मरीचिः—**

**बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः ।**
**सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।**
**द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥**

ज्येष्ठस्य कर्तृत्वेऽपि सर्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्यादिनियमाः ते फलिसंस्कारत्वात् सर्वैः कार्याः ।

**नारदः—**

**भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते ।**
**विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥**

**बृहस्पतिः—**

**एकपाकेन वसतां पितृदेवद्विजार्चनम् ।**
**एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥** १.२६.५

अत्र यद्यप्यविशेषश्रवणाद् ब्रह्मयज्ञसन्ध्यादिष्वप्यविभक्तानां पृथक् निषेधः प्राप्नोति । तथापि द्रव्यसाध्यश्राद्धवैश्वदेवादिष्वेव । लब्धद्रव्यस्यानेकस्वामिकत्वेनैकस्य व्ययेऽनधिकारात् । यानि तु द्रव्यासाध्यानि मन्त्रजपोपवाससन्ध्या-ब्रह्मयज्ञपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु पृथगेवाधिकारः । द्रव्यव्ययाभावे अनुमत्यनपेक्षणात् "द्रव्येण चाविभक्तेन" इत्यस्याविषयत्वात् ।

**पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनाम् ।**
**अग्निहोत्रं सुरार्चा च सन्ध्या नित्यं भवेत्तथा ॥** इति आश्वलायनोक्तेः

अग्निहोत्रशब्दोऽग्निसाध्यश्रौतस्मार्तनित्यकर्मपरः । केचित्तु अविभक्तानामपि पृथक् पाकत्वे देशान्तरे च दार्शिकाब्दिकयोः पृथक्त्वमाहुः ।

**भ्रातृणामविभक्तानां पृथक् पाको भवेद्यदि ।**
**वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक् पृथक् ॥** इति हारीतोक्तेः

**अविभक्तेन पुत्रेण पितृमेधो मृताहनि ।**
**देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च ।।** इति यमोक्तेश्चेति ।

आश्वलायनस्तु पाकपार्थक्ये पृथक्त्वम्, तदेकत्वेऽपृथक्त्वमाह ।

**वसतामेकपाकेन विभक्तानामपि प्रभुः ।**
**एकस्तु चतुरो यज्ञान् कुर्याद्वाग्यज्ञपूर्वकान् ।।**

**अविभक्ता विभक्ता वा पृथक् पाका द्विजातयः ।**
**कुर्युः पृथक् पञ्चयज्ञान् भोजनात्प्राक् दिने दिने ।।** इति

ब्रह्मयज्ञसन्ध्यास्नानतर्पणादि तूक्तहेतोः पृथगेव । देवपूजा तूक्तवचनद्वयादेकत्र पृथग्वा । दर्शग्रहणश्राद्धादि तु एकस्यैव । तीर्थश्राद्धाद्यपि युगपत्सर्वेषामविभक्तानां प्राप्तौ एकस्यैव, भेदेन प्राप्तौ भिन्नम् । गयाश्राद्धेऽप्येवम्, काम्येऽपि दानहोमादौ अन्यानुमत्यैवाधिकारः । द्रव्यासाध्यजपादौ तां विनाऽपि ।

**विभक्तैस्तु पृथक्कार्यं प्रतिसंवत्सरादिकम् ।**
**एकेनैवाविभक्तेषु कृते सर्वैश्च तत्कृतम् ।।**

संवत्सरात्पूर्वाणि मासिकान्येकत्रैव । तदाह लघुहारीतः-

**सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश ।**
**पृथक् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ।।**

सपिण्डनं मासिकोपलक्षणम् ।

**अर्वाक् संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु ।**
**उर्ध्वं सपिण्डीकरणात्सर्वे कुर्युः पृथक् पृथक् ।।** इति व्यासोक्तेः ।

उशनाः- **नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।**
**एकेनैव तु कार्याणि संविभक्तधनेष्वपि ।।**

यत्तु वृद्धवसिष्ठः-

**मासिकं च वृषोत्सर्गं सपिण्डीकरणं तथा ।**
**ज्येष्ठेनैव तु कर्तव्यमाब्दिकं प्रथमं तथा ।।** इति तन्निर्मूलम्

**अथ तीर्थश्राद्धम् तत्र यात्रायाम्,**

**सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि संयतः ।**
**प्रायश्चित्ती व्रजेत्तीर्थं पत्नीविरहितोऽपि वा ।**
**यज्ञेष्वनधिकारी च यश्च मन्त्रार्थसाधकः ।।** इति कौर्मादिवचनात्

**साग्नेः सपत्नीकस्यैवाधिकारः, तद्विधिः स्कान्दे–**

**तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे ।**
**गणेशञ्च पितॄन् विप्रान् साधून् शक्त्या प्रपूज्य च ।।**

**कृतपारणको हृष्टो गच्छेन्नियमधृक् पुनः ।**
**आगत्याभ्यर्च्य च पितॄन् यथोक्तफलभाग्भवेत् ।।**

शक्त्या प्रपूज्य भवेत् । उपवासात्प्राक् मुण्डनञ्च कार्यम् ।

**प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।**
**कचानां वपनं कुर्यात् वृथा न विकचो भवेत् ।।** इति विष्णूक्तेः

प्रायश्चित्तार्थयात्रायामेतदित्येके ।

**केचित्तु महाभारते–**

**केशश्मश्रुनखादीनां वपनं नैव शस्यते ।**
**अतो न कार्यं वपनं गयाश्राद्धार्थिना सदा ।।**

**ये भारतेऽस्मिन् पितृकार्यतत्पराः**
**सन्धार्य केशानतिभक्तिभाविताः ।**
**ऋणक्षयार्थं पितृतीर्थमागताः**
**तेषामृणं संक्षयमेष्यति ध्रुवम् ।।**

इति निषेधात् गयायात्राङ्गवपनं न कार्यमित्याहुः । वस्तुतस्तु गयाधिकरणकस्यैवायं निषेधः, न तु यात्राङ्गस्य, श्राद्धार्थिनेत्युक्तेः ।

**मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।**
**वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ।।**

इति देवलवाक्येनैकवाक्यत्वाच्च । श्राद्धं षण्णवद्वादशदेवतां वा घृतेन कार्यम् ।

**गच्छेद्देशान्तरं यस्तु श्राद्धं कुर्यात्ससर्पिषा ।।** इति विष्णुपुराणात्

यात्राङ्गवृद्धिश्राद्धोक्तेश्च । श्राद्धं च पारणदिने एव ।

**उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च ।**
**गणेशं ब्राह्मणं नत्वा भुक्त्वा प्रस्थितवान् सुधीः ।।** इति स्कान्दलिङ्गात्

**गौतमः—**

**तीर्थयात्रासमारम्भे तीर्थात्प्रत्यागमेऽपि च ।**
**वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिस्समन्वितम् ।।**

**वायवीये—**

**उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।**
**विधाय कार्पटीवेषं ग्रामं कृत्वा प्रदक्षिणम् ।।**
**ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ।।**

घृतस्य भोजनम्, तच्च क्रोशमध्ये, श्राद्धोत्तरं क्रोशगमननिषेधात् ।

**ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ।।**

गयायामेवैतन्नान्यत्रेति केचित् । हेमाद्रिस्तु मार्गवैषम्ये त्वदोषः । यात्रामध्ये तीर्थान्तरप्राप्तौ श्राद्धादि कार्यमेव । वाणिज्याद्यर्थं गते तु मुण्डनोपवासादि न कार्यं इति प्रयागसेतौ भट्टाः । तीर्थप्राप्त्यनन्तरम्,

**सरस्वती च सावित्री वेदमाता गरीयसी ।**
**सन्निधात्री भवत्वत्र तीर्थे पापप्रणाशनी ।।**

इति मन्त्रेण पूर्वमावाहनं कार्यम् ।

**पूर्वमावाहनं तीर्थे मुण्डनं तदनन्तरम् ।**
**ततः स्नानादिकं कुर्यात्पश्चाछ्राद्धं समाचरेत् ।।** इत्युक्तेः

**काशीखण्डे—**

**तीर्थोपवासः कर्तव्यः शिरसो मुण्डनं तथा ।।**

उपवासे तु–

**यदह्नि तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे ।**
**उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ।।**

अत्र–

**उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रतः ।।**

इति प्राप्तदिनेषूपवासोक्तेर्विकल्पः । मुण्डने तु स्कान्दे–

**मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ।**
**वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम् ।।**

स्मृत्यन्तरे–

**ऊर्ध्वमब्दात् द्विमासोनात्पुनस्तीर्थं व्रजेद्यदि ।**
**मुण्डनं चोपवासं च ततो यत्नेन कारयेत् ।।**
**तदा तद्वपनं शस्तं प्रायाश्चित्तमृते द्विज ।। इति वा पाठः ।**

**प्रयागे प्रतियात्रं तु योजनत्रय इष्यते ।**
**क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते ।।**

स्कान्दे–

**उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः ।**
**केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ।।**

इदं वपनं प्रयागे सधवानामपि समूलं भवतीति भट्टाः । युक्तं तु–

**सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलद्वयम् ।**
**एवमेव हि नारीणां शस्यते वपनक्रिया ।।** इत्युक्तेः

अकृतचूडानामपि कार्यमेव । तदपि प्रयागे एव । यतिभिस्तु तीर्थेऽपि ऋतु-सन्धिष्वेव कार्यं न अन्यदा ।

**कक्षोपस्थशिखावर्ज्यं ऋतुसन्धिषु वापयेत् ।।** इति स्मृतेः

इदं जीवत्पितृकेणापि कार्यम् । न च ''मुण्डनं पिण्डदानञ्च'' इति दक्षवचनेन निषेधः ।

**विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।**
**यो वापयति लोमानि स पुत्रः पितृघातकः ।।**

इति स्मृत्या वपनसङ्कोचात्, तदपि प्रयागे प्रतियात्रम् । अन्यतीर्थे आद्ययात्रायां एवेति केचित् । तीर्थदर्शनानन्तरं स्नात्वा वपनं कुर्यात् । ''गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम्'' इत्युक्तेः । वपनानन्तरं स्नानश्राद्धादि ।

**पूर्वमावाहनं तीर्थे मुण्डनं तदनन्तरम् ।**
**ततः स्नानादिकं कुर्यात्पश्चाच्छ्राद्धं समाचरेत् ।।** इत्युक्तेः

आदिशब्देन तर्पणम् । काशीखण्डे-

**अकालेऽप्यथवा काले तीर्थे श्राद्धं च तर्पणम् ।**
**अविलम्बेन कर्तव्यं नैव विघ्नं समाचरेत् ।।**

मात्स्ये ''पितृणां चैव तर्पणम्'' इति तुरीयः पादः । तत्र देवता महालयनिर्णये उक्ताः ।

**अत्र विशेषः-**

**यद्येको भिन्नसम्बधाद्वर्तते चेद्द्वयोरपि ।**
**तत्तत्स्थाने नियुञ्जीयात्तीर्थादौ चैव तर्पणम् ।।**

तीर्थादावित्यत्र आदिशब्देन महालयो ग्राह्यः ।

**न परीक्ष्यो द्विजस्तीर्थे अन्नार्थी भोज्य एव सः ।।**

**शङ्खदेवलौ-**

**तीर्थद्रव्योपपत्तौ च न कालमवधारयेत् ।**
**पात्रं च ब्राह्मणं प्राप्य सद्यः श्राद्धं समाचरेत् ।।**

भारते- **भुक्तो वाप्यथवाऽभुक्तो रात्रौ वा यदि वा दिवा ।**
**पर्वकालेऽथवाऽकाले शुचिर्वाप्यथवाऽशुचिः ।।**

**यदैव दृश्यते तत्र नदी त्रिपथगा प्रिय ।**
**प्रमाणं दर्शनं तस्मान्न कालस्तत्र कारणम् ।।**

आशौचेऽपि कार्यम् ।

**विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।**
**न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥** इति पैठीनसिस्मृतेः

तदानीमकरणे तु आशौचान्त एव कुर्यात् ।

**प्रभासखण्डे–**

**न वारं न च नक्षत्रं न कालस्तत्र कारणम् ।**
**यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम् ॥** मलमासेऽपि कार्यम्

**नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे ।**
**तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव च ॥** इति बृहस्पतिस्मृतेः

एतच्चाशौचे कृतभोजनस्य रात्रौ स्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तावामहेम-श्राद्धविषयं ग्रहणादिवत् नतु बुद्धिपूर्वमाशौचादौ तीर्थप्राप्तिः कार्या । मलमासे मासद्वये तीर्थश्राद्धं कार्यमिति चन्द्रिकायाम् ।

**अथेतिकर्तव्यता देवीपुराणे–**

**श्राद्धञ्च तत्र कर्तव्यमर्घ्यावाहनवर्जितम् ॥**

**हेमाद्रौ–**

**अर्घ्यमावाहनञ्चैव द्विजाङ्गुष्ठनिवेशनम् ।**
**तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥**

**विष्णुस्मृतौ–**

**जलपात्रं तथा सूक्तं प्रायश्चित्तार्थमेव च ।**
**न कुर्यात्तैर्थिके श्राद्धे कुर्यात्प्रत्याब्दिकादिषु ॥**

**विकिरावाहनोच्छिष्टपिण्डार्घ्यं तृप्तिवाचनम् ।**
**अङ्गुष्ठस्पर्शनञ्चान्ने तीर्थश्राद्धे विवर्जयेत् ॥**

भविष्ये– **आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते ।**
**आवाहनं न तीर्थे स्यान्नार्घ्यदानं तथा भवेत् ॥**
**आहूताः पितरस्तीर्थे कृतार्घ्याः सन्ति वै यतः ।**

अग्नौकरणञ्च नेति रत्नावल्याम् ।

**पाद्मे–** **तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः ।**
**आमान्नेन हिरण्येन कन्दमूलफलैरपि ॥**

**पिण्डद्रव्याणि देवीपुराणे–**

**सक्तुभिः पिण्डदानञ्च संयावैः पायसेन वा ।**
**कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा ॥**

पिण्डानां तीर्थे प्रक्षेप एव, नाऽन्यथा । एतच्च विधवयाऽपुत्रया कार्यम् । ''सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन'' इति स्मृतेः ।

**एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु ॥** इति पाद्मे

जीवत्पितृकेणाऽपि कार्यमित्युक्तं प्राक् । यतिना तु न कार्यम् ।

**न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्डोदकक्रियाम् ।**
**त्यक्तं सन्यासयोगेन गृहं धर्मादिकं व्रतम् ॥**
**गोत्रादिचरणं सर्वं पितृमातृकुलं धनम् ॥** इति स्मृतेः

**गयायां तूक्तं वायवीये–**

**दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।**
**दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते ॥**

**गयायां [१]मुण्डपृष्ठे च कूपे यूपे वटे तथा ।**
**दण्डं प्रदर्शयेद्भिक्षुः पितृभिः सह मुच्यते ॥**

**प्रभासखण्डे–**

**तीर्थे चेत्प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्लभः ।**
**दशांशमार्जितं दद्यादेवं कुर्वन्न हीयते ॥**

**तीर्थश्राद्धे गयाश्राद्धे प्रत्यब्दे च महालये ।**
**परेऽहनि द्विजः कुर्यात्तर्पणं तिलसंयुतम् ॥** इति स्मृतिसङ्ग्रहे, इति दिक्

**॥ इति श्राद्धप्रकरणम् ॥**
**॥ इति तृतीयः परिच्छेदः ॥**

---

१ धर्मपृष्ठे इति निर्णयसिन्धुपाठः ।

# अथ चतुर्थः परिच्छेदः

## अथ अशौचम्

**मरीचिः–**

**आचतुर्थात् भवेत्स्रावः पातः पञ्चमषष्ठयोः ।**
**अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ।।**

**स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् ।**
**पाते मातुर्यथा मासं सपिण्डानां दिनत्रयम् ।।**

अत्र मासत्रये त्रिरात्रमित्यस्यानुवादः । रजस्वलात्वेनैव तत्सिद्धेः । यद्यप्यनेन चतुर्मासेऽपि त्रिरात्रं प्राप्नोति । तथापि–

**षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि ।**
**तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ।।** इत्यादिपुराणात्

**रात्रिभिर्मासतुल्याभिः गर्भस्रावे विशुद्ध्यति ।।** इति मनूक्तेः

चतूरात्रं ज्ञेयम् । अत्र सपिण्डानां स्नानम् ।

**सद्यः शौचं सपिण्डानां गर्भस्य पतने सति ।।** इति तत्रैवोक्तेः सद्यःपदं स्नानपरम् । एवमग्रेऽपि । गर्भस्रावे स्नानमात्रं पुरुषस्येति वृद्धवसिष्ठोक्तेः । पुरुषस्येति सपिण्डोपलक्षणम्, पुर्वोक्तवचनात् । मदनपारिजातस्तु आचतुर्थमासं सपिण्डानां न स्नानम् । किन्तु पुंस एव । पाते त्रिदिनं निर्गुणपरम् । गुणवतस्तु ।

**अजातदन्ते तनये शिशौ गर्भच्युते तथा ।**
**सपिण्डानां तु सर्वेषामेकरात्रमशौचकम् ।।** इति यमोक्तेः

एकाह इत्याह । सप्तमासादि दशाहम् । एतत्सर्ववर्णविषयम् । "तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च" इति व्याघ्रोक्तेः ।

**पराशरः–**

**जाते विप्रो दशाहेन द्वादशाहेन भूमिपः ।**
**वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ।।**

**संवर्तः–**

**जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।**
**माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ।।**

अत्र पुत्रपदेन कन्यापि ग्राह्या । 'पौत्री मातामहस्तेन' इति कन्यायामपि पुत्रपदस्य प्रयोगात् । इदं सर्ववर्णसमम् ।

**सूतिका सर्ववर्णेषु दशरात्रेण शुद्ध्यति ।**
**ऋतौ च न पृथक्शौचं सर्ववर्णेष्वयं विधिः ।।** इति प्रचेतसोक्तेः

**अङ्गिराः–**

**सूतके सूतिकावर्ज्यं संस्पर्शो न निषिद्ध्यते ।**
**संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ।।**

**कर्मानधिकारमाह पैठीनसिः–**

''सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननम्'' इदं अशौचोत्तरम् । एतच्च श्रौतभिन्नपरम् ।

**अथ मृताशौचम् । हारीतः–**

जातमृते मृतजाते वा सपिण्डानां दशाहम्, दशाहमिति स्वाशौचपरम् । जातमृते नालच्छेदोर्ध्वम् ।

**यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।**
**छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ।।** इति जैमिन्युक्तेः

**नालच्छेदात्प्राक् मृतौ तु बृहन्मनुः–**

**जीवन् जातो यदि ततो मृतः सूतक एव तु ।**
**सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ।।** इति

इदं च प्रसवाशौचमेव, शावनिमित्तं स्नानमात्रमेव ।

''प्राक् नामकरणात्सद्यः शौचम्'' इति शङ्खोक्तेः ।

**दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।**
**शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ।।** इति बृहन्मनूक्तेः

**यत्तु विष्णुः-**

**अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति ।**
**सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रिया ।।**

इति तदपि प्रेताशौचनिषेधार्थम् । न तु सद्यस्त्वपरम् । नामोत्तरं दन्तोत्पत्तेः प्राक् दाहे सति अहः-

**अदन्तजाते तनये शिशौ गर्भच्युते तथा ।**
**सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ।।** इति यमोक्तेः

दाहाभावे तु स्नानमात्रम् । ''अदन्तजाते प्रेते सद्य एव नास्याग्निसंस्कारः'' इति विष्णुना दाहाभावे तदुक्तेः । ''आदन्तजन्मनः सद्यः'' इति याज्ञवल्कीयाच्च । दाहविकल्पं चाह लौगाक्षिः ।

**तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।**
**सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयम् ।।**

अन्यत्र कृतचूडे, तृतीयवर्षरूपकालोपलक्षणार्थमिदमिति मेधातिथिः ।

**मनुरपि-**

**नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।**
**जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ।।** इति

उदकं दाहोपलक्षणम् । दन्तोत्पत्त्यनन्तरं प्राक् त्रिवर्षान्तात् मृतेऽहः । ''दन्तजातेऽप्यकृतचूडे त्वहोरात्रेण शुद्धिः'' इति विष्णूक्तेः । त्रिवर्षोर्ध्वं कृते चूडे वा प्रागुपनयनात् त्र्यहम् ।

**यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।**
**तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेत् ।।** इत्यङ्गिरसोक्तेः ।

त्रिवर्षात् प्राक् चूडाभावे अग्निदाने त्र्यहस्तदभावे विष्णूक्तेः एकाह इति माधवः। प्रथमवर्षादौ कृतचूडस्य सदा त्र्यहः ।

**निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ।।**

इति मनूक्तेः एतत्सर्वं प्रागुक्तं सपिण्डानाम् । मातापित्रोस्तु दशाहोर्ध्वं मृते सर्वत्र त्रिरात्रम् । "बालानामजातदन्तानां त्रिरात्रेण शुद्धिः" इति कश्यपोक्तेः । "बैजिकादभिसम्बन्धादनुरुध्यादघं त्र्यहम्" (५.६३) इति मनूक्तेश्च । एवं कन्यास्वपि । तास्वप्यजातदन्तासु पित्रोरेकरात्रमिति माधवः । कन्यासु चौलात् प्राक् मृते स्नानम्

**अचूडायां तु कन्यायां सद्यः शौचं विधीयते ।** इत्यापस्तम्बोक्तेः

चौलोत्तरं वाग्दानात्पूर्वं तास्वेकाहः,

**अविशेषेण वर्णानामर्वाक्संस्कारकर्मणः ।**
**त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते ।।**

इत्यंगिरसा त्रिरात्रविषये अह्नो विधानात् । अत्र कश्चित्-

**द्विसन्ध्यं सद्य इत्युक्तं त्रिसन्ध्यमहरुच्यते ।**
**अचूडायां तु कन्यायां सद्यःशौचं विधीयते ।।**

इति सद्यःशब्द अहःपर इत्याह । तदुत्तरं प्राग्विवाहात् "अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्" इति वचनात् भर्तृकुले, पितृकुले सप्तपुरुषावधि त्रिरात्रम् ।

**अवारिपूर्वं प्रत्ता तु या नैव प्रतिपादिता ।**
**असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ।।** इति मरीच्युक्तेः

अथ अनुपनीते किञ्चिदुच्यते । नाम्नः पूर्वं खननमेव, तदूर्ध्वं वर्षत्रयात्पूर्वं चौलाभावेऽन्युदकदानविकल्पः ।

**नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ।**
**जातदन्तस्य वा कुर्युः नाम्नि वापि कृते सति ।।** इति मनूक्तेः

उदकक्रियासाहचर्याद्दाहोपलक्षणम् । खनने तु नान्यदौर्ध्वदेहिकम् । "ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः" (३.१) इति याज्ञवल्क्योक्तेः । उदकं अन्त्यकर्मपरं इत्यपरार्कः ।

**ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि ।**
**यमगाथां गायमानो यमसूक्तमनुस्मरन् ।।**

माधवीये–

स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथ वा ।
अजातदन्तो मासैर्वा मृतः षड्भिर्गतैर्बहिः ।।

वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तं तु काष्ठवत् ।
खनित्वा शनकैर्भूमौ सद्यःशौचं विधीयते ।।

कृतचूडस्य तु त्रिवर्षात् प्रागूर्ध्वं वा अग्न्युदकदानं नियतम् । वर्षत्रयादूर्ध्वमकृतचूडस्य नियतम् । वर्षत्रयोर्ध्वमुपनयनात्पूर्वं च तूष्णीमग्न्युदकदानम् ।

तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।। इति पूर्वोक्तलौगाक्षिस्मृतेः

याज्ञिकनिबन्धे विशेषः–

शिशुरादन्तजननाद्बालः स्याद्यावदाशिखः ।
कथ्यते सर्वशास्त्रेषु कुमारो मौञ्जिबन्धनात् ।।

आपञ्चवर्षात्कौमारं पौगण्डो नवहायनः ।।

तथा–

गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते ।
परं च पायसं क्षीरं दद्याद्बालविपत्तितः ।।

तथा–

यत्र प्रमीयते बालः तत्र प्रायः प्रदीयते ।
किञ्चित्समानवयसां संस्कृत्यान्नं यथाविधि ।।

कुमाराणाञ्च बालानां भोजनं वस्त्रवेष्टनम् ।
यच्चोपजीवते बालः तत्तद्विप्राय दीयते ।।

तथा–

भूमिनिक्षेपणं बाले आवर्षद्वयमाशिखम् ।
ततः परं खगश्रेष्ठ देहदाहो यथाविधि ।।

अचूडेऽप्यूर्ध्वं खनननिवृत्त्यर्थं आवर्षद्वयमिति । प्रागपि कृतचूडस्य निवृत्यर्थम् आशिखमिति ।।

## अथ जात्याशौचम्

तच्च द्विजपुंसामुपनयनोर्ध्वं प्रवर्तते ।

**त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ।**
**क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।।**
**त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्तिनः ।।** इति याज्ञवल्क्योक्तेः

आश्वलायनः-"द्वादशरात्रं महागुरुषु दानाध्ययने वर्जयेरन्" इति । इदं तु पुत्राणामिति ज्ञेयम् । आशौचमपि यावदुक्तनिषेधो वा, अस्पृश्यतामात्रम् वा, न तु कर्मानधिकारः । एकादशाहान्ते वैश्वदेवोक्तेः । एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते इति । महागुरवस्तु शुद्धितत्त्वे- "त्रयः पुरुषस्य अतिगुरवो भवन्ति, माता पिता आचार्यश्च" इति विष्णूक्तेः पित्रादयः महागुरव इति । भर्ताप्युक्तो रामायणे-

**पतिर्बन्धुर्गतिर्भर्ता दैवतं गुरुरेव च ।।**

**अग्निपुराणे-**

**सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।**
**समानोदकभावस्तु निवर्तेत चतुर्दशे ।**
**जन्मनामस्मृतेर्वैके तत्परं गोत्रमुच्यते ।।**

**बृहस्पतिः-**

**दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके ।**
**त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः ।।**

स्त्रीणां तु विवाहोर्ध्वं जात्याशौचम् ।

**वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः ।।** इत्युक्तेः

"दत्तानां भर्तुरेव हि । स्वजात्युक्तमाशौचं स्यान्मृतके जातके तथा" इति माधवीये, ब्राह्माच्च । मेधातिथिस्तु "त्रिरात्रमाव्रतादेशात्" इत्यत्र व्रतं कालोपलक्षणार्थम्, स च कालः स्वकीयः सर्वेषां चाष्टमवर्षरूपः । तेन चतुर्णामपि वर्णानां उपनयनाभावेऽपि अष्टमादूर्ध्वं पूर्णमेवाशौचम् । तथापि "प्रागष्टमाच्छिशवः प्रोक्ताः" इति स्मृत्यन्तरात् ऊर्ध्वं सम्पूर्णमर्वाक् त्रिरात्रमित्याह अङ्गिराः-

**सर्वेषामेव वर्णानां सूतके मृतके तथा ।**
**दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ।।**

**हारीतश्च–**

**दशाह एव विप्रस्य सपिण्डमरणे सति ।**
**कल्पान्तराणि कुर्वाणः कलौ भवति किल्बिषी ।।**

दत्तक्रीतकृत्रिमादिपुत्रेषु अहीनवर्णगासु स्त्रीषु च सपिण्डत्वेऽपि प्रसवे मरणे च पूर्वापरपित्रोर्भर्त्रोश्च त्रिरात्रमेवाशौचं न दशाहादि ।

**अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।**
**परपूर्वासु भार्यासु प्रसूतासु मृतासु च ।।** इति

त्रिरात्रानुवृत्तौ विष्णूक्तेः । सपिण्डानां तु एकाहः ।

**परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ।**
**भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु सपिण्डतः ।।** इति हारीतोक्तेः

**सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।**
**एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ।।** इति मरीच्युक्तेश्च

यत्तु याज्ञवल्क्यः– "अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च" इति एकाहमाह, तदसन्निधौ ज्ञेयम् । यदा पितुरेकाहस्तदा सपिण्डानां स्नानम् ।

**अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।**
**गोत्रिणः स्नानशुद्धाः स्युः त्रिरात्रेणैव तत्पिता ।।** इति प्रजापत्युक्तेः ।

पितेति वोढुरुपलक्षणम्, तथोपक्रमात् । पितृमरणेऽपि दत्तकादीनां त्रिरात्रम् । ब्राह्मे–

**दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च ।।** इति उपक्रम्य
**सूतके मृतके चैव त्र्यहाशौचस्य भागिनः ।।** इत्युक्तेः

दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिण्डानामेकाहः । बीजिनश्चेति गौतमेन साप्तपौरुषं सापिण्ड्योक्तेः । सपिण्डानां चैकाहस्योक्तत्वात् सपितृदत्तौरसयोः

भ्रात्रोस्तत्पुत्रयोः सपिण्डे तु पुत्रीकृते दशाहः । तत्र आकांक्षाभावात् सपिण्डत्वेन दशाहप्राबल्याच्च ।

**ऊढकन्यानां तु विष्णुराह–**

संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे तु पितृगृहे तदैकरात्रं त्रिरात्रं वा इति । प्रसवे एकरात्रं मरणे त्रिरात्रमिति विज्ञानेश्वरः । माधवस्तु प्रसवे त्रिरात्रं पित्रोः एकरात्रं भ्रात्रादिबन्धुवर्गस्य–

**दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा ।**
**तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः ।।**

इति ब्राह्मोक्तेः इत्याह । भ्रातुः प्रसवे एकाहः मृतौ त्रिरात्रमिति केचित्, युक्ता तु पक्षिणी परस्परं मृतौ । ''भ्रातृभगिन्योः पक्षिणी भवेत्'' इति ब्राह्मात् । भ्रातृभिन्ना-नामेकाहः, वर्गोक्तेः, इतरेषां यथाविधि इति वक्ष्यमाणवचनाच्च ।

**कल्पतरौ–**

**दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा ।**
**म्रियेत वा तदा तस्याः पिता शुद्ध्येत् त्रिभिर्दिनैः ।।** इति

पतिगृहे प्रसवे तु पित्रादीनां च आशौचं नास्ति । मृतौ पित्रोः त्रिरात्रमस्त्येव । माधवस्तु इदं त्रिरात्रं जातदन्तपरम्, दन्तोत्पत्तेः प्राक् एकरात्रं पित्रोः,

**सद्यस्त्वप्रौढकन्यायां प्रौढायां वासराच्छुचिः ।**
**प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेत् ।।** इति पुलस्त्योक्तेः ।

अन्यत्र कन्यामृतौ पित्रोः पक्षिणीत्याह । षडशीतावपि–

**पितृगेहादतोऽन्यत्र यदि पुत्री प्रमीयते ।**
**पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चयः ।।** इति

ग्रामान्तरे इयमिति स्मृत्यर्थसारे । भ्रातुस्तु पक्षिणी–

**श्वशुरयोर्भगिन्याश्च मातुलान्याश्च मातुले ।**
**पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ।।** इति बृहस्पतिस्मृतेः ।

**कौर्मे–**

> **आदन्तात्सोदरे सद्य आचूडादेकरात्रकम् ।**
> **आप्रदानात् त्रिरात्रं स्याद्दशरात्रमतः परम् ।।**

**पित्रोर्मृतौ स्त्रीणां त्रिरात्रम्**

> **पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् ।**
> **त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ।।** इति बृहन्मनूक्तेः

इदं दशाहान्तः । ऊर्ध्वं तु पक्षिणी । भ्रातुः भगिनीगृहे, तस्या वा तद्गृहे मृतौ त्रिरात्रम्, अन्यत्र तु पक्षिणीति षडशीतावुक्तम् ।

**ब्राह्मेऽपि–**

> **परस्परं मृतौ भ्रातृभगिन्योः पक्षिणी भवेत् ।**
> **मातुलाशौचवत्पुत्र्याः पितृव्याशौचमिष्यते ।।** इति

शिष्टास्त्वस्य निर्मूलत्वात् पितृव्ये स्नानमात्रमाहुः । दौहित्रभागिनेययो-रुपनीतयोस्त्रिरात्रम्, अनुपनीतयोः पक्षिणी ।

> **संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।**
> **संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ।।**

इति वृद्धमनूक्तेः । मातुलादौ सन्निधिविदेशाभ्यां पक्षिण्येकाहयोर्व्यवस्था ।

**मनुः–**

> **त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।**
> **तस्य पुत्रे च पत्न्याश्च दिवारात्रमिति स्थितिः ।।**

श्रोत्रिये स्वगृहे मृते त्रिरात्रम्, "श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्" इति स्मृतेः इति माधवः । एकग्रामीणे त्वेकाहः । ऋत्विजि बह्वल्पकालश्रौतस्मार्त-याजनपरे त्रिरात्रैकरात्रे ज्ञेये । शिष्ये स्वोपनीते त्र्यहः । शिष्यसतीर्थसब्रह्मचारिषु क्रमेण त्रिरात्रं अहोरात्रं एकरात्रं एकाहः इति माधवीये बौधायनोक्तेः । अन्यत्र मनुः–

> **मातुले पक्षिणीं रात्रिं शिष्यर्त्विक्बान्धवेषु च ।।** इति

बन्धुत्रयम्, आत्मपितृष्वसृमातृष्वसृमातुलपुत्राः, पितुः पितृष्वसृमातृष्वसृमातुल-पुत्राः, मातुः पितृष्वसृमातृष्वसृमातुलपुत्राश्चेति विज्ञानेश्वरः । अत्र पक्षिणी । पितृष्वस्रादिकन्यानामूढानां त्वेकाहः, ''तद्बन्धुवर्गस्त्वेकेन'' इति ब्राह्मात् । असपिंडे स्ववेश्मनि मृते एकरात्रम् । प्रधानगृहे मृतौ-

**गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन ।**
**तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ।।**

इत्यङ्गिरसोक्तेरिति माधवः ।

**त्रिरात्रमासपिण्डेषु स्वगृहे संस्थितेषु च ।**

इति कौर्ममतेन व्याख्यातम् ।

**यमः**:-

**द्विजस्य मरणे वेश्म विशुद्ध्यति दिनत्रयात् ।।**

**बृहद्विष्णुः**-

**ग्राममध्यगतो यावच्छवस्तिष्ठति कस्यचित् ।**
**ग्रामस्य तावदाशौचं निर्गते शुचितामियात् ।।**

गृहे पश्वादौ मृतेऽप्येवम् । यत्तु माधवीये प्रचेतसा मातृष्वस्रादिषु त्रिरात्रमुक्तम्-

**मातृष्वसृमातुलयोः श्वश्रूश्वशुरयोर्गुरोः ।**
**मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति ।।** इति

गुरुराचार्यः, ऋत्विक् कुलागतः, तत् स्वगृहे मृतौ ज्ञेयम् । श्वशुरयोरन्यत्र मृतावपि सन्निधौ त्रिरात्रम्, असन्निधौ पक्षिणी, देशान्तरे एकरात्रं वक्ष्यमाण-विष्णूक्तेरिति माधवः । मातृष्वस्रादिषु तु अन्यत्र

**पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्** । इति वृद्धमनूक्तेः

**यत्तु वृद्धमनुः**-

**भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते ।**
**मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ।**
**शालके तत्सुते चैव सद्यःस्नानेन शुद्ध्यति ।।**

इति तद् भ्रातृदौहित्रादौ देशान्तरे, शालकसुतजामात्रोः स्वदेशे, शालके तु स्वदेशे एकाहः, ''आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वश्रूश्वशुर्यसहाध्यायि-शिष्येषु एकरात्रम् । श्वशुर्यः=शालकः । देशान्तरे स्नानम्, श्वशुरयोर्देशान्तरे एकाहः इति जाबालः ।

**एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् ।**

सर्वत्र मूल्याभावेऽपि क्रियाकर्तुर्दशाहः ।

**गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।**
**प्रेताहारैः समं तत्र दशरात्रेण शुद्ध्यति ।।** इति मनूक्तेः

शिष्यः इत्युपलक्षणम् ।

**निरन्वये सपिण्डे तु मृते सति दयान्वितः ।**
**तदाशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियाम् ।।**

इति माधवीये ब्राह्मोक्तेः ।

**दिवोदासीये–**
**सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।**
**सोऽपि कुर्यान्नवश्राद्धं शुद्ध्येच्च दशमेऽहनि ।।**

अत्र यत्रैकविषये पक्षिण्येकाहादि पक्षद्वयमुक्तं तत्र सन्निधिविदेशमैत्र्यादिकृता व्यवस्था ज्ञेया । युद्धे मृतस्य स्नानम् ।

**उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च ।**
**सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः ।।** इति मनूक्तेः

यज्ञो अन्त्यकर्म सर्वं तदैवेत्यर्थः । यत्तु पराशरः-

**आहवेऽपि हतानाञ्च एकरात्रमशौचकम् ।।**

इति, तद्युद्धक्षतेन कालान्तरे मृते ज्ञेयम् । असन्निधौ स्नानमिति माधवः ।

व्याघ्रः– **क्षतेन म्रियते यस्तु तस्याशौचं भवेद् द्विधा ।**
**आसप्ताहात् त्रिरात्रं स्याद्दशरात्रमतःपरम् ।।**

**शस्त्राघाते त्र्यहादूर्ध्वं यदि कश्चित्प्रमीयते ।**
**आशौचं प्राकृतं तस्य सर्ववर्णेषु नित्यशः ।।**

शस्त्राघाते क्षतं विना ।। शवस्पर्शे तु हारीतः- "शवस्पृशो ग्रामं न प्रविशेयुः आनक्षत्रदर्शनात् रात्रौ चेत् आदित्यस्य" ।।

**अथ निर्हाराद्यैराशौचम्-**

स्नेहेन सवर्णनिर्हारे तदन्नाशने तद्गृहवासे च दशाहः । तदन्नानशने तद्गृहवासे त्र्यहः । गृहावासे तदन्नाभक्षणे चैकाहः । तदाह मनुः-

**असपिण्डं द्विजं प्रेतं विप्रान्निर्वृत्य बन्धुवत् ।**
**विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ।।**

**यदन्नमत्ति तेषां तु दशाहेनैव शुद्ध्यति ।**
**अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ।।** इति

[1]भृतिग्रहणनिर्हारे दाहे च तज्जात्याशौचम् ।

**यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः ।**
**दशाहेन द्विजः शुद्ध्येद् द्वादशाहेन भूमिपः ।**
**मासार्धेन तु वैश्यस्तु शूद्रो मासेन शुद्ध्यति ।।** इति कौर्मोक्तेः

[2]विजातीयनिर्हारे तु विजातीयमाशौचम्, भृतिग्रहे द्विगुणम् ।

**अवरश्चेद्वरं वर्णं वरो वाऽप्यवरं यदि ।**
**वहेच्छवं तदाशौचं द्रव्यार्थे द्विगुणं भवेत् ।।** इति व्याघ्रोक्तेः

दाहेऽप्येवम् । यत्तु ब्राह्मे-

**योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।**
**आशौचं तु भवेत्तस्य प्रेतजातिसमं नृप ।।**

इति तदापदि ज्ञेयम् । सोदकनिर्हारे तु दशाह इति माधवः । धर्मार्थं अनाथसवर्णहरणे क्रियाकरणे च द्विजस्यानन्तयज्ञफलम् । "स्नानं प्राणायामोऽग्निस्पर्शश्च" इति माधवीये । अग्निदेऽप्येवम्-

---

१ "भृतिग्रहणेन निर्हारे" इति निर्णयसिन्धुः ।
२ "विजातीयनिर्हारे तु शवजातीयमाशौचम्" इति निर्णयसिन्धुः ।

**प्रेतसंस्पर्शसंस्कारैः ब्राह्मणो नैव दुष्यति ।**
**वोढा चैवाऽग्निदाता च सद्यः स्नात्वा विशुद्ध्यति ।।**

इति वृद्धपराशरोक्तेः ।

**अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।**
**पदे पदे यज्ञफलं मनःपूर्वं लभन्ति ते ।।**

**न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् ।**
**जलावगाहनात्तेषां सद्यःशौचं विधीयते ।।** इति तत्रैवोक्तेः

मातुलत्वादिसम्बन्धे त्रिरात्रम् । ''असम्बन्धिद्विजशवं वहित्वा दहित्वा च सद्यः शौचं सम्बन्धे त्रिरात्रम्'' इति पैठीनसिस्मृतेः ।

वृद्धात्रिः– **सूतकाद् द्विगुणं शावं शावाद् द्विगुणमार्तवम् ।**
**आर्तवाद् द्विगुणा सूतिस्ततोऽपि शवदाहकः ।।**

अत्र पूर्वेण नोत्तरनिवृत्तिरित्यर्थः ।।

देवलः– **ब्रह्मचारी न कुर्वीत शवदाहादिकक्रियाम् ।**
**यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च ।।**

**याज्ञवल्क्यः–**

**आचार्यपित्रूपाध्यायान्निर्हृत्याऽपि व्रती व्रती ।।**

अनुगमने तु सपिण्डे न दोषः ।

**विहितं हि सपिण्डानां प्रेतनिर्हरणादिकम् ।**
**तेषां करोति यः कश्चित्तस्याधिक्यं न विद्यते ।।** इति देवलोक्तेः

**दोषः स्यात्त्वसपिण्डस्य तत्रानाथक्रियां विना ।।**

इति हारीतोक्तेश्च । समोत्कृष्टवर्णे तु माधवीये कण्वः–

**अनुगम्य शवं बुद्ध्या स्नात्वा स्पृष्ट्वा हुताशनम् ।**
**सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुद्ध्यति ।।** इति

हीनवर्णे तु क्षत्रियेऽहः, वैश्ये पक्षिणी, शूद्रे त्रिरात्रं इत्यादि ।

**अथ रोदने विज्ञानेश्वरः-**

**मृतस्य बान्धवैः सार्धं कृत्वा तु परिदेवनम् ।**
**वर्जयेत्तदहोरात्रं दानश्राद्धादिकर्म च ।।**

इति वचनात् सर्वत्रैकरात्रमाह । अथाशौचान्नभक्षणे विष्णुः- ब्राह्मणादीनां अशौचे यः सकृदेवान्नमश्नाति तस्य तावदाशौचं यावत्तेषामाशौचव्यपगमे प्रायश्चित्तमिति । अज्ञाने त्वङ्गिराः-

**अन्तर्दशाहे भुक्त्वान्नं सूतके मृतकेऽपि वा ।**
**अस्याशौचं भवेत्तावद्यावदन्नं व्रजत्यधः ।।**

प्रायश्चित्तं त्वमत्या विप्रस्य एकदिनोपवासः, दश प्राणायामाः, पञ्चगव्याशनञ्च । अभ्यासे द्विगुणम् । आपदि तु प्राणायामशतं, [१]अष्टसहस्रं गायत्रीजपश्च । मत्यापदि तु सवर्णाशौचे त्रिरघमर्षणमित्यादि ज्ञेयम् ।

**अथ रात्रौ जनने मरणे**

रात्रिं त्रिभागं कृत्वाऽऽद्यभागद्वये चेत् पूर्वदिनम् । अन्त्ये तूत्तरमिति मिताक्षरायाम्। सर्वं चाशौचमाहिताग्नेर्दाहं तद्भिन्नस्य मरणमारभ्य ज्ञेयम् ।

**अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु ।**
**दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ।।** इति पैठीनसिस्मृतेः ।

साग्निः=आहिताग्निः । ''आहिताग्निश्चेत् प्रवसन् म्रियेत पुनःसंस्कारं कृत्वा शववदाशौचम्'' इति वासिष्ठे विशेषोक्तेः ।

**दाहादेव तु कर्तव्यं यस्य वैतानिको विधिः ।।** इति ब्राह्माच्च

**अथातिक्रान्ताशौचम्**

तत्राशौचमध्ये जननादौ ज्ञाते तच्छेषेण शुद्धिः ।

**विगतं तु विदेशस्थं श्रुणुयाद्यो ह्यनिर्दशम् ।**
**यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ।।** इति मनूक्तेः

स्मृत्यर्थसारेऽपि । जनने मरणे वा प्रथमदिनादूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिरिति । दशाहादूर्ध्वं ज्ञाते तु वृद्धवसिष्ठः-

१ पञ्चशतं अष्टशतं इत्यधिकः पाठः निर्णयसिन्धौ ।

**मासत्रये त्रिरात्रं स्यात् षण्मासात्पक्षिणी तथा ।**
**अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुद्ध्यति ।।**

जनने त्वतिक्रान्ताशौचं नास्त्येव ।

**नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि ।।** इति देवलोक्तेः

पितुः स्नानं तत्रापि भवत्येव ।

**निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।**
**सवासा जलमाप्लुत्य शुद्धो भवति मानवः ।।** इति मनूक्तेः

तच्चातिक्रान्ताशौचं दशाहजात्याशौचविषयम्। नत्वनुपनीतादिनिमित्तकं त्रिरात्रादौ,

**उपनीते तु विषमं तस्मिन्नेवातिकालजम् ।।** इति व्याघ्रोक्तेः

''निर्दशं ज्ञातिमरणम्'' । ''अतिक्रान्ते दशाहे तु'' इति मनूक्तेश्च । माधवीये देवलस्तु-

**आ त्रिपक्षात् त्रिरात्रं स्यात् षण्मासात्पक्षिणी ततः ।**
**परमेकाहमावर्षादूर्ध्वं स्नातो विशुद्ध्यति ।।** इत्याह

तत्रापदनापद्विषयत्वेन व्यवस्था । इदञ्चैकदेशे, देशान्तरे तु स्नानमात्रम् ।

**देशान्तरे मृतं श्रुत्वा क्लीबे वैखानसे यतौ ।**
**मृते स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः ।।**

इति पराशरोक्तेः इति विज्ञानेश्वरः । माधवस्तु स्नानं वत्सरान्ते-

**अर्वाक् त्रिपक्षात् त्रिनिशं षण्मासाच्च दिवानिशम् ।**
**अहः संवत्सरादर्वाग्देशान्तरमृतेष्वपि ।।**

इति विष्णूक्तेरित्याह । इदं सपिण्डानाम् । देशान्तरे स्नानं सोदकानामिति युक्तम् । देशान्तरलक्षणं त्वाह । बृहस्पतिः-

**महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।**
**वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ।।**

**देशान्तरं वदन्त्येके षष्ठियोजनमायतम् ।**
**चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च ।।** इति

एतत्सर्वं मातापितृभिन्नविषयम् । मातापित्रोस्तु-

**पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ।**
**श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ।।**

इति पैठीनसीवाक्यात्, तदा पूर्णमाशौचं कुर्यात्, दम्पत्योरप्येवम् ।

**मातापित्रोर्यथाशौचं दशाहं क्रियते सुतैः ।**
**अनेकाब्देऽपि दम्पत्योस्तथैव स्यात्परस्परम् ।।** इति मनूक्तेः

**दूरस्थानिधनं भर्तुः दशाहात् श्रुणुयाद्बहिः ।**
**भार्या कुर्यादघं पूर्णं पत्न्या अपि पतिस्तथा ।।**

**पत्न्या अपि तथाऽशौचं भर्तुरेवं विनिश्चितम् ।**
**पत्न्याशौचं भवेद्भर्तुरित्येवं मनुरब्रवीत् ।।** इति च

स्मृत्यर्थसारे च मातापितृमरणे दशाहमित्युपक्रम्य स्त्रीपुंसयोः परस्परं चैवं सवर्णोत्तमसपत्नीषु च इति ।

**सापत्नमातुस्तु** दक्ष.-

**पितृपत्न्यामपेतायां मातृवर्जं द्विजोत्तमः ।**
**संवत्सरे व्यतीते तु त्रिरात्रमशुचिर्भवेत् ।।**

''हीनवर्णमातृषु सपत्नीषु चैवम्'' इति स्मृत्यर्थसारे ।

अथाशौचसम्पाते उच्यते । तत्र शावे शावं, सूतके सूतकम्, शावे सूतकं, सूतके शावं वा । तत्रापि उत्तरं कालतः पूर्वेण समं न्यूनमधिकं वेति द्वादश भेदाः । यदैकदिने समं न्यूनमधिकं वाशौचद्वयं तदा तन्त्रेणान्यसिद्धिः । द्वयोरेककालत्वात् । यदा तु द्वितीयादिदिनेषूत्तरं सजातीयं शावं जननं वा समकालं न्यूनकालं वा परं स्यात् तदा षट्सु पक्षेषु पूर्वशेषेण शुद्धिः । ''अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति'' (३.२०) इति याज्ञवल्क्योक्तेः । अन्तरा ज्ञाते इत्यर्थः । ज्ञातस्यैव जननादेः निमित्तत्वात् । माधवीये यमोऽपि-

**जनने जननं चेत्स्यान्मरणे मरणं तथा ।**
**पूर्वशेषेण शुद्धिः स्यादुत्तराशौचवर्जनम् ।।**

**माधवीये शङ्खोऽपि–**

**समानाशौचसम्पाते प्रथमेन समापयेत् ।**
**असमानं द्वितीयेन धर्मराजवचो यथा ।।** इति

यदा तु सूतके शावं समं न्यूनमधिकं तदा । न पूर्वशेषाच्छुद्धिः ।

**तदाहाङ्गिराः–**

**सूतके मृतके चेत्स्यान्मृतके त्वथ सूतकम् ।**
**तत्राधिकृत्य मृतकं शौचं कुर्यान्न सूतकम् ।।**

**[१]षट्त्रिंशन्मते–**

**मृतेन शुद्ध्यते जातं न मृतं जातकेन तु ।।**

**कौर्मे च– आद्यानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी ।**
**मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।।**

**वृद्धात्रिरपि–**

**सूतकाद् द्विगुणं शावं शावाद् द्विगुणमार्तवम् ।**
**आर्तवाद् द्विगुणा सूतिः ततोऽपि शवदाहकः ।।**

अत्र पूर्वपूर्वेण नोत्तरत्तरनिवृत्तिः, अस्पृश्यत्वाधिक्यादित्यर्थः ।

**षडशीतावपि–**

**स्वभावबहुसूतिस्तु न्यूनशावविशोधिनी ।।** इति

**ब्राह्मेऽपि–**

**नागन्तुकैरथाहोभिराशौचमपनुद्यते ।**
**न च पातनिमित्तेन शावस्यान्यस्य शोधनम् ।।** इति

एवं नवपक्षाः । यदा तु त्र्यहाद्यल्पाशौचमध्ये सजातीयं विजातीयं वा दीर्घकालं उत्तरम्, तदापि उत्तरं पूर्णं कार्यम् । न पूर्वेण शुद्धिः ।

१ ''चतुर्विंशतिमते'' इति निर्णयसिन्धुः ।

**स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।**
**न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्यति ।।** इति उशनसोक्तेः

तेन त्र्यहादिशावमध्ये दशाहादि सूतकेऽपि न पूर्वेण शुद्धिरित्यपरार्कः । शावनिमित्तं अस्पृश्यत्वं च भवत्येव ।

**यमोऽपि–**

**अघवृद्धिमदाशौचं पश्चिमेन समापयेत् ।**
**यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि ।।**
**आशौचं पुनरागच्छेत्तत्समाप्य विशुद्ध्यति ।।** इति

**हारीतोऽपि–**

**गुरुणा लघु शुद्ध्येत्तु लघुना नैव तद्गुरु ।।** इति

लघुत्वं गुरुत्वं च कालकृतमेव, पूर्वानुरोधात् । एतच्च हरदत्तविज्ञानेश्वरादिभिः स्पष्टमुक्तम् । यत्तु–

**मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।।**

इति तत्तु अस्पृश्यत्वाद्यभिप्रायं शावस्य गुरुत्वं ज्ञेयम् । क्वचित्तु पूर्वशेषेण शुद्धेरपवादमाह गौतमः– ''रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिः शुचिः'' इति । प्रभाते=अन्त्ययामे । ''रात्रिशेषे व्द्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहात्'' इति शातातपोक्तेः । इदं शावान्ते सूतके पाते सजातीये वा तुल्यम् । रात्रिशेषे रात्रिमात्रावशिष्टे इति मिताक्षरायाम् । ततश्चायमर्थः । पूर्वाशौचान्त्यरात्रौ अन्याशौचे अहोरात्रद्वयमधिकम् । रात्रेरन्तिमयामे तु दिनत्रयं इति । एतत् सम्पूर्णाशौचसम्पाते एव । रात्रिशेषे त्रिरात्रादिसम्पाते तु पूर्वशेषेणैव शुद्धिः । द्विरात्रादिवृद्धेः पूर्ववाक्यैः दशाहविषयत्वात् । अपवादाभावे शेषशुद्धेरेव सामान्यतः प्रवृतेः । अपवादान्तरं आह, शङ्खः–

**मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।**
**पितुःशेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ।।**

पादत्रयं स्पष्टम्, तुर्यस्य त्वयमर्थः । पित्राशौचमध्ये मातृमृतौ अपि आशौचान्ते मातुः पक्षिणीमधिकां कुर्यात् इति । अत्र अशुद्धौ इत्युक्तेः आत्महादेः

पितुराशौचाभावात्, मातृमरणे न पक्षिणी, किन्तु पूर्णमाशौचम् । सपिण्डाद्याशौचेन मातापित्रोराशौचापगमो नास्त्येव । एवं भर्तुरपि । इयं पक्षिणी दशमदिनात्पूर्वं मातृ-मरणे ज्ञेया । मातुरन्वारोहणे तु पक्षिणी ।

**मृतं पतिमनुव्रज्य पत्नीचेदनलं गता ।**
**न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यति ।।**

इति षडशीतिमतात् । पूर्वशेषेण शुद्धेरपवादान्तरमुक्तं षडशीत्याम्-

**पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा ।**
**सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ।।**

**स्मृतिसंग्रहेऽपि-**

"इयं विशुद्धिरुदिता सूतिकामग्निदं विना" इदं मूल्येन दाहकरणे । मातुलादि-सम्बन्धेन दाहमात्रकरणे तु त्रिरात्रमेवेत्युक्तं प्राक् । सूतकाद् द्विगुणं शावमिति वृद्धात्रिवचनात् । तथाशौचसम्पातेऽपि न शाव जननिमित्तकार्यप्रतिबन्धः ।

**आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।**
**कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ।।**

इति प्रजापतिस्मृतेः । आशौचेऽपि द्विविधेऽपि ।

**शातातपः-**

**अन्तर्दशाहे जननात्पश्चात्स्यान्मरणं यदि ।**
**प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं यथाविधि ।।**

**प्रारब्धे प्रेतपिण्डे तु मध्ये चेजननं भवेत् ।**
**तथैवाशौचपिण्डांस्तु शेषान् दद्याद्यथाविधि ।।**

मातुः पक्षिणीमध्ये पितुरेकादशाहं च कुर्यात् ।

**आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।।** इति स्मृतेः

केचित्तु विप्रस्य आशौचान्तरे एकादशाहं श्राद्धं नेत्याहुः । एवं वृषोत्सर्ग-शय्यादावपि ।

**अथाशौचापवादः ।**

स च पञ्चधा- कर्तृतः, कर्मतः, द्रव्यतः, मृतदोषतः, विधानाच्च । आद्यो ब्रह्मचारियत्यादिषु ।

**नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।**
**नाशौचं कीर्तितं सद्भिः पतिते च मृते तथा ।।** इति कूर्मोक्तेः

आशौचं अन्त्यकर्मोपलक्षणम् ।

**ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः ।**
**यदि कुर्याच्चरेत्कृच्छ्रं पुनःसंस्कारमेव च ।।** इति देवलोक्तेः

एतत्पित्राद्यतिरिक्तविषयम् ।

**आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम् ।**
**निर्हृत्य तु व्रती प्रेतं व्रतेन न वियुज्यते ।।** इति मनूक्तेः

निर्हरणं अन्त्यकर्मपरम् । एवं मातामहस्य-

**यथा व्रतस्थोऽपि सुतः पितुः कुर्यात् क्रियां नृप ।**
**तथा मातामहस्यापि दौहित्रः कर्तुमर्हति ।।** इति भविष्योक्तेः

**मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदैहिकम् ।**
**कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ।।** इति कालादर्शाच्च

तत्रान्त्यकर्मनिमित्तमस्पृश्यत्वमस्त्येव ।

**सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।**
**सोऽपि कुर्यान्नवश्राद्धं शुद्ध्येत्तु दशमेऽहनि ।।** इति दिवोदासोक्तेः

सन्ध्यादिकर्मलोपस्तु नास्त्येव ।

**पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्यपि यः सुतः ।**
**सव्रतश्चापि कुर्वीत अग्निपिण्डोदकक्रियाम् ।।**

**तेनाशौचं न कर्तव्यं सन्ध्या चैव न लुप्यते ।**
**अग्निकार्यं च कर्तव्यं सायं प्रातश्च नित्यशः ।।** इति संवर्तोक्तेश्च

अत्र कर्मानधिकाररूपाशौचनिषेध एव । माधवादयस्तु एकाहमाशौचमाहुः ।

**आचार्यं वाऽप्युपाध्यायं गुरुं वा पितरं च वा ।**
**मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ।**

**कृत्वा पतति नो तस्मात्प्रेतान्नं तत्र भक्षयेत् ।।**
**अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ।**
**एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुद्ध्यति ।।** इति ब्राह्मोक्तेः

तदन्नभोजने तु प्रायश्चितं पुनरुपनयनं, आशौचं च । दिवोदासादयस्तु ब्राह्मोक्तेः प्रथमेऽह्नि सन्ध्यादिलोपः ।

**ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः ।**
**तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुद्ध्यति ।।**

इति प्रजापत्युक्तेः । द्वितीयदिनादौ पिण्डदानकाले एव अस्पृश्यत्वमात्रं नान्यदेत्याहुः । अन्त्यकर्माकरणे तु ब्रह्मचारिणः पित्रादिमरणेऽपि आशौचाभाव एव। सोऽपि ब्रह्मचर्यकाल एव । समावर्तनोत्तरं तु पूर्वमृतानां त्र्यहाशौचं भवत्येव ।

**आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।**
**समाप्ते तूदकं दत्वा त्रिरात्रमशुचिर्भवेत् ।।** इति मनूक्तेः

तत्रापि विकल्पः ।

**पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ।**
**आशौचं कर्मणोऽन्ते स्यात् त्र्यहं वा ब्रह्मचारिणाम् ।।**

इति छन्दोगपरिशिष्टात् ।।

दक्षः– **स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम् ।**
**आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ।।**

**याज्ञवल्क्योऽपि–**

''आपद्यपि च कष्टायां सद्यः शौचं विधीयते'' (३.२९) इति मरणसमयेऽपि नाशौचमाह, कौर्मे च ''सद्यः शौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे'' उपद्रवे अत्यन्तमारके ।

अथ कर्मतः, लघुविष्णुः–

**व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।**
**आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ।।**

**प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।**
**नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ।।** इति

पैठीनसिः–

**विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि ।**
**न तत्र सूतकं तद्वत्कर्मयज्ञादि कारयेत् ।।** इति

तीर्थकर्मणि आकस्मिकतीर्थप्राप्तौ । ब्राह्मे ''गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित्'' इति । अपवादान्तरमाह याज्ञवल्क्यः–

**वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् ।।** (३.१७)

तत्र त्यागमात्रे स्नानोत्तरं स्वयं कर्तृत्वम् ।

**सूतके मृतके चैव अशक्तौ श्राद्धभोजने ।**
**प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् ।।** इति बृहन्मनूक्तेः ।

[१]अपरार्कादयस्तु श्रौतं सर्वं स्वयं कार्यं, स्मार्ते तु त्यागातिरिक्तेऽन्यस्यैव कर्तृत्वम् । त्यागमात्रे तु स्वस्य, ''कर्म वैतानिकं कार्यं स्नानोपस्पर्शवान्स्वयम्'' इति हारीतोक्तेः ।

**जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते ।**
**शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ।।** इति जाबाल्युक्तेश्च

**दर्शं च पूर्णमासं च कर्म वैतानिकं च यत् ।**
**सूतकेऽपि त्यजेन्मोहात्प्रायश्चित्तीयते द्विजः ।।** इति मरीच्युक्तेश्चेत्याहुः

**सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ।**
**पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ।।** इति जातूकर्ण्योक्तेश्च

१ बृहस्पत्युक्ते : इति निर्णयसिन्धुः ।

चरुः=स्मार्तस्थालीपाकः, श्रवणाकर्मादिश्चेति विज्ञानेश्वरः । प्रारब्धं तु सपिण्डेनाऽपि कार्यम् ।

**न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ।।** इति मनूक्तेः

छन्दोगपरिशिष्टे,

**होमः श्रौते तु कर्तव्यः शुष्कान्तेन फलेन वा ।**
**अकृतं हावयेत् स्मार्ते तदभावे कृताकृतम् ।।**

अकृतं=व्रीह्यादि । कृताकृतं=तण्डुलादि । स्मार्तहोमादौ तु विकल्पः, यदा करणं तदा अन्यद्वारा । अत्रेदं तत्त्वम्, येषां बह्वृचादीनां दशरात्रहोमेऽतीतेऽपि नाग्निविच्छेदः तैः न कार्यम् । तैत्तिरीयाद्यैः कार्यम् । त्रिरात्रमाहूयमानोऽग्निः लौकिकः सम्पद्यत इति सुदर्शनभाष्ये वचनात् । समारूढे त्वग्नौ तेनापि न कार्यम्। किन्तु पुनराधेयमेव । समारोपप्रत्यवरोहयोः आशौचापवादाभावादनन्यकर्तृकत्वाच्च। अन्यथा पुनराधानमपि स्यात् ।

**यत्त्वाश्वलायनः–**

**तौ चापि सूतके शावे पर्वणीष्टिं महापदि ।**
**पुष्पवत्यां च भार्यायां न कुर्यात्तां कदाचन ।।**

**स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद् द्विजः ।**
**श्रौताग्निस्तु सकृद् हुत्वा समाप्ते वा स्वयं हुनेत् ।।** इति

तदपि समारूढपरम् ।

**स्मार्ताग्निनात्मनोऽन्येषामभावे सूतकादिषु ।**
**समारोप्य तदन्तेषु विहृत्य जुहुयात्स्वयम् ।।** इत्याश्वलायनोक्तेः

वैश्वदेवस्य तु अग्निसाध्यत्वेऽपि वचनान्निवृत्तिः । ''विप्रो दशाहमासीत वैश्वदेवविवर्जितः'' इति संवर्तोक्तेः । ''पञ्चयज्ञविधानं तु न कुर्यान्मृत्युजन्मनोः'' इत्युक्तेः । हरदत्तस्तु आशौचेऽपि बह्वृचैः वैश्वदेवः कार्यः । तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देश इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य निषेधात् । सन्ध्यादीनामपि अपवादमाह पुलस्त्यः–

**सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।**
**न त्यजेत्सूतके वाऽपि त्यजन् गच्छेदधो द्विजः ।।**

**सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।**
**मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ।।**

**यत्तु जाबालः-**

**सन्ध्यापञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च ।**
**तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ।।**

इति तत्पूर्णसन्ध्यानिषेधपरम्, प्रयोगपारिजाते-

**सूतके मृतके कुर्यात्प्राणायाममनन्त्रकम् ।**
**तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ।।**

**गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।**
**मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ।।**

इति भारद्वाजोक्तेः । [१]गायत्र्यपि दशवारं जप्या । ''आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश'' इत्याश्वलायनोक्तेः । अशुचिः आशौचवानित्यर्थः इति मयूखे । नित्यकर्मणि विशेष उक्तः स्मृत्यर्थसारे । सूतकादौ नित्यस्नानशौचाचमन-बलिदानप्राणाहुतिपात्रकरणादयो भुजिनियमाश्च अस्पृश्यस्पर्शनस्नानादिकं चेति सर्वं कर्तव्यमेवेति । नित्यस्नानं स्नानाङ्गजलतर्पणसहितमेव कार्यम् ।

**अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ।**
**स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ।।**
**उद्धृतैरुदकैः स्नायान्न कुर्याद्वस्त्रपीडनम् ।।**

इति स्नान एव तर्पणाद्यङ्गपर्युदासात् । तेन-

---

१ अत्र कश्चित् । सूतकिनामपि दशवारं जप्यम् । ''आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश'' इति आश्वलायनोक्तेः । आपन्नः आपद्ग्रस्तः अशुचिः आशौचवान् इत्यर्थः । तत्तु आचारविरुद्धत्वादुपेक्ष्यम् । इति आह्निककौस्तुभे श्रीनिवासतीर्थाः ।

गायत्रीजपो न कार्यः । अर्घ्यान्ता मानसी सन्ध्येत्युक्तेः । केचिन्मनसा दशगायत्रीजपः कार्य इत्याहुः । इति धर्मसिन्धौ ।

**सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम् ।**
**देवादितर्पणं चेति स्नानं पञ्चाङ्गमुच्यते ।।**

इत्युक्तप्रकारेण नित्यस्नानं सूतकादौ कर्तव्यमिति ज्ञायते । ग्रहणे श्राद्धादावपि आशौचापवादमाह व्याघ्रः-

**स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।।** इति

**लैंगेऽपि-**

**सूतके मृतके चैव न दोषो राहुदर्शने ।**
**तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ।।** इति

**बृहस्पतिः-**

**कन्याविवाहे संक्रान्तौ सूतकं न कदाचन ।।**

**अथ द्रव्यतः मरीचिः-**

**लवणे मधुमांसे च पुष्पमूलफलेषु च ।**
**शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ।।**

**तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः ।**
**पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ।।**

स्वयमेव स्वाम्यनुज्ञया ग्राह्यम् । न तु सूतकीहस्तादित्यर्थः । पक्वं=लड्डुकादि, अपक्वं=तण्डुलादि । एतदन्नसत्रपरम् ।

**अन्नसत्रे प्रवृत्तानामाममन्नमगर्हितम् ।**
**भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् ।।**

इति आङ्गिरसोक्तेः पक्वान्नमोदनादि ।

**षट्त्रिंशन्मते-**

**उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् ।**
**एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ।।**

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वाऽपि त्यजन् गच्छेदधो द्विजः ।।

सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ।।

यत्तु जाबालः-

सन्ध्यापञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ।।

इति तत्पूर्णसन्ध्यानिषेधपरम्, प्रयोगपारिजाते-

सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ।।

गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ।।

इति भारद्वाजोक्तेः । [१]गायत्र्यपि दशवारं जप्या । ''आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश'' इत्याश्वलायनोक्तेः । अशुचिः आशौचवानित्यर्थः इति मयूखे । नित्यकर्मणि विशेष उक्तः स्मृत्यर्थसारे । सूतकादौ नित्यस्नानशौचाचमन-बलिदानप्राणाहुतिपात्रकरणादयो भुजिनियमाश्च अस्पृश्यस्पर्शनस्नानादिकं चेति सर्वं कर्तव्यमेवेति । नित्यस्नानं स्नानाङ्गजलतर्पणसहितमेव कार्यम् ।

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ।।
उद्धृतैरुदकैः स्नायान्न कुर्याद्वस्त्रपीडनम् ।।

इति स्नान एव तर्पणाद्यङ्गपर्युदासात् । तेन-

---

१ अत्र कश्चित् । सूतकिनामपि दशवारं जप्यम् । ''आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश'' इति आश्वलायनोक्तेः । आपन्नः आपद्ग्रस्तः अशुचिः आशौचवान् इत्यर्थः । तत्तु आचारविरुद्धत्वादुपेक्ष्यम् । इति आह्निककौस्तुभे श्रीनिवासतीर्थाः ।
गायत्रीजपो न कार्यः । अर्घ्यान्ता मानसी सन्ध्येत्युक्तेः । केचिन्मनसा दशगायत्रीजपः कार्य इत्याहुः । इति धर्मसिन्धौ ।

**सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम् ।**
**देवादितर्पणं चेति स्नानं पञ्चाङ्गमुच्यते ।।**

इत्युक्तप्रकारेण नित्यस्नानं सूतकादौ कर्तव्यमिति ज्ञायते । ग्रहणे श्राद्धादावपि आशौचापवादमाह व्याघ्रः-

**स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके ।।** इति

**लैंगेऽपि-**

**सूतके मृतके चैव न दोषो राहुदर्शने ।**
**तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ।।** इति

**बृहस्पतिः-**

**कन्याविवाहे संक्रान्तौ सूतकं न कदाचन ।।**

**अथ द्रव्यतः मरीचिः-**

**लवणे मधुमांसे च पुष्पमूलफलेषु च ।**
**शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयस्सु च ।।**

**तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः ।**
**पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ।।**

स्वयमेव स्वाम्यनुज्ञया ग्राह्यम् । न तु सूतकीहस्तादित्यर्थः । पक्वं=लड्डुकादि, अपक्वं=तण्डुलादि । एतदन्नसत्रपरम् ।

**अन्नसत्रे प्रवृत्तानामाममन्नमगर्हितम् ।**
**भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेत् ।।**

इति आङ्गिरसोक्तेः पक्वान्नमोदनादि ।

**षट्त्रिंशन्मते-**

**उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् ।**
**एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ।।**

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ।।

भुञ्जानेषु च विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ।।

बृहस्पतिः–

पूर्वसङ्कल्पितान्नेषु न दोषः परिकीर्तितः ।

षडशीतौ–

संसर्गाद्यस्य चाशौचं यस्यातिक्रान्तकालता ।
तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित् ।।

अथ मृतदोषतः, भविष्ये–

स्वेच्छया मरणं विप्रात् शृङ्गिदंष्ट्रिसरीसृपैः ।
अन्त्यान्त्यजविषोद्बन्धैरात्मना चैव ताडनैः ।।

पाखण्डमाश्रिताश्चैव महापातकिनस्तथा ।
स्त्रियश्च व्यभिचारिण्यः आरूढपतितास्तथा ।।
न तेषां स्नानसंस्कारो न श्राद्धं न सपिण्डनम् ।।

अङ्गिराः–

चाण्डालादुदकात्सर्पात् ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ।।

उदकं पिण्डदानं च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ।।

एतादृशानां बुद्धिपूर्वमौर्ध्वदेहिकं कर्म कुर्वतां प्रायाश्चित्तमाह । माधवीये वसिष्ठः–

य आत्मत्यागिनां कुर्यात् स्नेहात्प्रेतक्रियां द्विजः ।
स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणं व्रतम् ।।

अज्ञाने तु–

[१]कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं [२]तथा ।
रज्जुच्छेदाश्रुपातश्च तप्तकृच्छ्रेण शुद्ध्यति ।। इति ज्ञेयम्

मिताक्षरायाम्–

आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ।।

आहिताग्नेस्तु विशेषो हेमाद्रौ भविष्ये–

वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे ।
पात्राणि तु दहेदग्नौ साग्निके पापकर्मणि ।।

छन्दोगपरिशिष्टे–

महापातकसंयुक्तो दौरात्म्यादग्निमान्यदि ।
पुत्रादिः पालयेदग्नीन्युक्त आदोषसंक्षयात् ।।

प्रायश्चित्तं न कुर्याद्यः कुर्वन्वा म्रियते यदि ।
गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम् ।
पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत् ।।

पराशरः– आहिताग्निर्मृतो विप्रश्चाण्डालेनात्मघातकः ।
दहेत ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ।।

प्राजापत्यं चरेत्पश्चाद्विप्राणामनुशासनात् ।
दग्ध्वास्थीनि पुनर्गृह्य क्षीरेण क्षालयेत्ततः ।

---

१ एवं पूर्वोक्तनिन्दितमरणे मृतानां स्नेहादिनाग्न्याद्यौर्ध्वदेहिककरणे स्मृत्यन्तरे प्रायश्चित्तमाम्नातम्।
कृत्वाग्निमुदकं स्नानं स्पर्शनं हवनं तथा ।
रज्जुच्छेदाश्रुपातश्च तप्तकृच्छ्रेण शुद्ध्यति ।। इति
एतच्च बुद्धिपूर्वे प्रत्येकमग्न्यादिमरणे, अबुद्धिपूर्वके तु संवर्तः–
एषामन्यतमं प्रेतं यो वहेत दहेत वा ।
कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ।।
इति शब्दकल्पद्रुमे आत्मघातिशब्दार्थकथनावसरे निरूपितम् ।। शब्दसारस्वतसर्वस्वेऽप्येमव।

२ कथाम् इति गरुडपुराण–निर्णयसिन्धुपाठः ।

**स्वेनाग्निना स्वमन्त्रेण पृथगेनं पुनर्दहेत् ।।**

प्रमादमरणे तु आशौचादि भवत्येव । तदाहाङ्गिराः-

**अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः ।**
**तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ।।**

**ब्राह्मेऽपि-**

**प्रमादादपि निःशंकस्त्वकस्माद्विधिचोदितः ।**
**शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ।।**

**चण्डालैरथवा चोरैर्निहतो वाऽपि कुत्रचित् ।**
**तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ।।** इति

**अस्यापवादो भविष्ये-**

**प्रमादादिच्छया वाऽपि न कुर्यात्सर्पतो मृते ।।**

नागपूजां विना न कुर्यादित्यर्थः ।

**प्रयागे आत्महत्यादोषो नास्तीत्युक्तं स्कान्दे-**

**यथा कथञ्चित्तीर्थेऽस्मिन् प्राणत्यागं करोति यः ।**
**तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि ।।** इति

अत्र दशाहमाशौचम् । त्रिरात्रस्य प्राप्तकालगोचरत्वादिति भट्टाः । युक्तं तु त्रिरात्रम् । कश्यपः- ''अनशनमृतानामशनिहतानामग्निजलप्रविष्टानां भृगुसंग्राम-देशान्तरमृतानां जातदन्तानाञ्च त्रिरात्रम्'' इति । एवं मरणान्तप्रायश्चित्तेऽपि । पूर्वोक्तश्चात्महादेः दाहाशौचादिनिषेधः तदानीमेव, वत्सरान्ते तु सर्वमौर्ध्वदैहिकं कुर्यात्।

**गोब्राह्मणहतानां च पतितानां तथैव च ।**
**ऊर्ध्वं संवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ।।**

इति षट्त्रिंशन्मतात् । एवं म्लेच्छीकृतानामपि गयाश्राद्धमपि कार्यम् ।

**ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।**
**सर्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात् ।।**

इत्यग्निपुराणात् । संवत्सरादर्वागपि प्रायश्चित्तं कृत्वा नारायणबलिं कृत्वा और्ध्वदेहिकं सर्वं कुर्यादित्युक्तं स्मृतिरत्नावल्याम्-

**आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम् ।**
**तप्तकृच्छ्रचतुष्कं च त्रिंशत्कृच्छ्राणि वा पुनः ।।**

**अर्वाक् संवत्सरात्कुर्याद्दहनादि यथोदितम् ।**
**कृत्वा नारायणबलिमनित्यत्वात्तदायुषः ।।** इति

एवं म्लेच्छीकृतानामपि । इदंचात्मवधनिमित्तं तज्जातिवधप्रायश्चित्तेन समुच्चितं कार्यम् । अत एव स्मृत्यर्थसारे ब्रह्महादीनां तद्योग्यं प्रायश्चित्तं कृत्वा नारायणबलिः कार्यः इत्युक्तम् । इदं प्रायश्चित्तार्हाणामेवम् । प्रायश्चित्तानर्हाणां तु पतितोदकमात्रं कार्यमिति केचित् । वस्तुतस्तु तदर्हानर्हयोर्वचनेऽनुपादानादविशेषात् तत्रापि नारायणबलिः गयाश्राद्धं चेति युक्तम् । पतितोदकविधिस्तु पित्राद्यतिरिक्तविषय इत्यपरे । स यथा, हेमाद्रौ ब्राह्मे-

**पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति ।**
**स हि दासीं समाहूय सर्वगां दत्तवेतनाम् ।।**

**अशुद्धघटहस्तां तां यथावृत्ता ब्रवीत्यपि ।**
**हे दासि गच्छ मूल्येन तिलानानय सत्वरम् ।।**

**तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी ।**
**उपविष्टा तु वामेन चरणेन ततः क्षिप ।।**

**कीर्तयेः पातकीसंज्ञां त्वं पिबेति [१]पुनर्वदेः ।**
**निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् ।।**
**एवं कृते भवेत्तृप्तिः पतितानां न चान्यथा ।।** इति

इदं मृताहे कार्यम् । पतितस्य दासी मृताह्नि यदा घटमपवर्जयेदेतावता अय-मुपचरितो भवति इति विष्णूक्तेः । अत्र कश्चिदाह- यः पतितो घटस्फोटेन बान्धवैः बहिष्कृतः तद्विषयाणि क्रियानिषेधवाक्यानि । जीवत्येव तस्मिन् अन्त्यकर्मणः

---

१ मुहुर्वद इति निर्णयसिन्धुः ।

कृतत्वात्, पुनः करणाभावादिति, तन्न । बन्धुत्यागेन जातवैराग्यस्य कृत-प्रायश्चित्तस्याप्यकरणापत्तेः । न च कृतघटस्फोटस्य संग्रहविधिर्नास्तीति वाच्यम् । मनुनाऽकृतघटस्फोटस्य त्यागमुक्त्वा,

**प्रायश्चित्ते तु चरिते पूर्णकुम्भमपां नवम् ।**
**तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ।।** इत्युक्तेः

अन्यथा प्रायश्चित्तमात्रे एतत्प्रसङ्गात् । अतो घटस्फोटेन बहिष्कृतस्यापि पित्रादेः अब्दान्ते नारायणबलिः कार्यः । निषेधास्तु पितृव्यादिपरा इति तत्त्वम् ।

**अपरार्के, स्मृत्यन्तरे–**

**तदैव शुद्ध्यति प्रेतो नारायणबलौ कृते ।**
**यो ददाति क्रियापिण्डं तस्मै प्रेताय वै सुतः ।।**

**तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः ।**
**विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यां दिनत्रयम् ।।**
**आशौचं पिण्डदः कुर्यान्न तु तद्बन्धुगोत्रजाः ।।** इति

''अपुत्रस्यापि पत्न्याद्यैः कार्या नारायणबलिः'' इत्युक्तं देवयाज्ञिकेन ।

**अथ विधानादाशौचाभावः ।**

[१]यथा यतिषु ।

**त्रयाणामाश्रमाणाञ्च कुर्याद्दाहादिकाः क्रियाः ।**
**यतेः किञ्चिन्न कर्तव्यं न चान्येषां करोति सः ।।** इति ब्राह्मात्

अथ आहिताग्नौ प्रोषिते मृते तदस्थिदाहात्पूर्वं पुत्रादीनां आशौचम् । सन्ध्यादिकर्मलोपश्च नास्ति ।

**अनग्निमत उत्क्रान्तेराशौचादिद्विजातिषु ।**
**दाहादग्निमतो विद्याद्विदेशस्थे मृते सति ।।** इति स्मृतेः

अत्र देहस्यैव सम्भवे दाहः ।

---

१ यतियुद्धमृतादिषु इति निर्णयसिन्धुः ।

आहिताग्नौ विदेशस्थे मृते सति कलेवरम् ।
विधेयं नाग्निभिर्यावत्तदीयैरपि दह्यते ।। इति ब्राह्मोक्तेः

तदभावे छन्दोगपरिशिष्टे–

विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा ।
दाहयेद्बर्हिषाच्छाद्य पात्रन्यासादि पूर्ववत् ।।

अस्थ्नामलाभे पार्णानि शकलान्युक्तयावृता ।
दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ।।

षट्त्रिंशन्मते–

कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः ।
पालाशीभिः समिद्भिर्वा संख्या चैवं प्रकीर्तिता ।।

भविष्ये–

चत्वारिंशच्छिरःस्थाने ग्रीवायां तु दशैव तु ।
बाह्वोश्चैव शतं दद्याद्विंशतिश्च तथोरसि ।।
उदरे विंशतिं दद्यात् त्रिंशतं कटिदेशयोः ।
ऊर्वोश्चैव शतं दद्यात् त्रिशतं जानुजङ्घयोः ।।
पादाङ्गुलीषु दश वै एषा च प्रेतकल्पना ।।

इदं निरग्नेरपि । वृद्धमनुः–

प्रोषितस्य तथा कालो गतश्चेत् द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ।।

बृहस्पतिः–

यस्य न श्रूयते वार्ता यावद् द्वादशवत्सरान् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणा ।।

भविष्ये–

पितरि प्रोषिते यस्य  न वार्ता नैव चागमः ।
ऊर्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम् ।।

**कुर्यात्तस्य तु संस्कारं यथोक्तविधिना ततः ।**
**तदादीन्येव सर्वाणि प्रेतकर्माणि कारयेत् ।।**

द्वादशाब्दप्रतीक्षा पितृभिन्नविषयेति मदनरत्ने उक्तम् । गृह्यकारिकायाम्-

**तस्य पूर्ववयस्कस्य विंशत्यब्दोर्ध्वतः क्रिया ।**
**ऊर्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता ।।**

**द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता ।**
**चान्द्रायणत्रयं कृत्वा त्रिंशत् कृच्छ्राणि वा सुतैः ।।**
**कुशैः प्रतिकृतिं दग्ध्वा कार्या शौचादिका क्रिया ।।** इत्युक्तम्

**पराशरः-**

**देशान्तरगतो नष्टः तिथिर्न ज्ञायते यदि ।**
**कृष्णाष्टमी ह्यमावास्या कृष्णा चैकादशी च या ।।**
**उदकं पिण्डदानञ्च तत्र श्राद्धञ्च कारयेत् ।**

इदं मासज्ञाने । तत्राहिताग्नेः पूर्णाशौचम् । अनाहिताग्नेस्तु त्रिरात्रम् ।

**ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यो यवैस्तथा ।**
**सुपिष्टैर्जलसम्मिश्रैः दग्धव्यश्च तथाग्निना ।।**

**असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ।**
**एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।।** इति ब्राह्मोक्तेः

इदं त्रिरात्रं न दशाहमध्ये दाहे, तत्र प्रोषिते कालशेषः स्यादित्युक्तेः । तत्र पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः दशाहाद्येव गृहीताशौचयोस्तु त्रिरात्रम् । पत्नीमृतौ भर्तुश्चैवम् । सपत्न्योश्चैवमिति स्मृत्यर्थसारे । अन्यसपिण्डानां तु सर्वत्र पर्णशरदाहे त्रिरात्रम् । तदाह अङ्गिराः

**देशान्तरमृतं श्रुत्वा नाशौचं चेत्कथञ्चन ।**
**कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रयम् ।।** इति

स्मृत्यर्थसारे तु गृहीताशौचानां स्नानमात्रमुक्तम् । बह्वृचपरिशिष्टेपि ।

# अथ अतीतसंस्कारः

स चेदन्तर्दशाहः स्यात्तत्रैव सर्वं समापयेत् । ऊर्ध्वमाहिताग्नेः दाहात् सर्वमाशौचं कुर्यात् । अन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचम् । गृहीताशौचयोः कर्माङ्गं त्रिरात्रमिति । द्वादशवर्षादिप्रतीक्षोत्तरं दाहे तु पुत्रादीनां सर्वेषां त्रिरात्रमिति कल्पतरुदिवोदासादयः ।

**अथ प्रेतसंस्कारे कालः**

**प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।**
**आशौचमध्ये संस्कारे दिनं शोध्यं तु सम्भवे ।।**

**आशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः ।**
**संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि ।।**

**प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् ।**
**कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनक्षयम् ।**

ज्योतिर्नारदः-

**चतुर्दशीतिथिं नन्दां भद्रां शुक्रारवासरौ ।**
**सितेज्ययोरस्तमयं द्व्यंघ्रिभं विषमांघ्रिभम् ।।**

**शुक्लपक्षञ्च सन्त्यज्य पुनर्दहनमुत्तमम् ।**

**वसूत्तरार्धतत्पञ्च नक्षत्रेषु त्रिजन्मसु ।**
**पौष्णब्रह्मर्क्षयोश्चैव दहनात्कुलनाशनम् ।**

वाराहे-

**चतुर्थाष्टगमे चन्द्रे द्वादशे च विवर्जयेत् ।**
**प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ।**

**करणे विष्टिसंज्ञे च शनैश्चरदिने तथा ।**
**त्रयोदश्यां विशेषेण जन्मतारात्रये तथा ।**

जन्मदशमैकोनविंशानि नक्षत्राणि जन्मताराः

भारते–

नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः ।
न प्रौष्ठपदयोः कार्यं तथाग्नेये च भारत ।
दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत् ।।

काश्यपः–

भरण्यार्द्रामघाश्लेषामूलं द्विचरणानि च ।
प्रेतकृत्येऽतिदुष्टानि धनिष्ठाद्यञ्च पञ्चकम् ।

फल्गुनीद्वितयं रोहिण्यनूराधा पुनर्वसुः ।
आषाढे द्वे विशाखा च भानि द्विचरणानि च ।

अस्यापवादः बैजवापः–

प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि ।
नक्षत्रतिथिवारादि शोधनीयं न किञ्चन ।

युगमन्वादिसंक्रान्तिदर्शे प्रेतक्रिया यदि ।
दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ।।

विश्वप्रकाशेऽपि–

गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे ।
नातीतः पितृमेधः स्याद्गयां गोदावरीं विना ।।

वृद्धमनुः–

अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकम् ।
प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च ।।
जीवन् यदि समागच्छेद् घृतकुम्भे निमज्य तम् ।
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ।
द्वादशाहं व्रतचर्या त्रिरात्रमथवाऽस्य तु ।।

स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ।
अग्नीनाधाय विधिवद् व्रात्यस्तोमेन वा यजेत् ।।

अनाहिताग्नेस्तु चरुः । [१]मृतवार्ताश्रवणे त्वाश्वलायनः । तथा सर्पसंस्कारे त्रिरात्रमाशौचम् । क्वचिज्जीवतोऽप्यन्त्यकर्माशौचञ्च कार्यम् । यथा प्रायश्चित्तानिच्छोः पतितस्य घटस्फोटे ।

**पतितस्योदकं कार्यं सपिण्डैर्बान्धवैस्सह ।**
**निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ।।** ११.१८१ ।।

**दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्पदा ।**
**अहोरात्रमुपासीरन्नाशौचं बान्धवैः सह ।।** इति मनूक्तेः ११.१८२

निन्दिते रिक्तादौ ।

**।। इत्याशौचप्रकरणम् । इति चतुर्थः परिच्छेदः ।।**

प्रतिशाखं भिन्नेऽप्यन्त्यकर्मणि साधारणं किञ्चिदुच्यते । तत्राधिकारिणः प्रागुक्ताः । सर्वाभावे धर्मपुत्रो वा कार्यः ।

**अपुत्रेण सुतः कार्यो यादृक्तादृक्प्रयत्नतः ।**
**पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनाय च ।।** इति व्यासोक्तेः

**गृह्यपरिशिष्टे–**
**असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।**
**प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ।।**

दद्यात् पिण्डमिति शेषः ।

**भविष्ये– यत्राद्यो दीयते पिण्डस्तत्र सर्वं समापयेत् ।**

**ब्राह्मेऽपि– प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः ।**
**अन्नं नवसु चाऽन्येषु स एव प्रददात्यपि ।।**

---

१ सुरभय एव यस्मिन् जीवे मृतशब्दः ।। आ.श्रौ.सू.३.१३.११ ।।

देवत्रातभाष्यम्– अग्नये सुरभये इष्टिरेव भवति, न पूर्णाहुतिः । यस्मिन् यजमाने जीवे सति मृतशब्दः श्रूयते, प्रवासगते यजमाने मृत इति लोके शब्द उत्पद्यते । एवशब्दोऽवधारणार्थः, इष्टिमवधारयति । अग्नये सुरभये इष्टिरेव भवति । पूर्णाहुतावाहुतिरिति वक्ष्यति । इष्टिस्थाने पूर्णाहुतिर्वा । विभाषानिवृत्त्यर्थमेवकारः ।।

विज्ञानेश्वरादयस्तु अग्निं दद्यादिति व्याचक्षते ।

**सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे नरः ।**
**सोऽपि कुर्यान्नवश्राद्धं शुद्धयेत्तु दशमेऽहनि ।।**

इति दिवोदासीयवचनात् । अन्यत्र विशेषः ।

**पुत्राभावेऽग्निदः कुर्यात्सकलं प्रेतकर्म च ।**
**नान्यपुत्रवतोऽन्यश्चेद्विना दाहास्थिसञ्चयम् ।।**

**अस्थिसञ्चयनादर्वाक् ज्येष्ठश्चेदागतः सुतः ।**
**वासो धृत्वाऽदितः कर्म सर्वं कुर्याद्यथाविधि ।।**

**अस्थिसञ्चयनादूर्ध्वं ज्येष्ठ एवागतो यदि ।**
**कुर्यादग्निप्रदः पुत्रो दशाहान्तं स कर्म च ।।**

**संस्कृतस्य तु मन्त्रेण येन केनाऽपि चैव हि ।**
**न संस्कुर्यात्पुनः प्रेतं तिलाञ्जल्यादिकं चरेत् ।।**

**अतीतानञ्जलीन् पिण्डान् दत्वा चैव तदादितः ।।**

**अथवाऽऽद्यादिकं सर्वं ज्येष्ठः कुर्याद्यथाविधि ।**
**क्रियमाणे सुतैः पित्रोः प्रेतकर्माणि दूरतः ।।**

**दशाहाभ्यन्तरे पुत्रः तत्स्थानं नाऽप्नुयाद्यदि ।**
**श्रुतःस्थाने सुतः कुर्यात्सकलं प्रेतकर्म च ।।**
**षोडशश्च सपिण्डश्च दहनास्थिक्रियां विना ।।**

**नैव तत्र शिलोत्पत्तिर्दर्भग्रन्थिर्विधीयते ।**
**तस्मिन्नेवाञ्जलीन् दद्यात् दशाहान्तं यथाविधि ।।**

**कृत्वादौ वपनं स्नानं शुद्धाम्बरधरः शुचिः ।**
**धृत्वा चैवाविकं वासः प्रेतकार्यं समाचरेत् ।।**

तथा– **पुत्रेषु विद्यमानेषु दूरतः प्रेतसत्क्रियाम् ।**
**असपिण्डः सपिण्डो वा न कुर्याद्दहनं विना ।।**

**जीवत्स्वेव हि पुत्रेषु प्रेतश्राद्धानि यानि च ।**
**स्नेहेन वाऽथ लोभेन कुरुतेऽन्यो वृथा भवेत् ।।**

पुत्रः आसन्नमरणपितृहस्तेन दानं कारयेदित्युक्तम् । गृह्यपरिशिष्टे–

**दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनम् ।**
**भूमिस्थं पितरं पुत्रो यद्धि दानं प्रदापयेत् ।**
**तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि ।।**

मरणकालस्य पुण्यकालत्वमुक्तं वाराहे–

**व्यतीपातोऽथ संक्रान्तिः तथैव ग्रहणं रवेः ।**
**पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः ।।**

**व्यासः–**

**आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् ।**
**तदभावे तु गौरेव नरकोत्तारणाय वै ।।**

**तदा यदि न शक्नोति दातुं वैतरणीं तु गाम् ।**
**शक्तोऽन्य उक्तगां दत्वा दद्याच्छ्रेयो मृतस्य तु ।।**

**जातूकर्ण्यः–**

**उत्क्रान्त्यादीनि दानानि दश दद्यान्मृतस्य तु ।**
**गोभूतिलहिरण्याज्यवासो धान्यगुडानि च ।।**

**रूप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ।**
**एतानि दशदानानि नराणां मृत्युजन्मनोः ।**
**कुर्यादभ्युदयार्थश्च प्रेतेऽपि हि परत्र वै ।।**

**ब्राह्मेऽपि–**

**ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रैः द्विजाय तु ।**
**सहिरण्यश्च यो दद्यात् श्रद्धावित्तानुसारतः ।**
**सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम् ।।**

**उत्क्रान्तिवैतरिण्यौ च दशदानानि चैव हि ।**
**प्रेतेऽपि कृत्वा तं प्रेतं शवधर्मेण दाहयेत् ।।**

**परिशिष्टे–**

**म्रियमाणस्य कर्णे तु पुण्यमन्त्रान् जपेत्ततः ।**

गारुडे अष्टौ दानान्युक्तानि ।

**तुलसीसन्निधौ कृत्वा शालग्रामशिलां तथा ।**
**तिला लोहं हिरण्यञ्च कार्पासं लवणं तथा ।**
**सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ।।** इति

कर्तान्त्यकर्माधिकारार्थं त्रीन् कृच्छ्रान् कुर्यात् । अथ दिवोदासीये

**चण्डालादिमृते विप्रे त्वन्तरिक्षमृतेऽपि वा ।**
**कृच्छ्रातिकृच्छ्रचान्द्रैस्तु शुद्धिस्तत्र प्रकीर्तिता ।।**

**स्मृत्यन्तरे–**

**ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च ।**
**अस्पृश्यस्पर्शने चैव खट्वादिमरणेऽपि च ।।**

**श्वानक्रव्यादसंस्पर्शे कृमिकीटोद्भवेऽपि च ।**
**एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत् ।।**

**कृच्छ्रान् त्रिषट् पञ्चदशान् चान्द्रत्रयमथाऽपि वा ।**
**शुद्ध्यै तदानीं सम्पाद्य शवधर्मेण दाहयेत् ।।**

**कर्मप्रदीपे–**

**रात्रौ वा रात्रिशेषे वा म्रियन्ते चेत् द्विजातयः ।**
**दाहं कृत्वा यथान्यायं द्वौ पिण्डौ विर्वपेत्सुतः ।।**

**यमः–**

**सन्ध्यायां वा तथा रात्रौ दाहः पाथेयकर्म च ।**
**नवश्राद्धञ्च नो कुर्यात् कृतं निष्फलतां व्रजेत् ।।**

एतत् दिनमृतस्य रात्रिनिषेधार्थम्, यत्तु स्कान्दे-

**यदि रात्रौ दहेत्तस्य समाप्तिर्दहनस्य तु ।**
**परेऽहन्युदिते सूर्ये कार्या तस्योदकक्रिया ।**
**दग्धस्य तु न वै कार्या रात्रौ जातूदकक्रिया ।।**

इति तन्निर्मूलम् । रात्रिमृतस्य तु संग्रहः ।

**रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम् ।**
**वपनं नेष्यते रात्रौ श्वस्तनी वपनक्रिया ।।** इति

वपनं तु प्रातः, तच्च सर्वैः पुत्रैः कार्यम् ।

**गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।**
**आधाने सोमयागे च वपनं सप्तसु स्मृतम् ।।** इति मिताक्षरायाम्

**गालवः-**

**प्रथमेऽहनि कर्तव्यं वपनं चानुभाविनाम् ।**
**प्रेतस्य केशस्मश्र्वादि वापयित्वाऽथ दाहयेत् ।।**

**स्मृतिरत्नावल्याम्-**

**शवं रात्र्युषितं चेत् त्रीन् कृच्छ्रान् कृत्वा दहेत्सुतः ।**

**अथ साग्नेर्विशेषः, कारिकायाम्**

**कृष्णपक्षे प्रमीयेत यद्यह्नि प्रातराहुतीः ।**
**शेषास्तु जुहुयाद्दर्शपर्यन्ताः पक्षहोमवत् ।।**

प्रतिपत्प्रातर्होमान्ता इत्यर्थः ।

**तदानीमेव जुहुयात्सायङ्कालाहुतीरपि ।**
**सायं म्रियेत चेत्सायमाहुतीर्जुहुयादथ ।।**

**तदानीमेव जुहुयात्प्रातःकालाहुतीरपि ।**
**सकृद् गृहीतमत्रेष्टं भिन्नं तन्त्रश्च होमयोः ।**
**दर्शश्चाऽपि प्रकुर्वीत स्थालीपाकं तदैव तु ।।**

छन्दोगपरिशिष्टे–

हुतायां सायमाहुत्यां दुर्बलश्चेद् गृही भवेत् ।
प्रातर्होमस्तदैव स्याज्जीवेच्च स पुनर्न वा ।।

इदं शुक्लपक्षपरम् । दुर्बलः=मुमूर्षुः । त्रिकाण्डमण्डनः–

दर्शेष्टिश्च तदा कुर्यादिष्टिर्यदि न सम्भवेत् ।
देवतानां प्रधानानामेकैकस्य हुनेत्पृथक् ।
पुरोनुवाक्यायाज्याभ्यां चतुरात्तघृताहुतीः ।।

तथा–

अग्न्यावरण्योरारूढे प्रमीयेत पतिर्यदि ।
प्रेतं स्पृष्ट्वा मथित्वाऽग्निं जप्त्वा चोपावरोहणम् ।
घृतश्च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया ।।

विच्छिन्नश्रौताग्नेः मृतौ तु प्रेताधानं तत्रैवोक्तम् ।

प्रेतं स्वाग्न्यालये क्षिप्त्वा मथिताग्न्यानलेऽरणी ।
सन्निधायारणीं मन्थेद्यस्येति यजुषा ततः ।।

यस्याऽग्नयो जुह्वतो मांसकामाः सङ्कल्पयन्ते यजमानमांसम् ।
जायन्तु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु ।।

इति मन्त्रतः ।

प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा ।
तूष्णीं हुत्वा ततः कुर्यात्प्रेते माल्या इति क्रियाम् ।।

नष्टेष्वग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् ।
आहरेदरणीद्वन्द्वं मनोज्योतिर्ऋचा ततः ।।

यज्ञपार्श्वः–

यजमाने चितारूढे पात्रन्यासे कृते सति ।
वर्षाद्यभिहते वह्नौ कथं कुर्वन्ति याज्ञिकाः ।।

**तदर्धदग्धकाष्ठेन मन्थनं तत्र कारयेत् ।**
**तच्छेषालाभतोऽन्येन दग्धशेषेण वा पुनः ।**
**हुत्वाऽऽज्यं लौकिके वह्नौ [१]दग्धशेषं दहेत्तु वा ।।**

यथाकथञ्चिदपि मन्त्रतः संस्कुर्यात् । ''निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः'' इति विरोधात् । पत्न्या अप्येवम् । ''दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः'' इति याज्ञवल्क्योक्तेः (१.८९) यत्तु-

**द्वितीयाञ्चैव यो भार्यां दहेद्वैतानिकाग्निभिः ।**
**जीवन्त्यां प्रथमायां तु सुरापानसमं स्मृतम् ।।**

इति तदाधाने सहानधिकृताविषयमिति विज्ञानेश्वरः । ब्राह्मेऽपि

**आहिताग्न्योश्च दम्पत्योः यस्त्वादौ म्रियते भुवि ।**
**तस्य देहः सपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः ।।**

**पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना ।**
**अनाहिताग्निदेहस्तु दाह्यो गृह्याग्निना द्विजैः ।।**

त्रिकाण्डमण्डनस्तु विकल्पमाह ।

**ज्येष्ठायां विद्यमानायां द्वितीयायै स्वयोषिते ।**
**काम्यं नित्याग्निहोत्रं वा न कथञ्चित्प्रयच्छति ।।**

**स्त्रीमात्रमविशेषेण दग्ध्वाऽन्यैर्वैदिकाग्निभिः ।**
**विवाह्याऽदधते यद्वाऽधानमेवाऽस्ति चेद्वधूः ।।** इति

अत्रेदं तत्त्वम् । साग्नेः पत्नीमृतौ द्वौ पक्षौ पुनर्विवाहेच्छायां पूर्वाग्निभिर्दहेदित्येकः पक्षः ।

**भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि ।**
**पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ।।** इति मनूक्तेः ५.१६८

**दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ।।**

---

१ ''हुतशेषम्'' इति निर्णयसिन्धुः ।

इति याज्ञवल्क्योक्तेश्च । (१.८९) पुनर्विवाहाशक्तौ निर्मन्थ्येन तां दग्ध्वा पूर्वाग्निष्वेवाग्निहोत्रेष्ट्यादि कार्यमित्यन्यः पक्षः । ''निर्मन्थ्येन पत्नीम्'' इति भारद्वाजोक्तेः । ''पूर्वाग्न्येकदेशेन दहेत्'' इति यज्ञपार्श्वदेवयाज्ञिकादयः । यानि– ''तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्'' इति श्रुतिः, विष्णुः–

**मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत् ।**
**उपाधिनाऽपि तत्कर्म यावज्जीवं समाचरेत् ।।**

उपाधिः हेमकुशपत्न्यादिः ।

**अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।**
**अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः ।।**

इत्यादीनि वाक्यानि तानि पूर्वाग्निष्वेवाग्निहोत्रादिपराणि नत्वपत्नीकस्य आधानार्थानीति ज्ञेयम् । एवं रामाण्डारादिष्वप्युक्तम् । त्रिकाण्डमण्डनस्तु पक्षद्वय-माह ।

**वृद्धयाज्ञवल्क्यः –**

**आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।**
**अनाहिताऽग्निरेकेन लौकिकेनाऽपरो जनः ।।**

**क्रतुः–**

**एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।**
**दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ।।**

**कारिकायाम् –**

**पत्नीमपि दहेदेवं भर्तुः पूर्वं मृता यदि ।**
**अनग्निकां दहेदेवं कपालेन हविर्भुजा ।।**

**क्रतुः–**

**विधुरं विधवाञ्चैव कपालस्याग्निना दहेत् ।**
**ब्रह्मचारिं यतिञ्चैव दहेदुत्तपनाग्निना ।।**

**तुषाग्निना च दग्धव्यः कन्यका बाल एव च ।**

अग्निवर्णं कपालं तु कृत्वा तत्र विनिक्षिपेत् ।
करीषादि ततो वह्निर्जातो यः स कपालजः ।।

स्मृत्यन्तरे–

गृहस्थो ब्रह्मचारी च विधुरो विधवाः स्त्रियः ।
औपासनश्चोत्तपनस्तुषाग्निस्तु कपालजः ।।

उत्तपनस्तु–

दर्भाग्रेऽग्निं तु प्रज्वाल्य पुनर्दर्भैस्तु संयुतः ।
पुनर्दर्भैस्तृतीयोऽग्निरेष उत्तपनः स्मृतः ।।

आश्वलायनः–

पत्नीवन्तं द्विजं प्रेतं दहेदौपासनाग्निना ।
सभर्तृकामपि प्रेतां तद्वदेव हि तां दहेत् ।।

ब्रह्मचारिण एवं स्यात्कुशजस्तुषजोऽथवा ।
उक्तः स्याद्यस्य यश्चाग्निः प्रेतस्य दहने बुधैः ।
चर्वर्थं स च वाऽप्यन्यो द्विजागारानलो भवेत् ।।

यमः– यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि च ।
प्रेतत्वं च सदा तस्य स चाऽधर्मेण लिप्यते ।।

मनुः– दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्वैस्तु यथासंख्यं द्विजातयः ।।

अत्र प्रातिलोम्येन क्रमः ।

आश्वलायनः–

ज्येष्ठप्रथमाः कनिष्ठजघन्या गच्छेयुः । इति

छन्दोगपरिशिष्टे च–

दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतम् ।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ।।

घृतेनाभ्यक्तमाप्लाव्य शुद्धवस्त्रोपवीतिनम् ।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत् ।।

हिरण्यशकलान् न्यस्य क्षिप्त्वा छिद्रेषु सप्तसु ।
मुख्येष्वथापिधायैनं निर्हरेयुः सुतादयः ।।

आमपात्रेऽन्नमादाय प्रेतमग्निपुरस्सरम् ।
एकोऽनुगच्छेत्तस्यार्धमर्धपथ्युत्सृजेद्भुवि ।।

ऊर्ध्वमादहनं कार्यमासीनो दक्षिणामुखः ।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ।।

अथ पुत्रादिराप्लुत्य कुर्याद्दारुचयं महत् ।
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे ।।

आज्यपूर्णं स्रुवं दद्याद्दक्षिणाग्रां नसि स्रुचम् ।
पादयोरधरां प्राचीमरणीमुरसीतराम् ।।

पार्श्वयोः शूर्पचमसौ सव्यदक्षिणयोः क्रमात् ।
सुसमे तु न्यसेन्युब्जमन्तरूर्वोरुलूखलम् ।।

चात्रोविलीढमत्रैव अनग्नेरप्ययं विधिः ।
अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः ।।

अथाग्निं सव्यमावृत्को दद्याद्दक्षिणतः शनैः ।
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।।

असौ स्वर्गाय लोकाय स्वाहेति परिकीर्तयेत् ।
एवमेवाहिताग्नेश्च पात्रन्यासादिकं भवेत् ।
कृष्णाजिनादिकश्चाऽत्र विशेषोध्वर्युचोदितः ।।

वाराहे–

ज्वलमानं महावह्निं शिरःस्थाने प्रदापयेत् ।
चतुर्वर्णेषु संस्थानं एवंभवति पुत्रके ।।

गारुडे षट्पिण्डा उक्ताः

मृतस्योत्क्रान्तिसमये षट्पिण्डान् क्रमशो दिशेत् ।
मृतिस्थाने तथा द्वारि चत्वरे तार्क्ष्य कारणात् ।
विश्रामे काष्ठचयने तथा सञ्चयने च षट् ॥

तथाऽन्यत्र–

स्थाने चाऽर्धपथेऽतीते चितायां शवहस्तके ।
श्मशानवासिभूतेभ्यः षष्ठं सञ्चयने तथा ॥

यमः– प्रेतं दहेच्छुभैः काष्ठैः स्नापितं स्रग्विभूषितम् ।
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ॥

ब्राह्मेऽपि– दरिद्रोऽपि न दग्धव्यः नग्नः कस्याञ्चिदापदि ।

तथा– निःशेषस्तु न दग्धव्यः शेषं किञ्चित् त्यजेन्नरः ॥

## अथ दम्पत्योरेककालमृतौ विशेषः

संग्रहे– एककालमृतौ भार्या भर्ता च यदि चेद् द्वयोः ।
तन्त्रेण दहनं कुर्यात्पिण्डश्राद्धं पृथक्पृथक् ॥

एककालमृतौ जायापती यदि तदा पितुः ।
विभज्याग्निं क्रियां कुर्यादिति यत्तदसाम्प्रतम् ॥

दाहान्तमेकतन्त्रत्वमिति याज्ञिकसम्मतम् ।
मृतं पतिमनुव्रज्य या नारी ज्वलनं गता ।
अस्थिसञ्चयनाऽन्तोऽस्या भर्तुः संस्कार एव हि ॥

कपर्दिकारिकाऽपि–

मृते भर्तरि तद्दाहात् प्राक्पत्नी म्रियते यदि ।
पत्न्यां वा प्राक्प्रमीतायां दाहादर्वाक्पतिर्मृतः ॥

तत्र तन्त्रेण दाहः स्यान्मन्त्रेषु द्वित्वमूह्यते ।
कीकसानां तु संस्कारः पृथगेव तयोर्भवेत् ॥

**एकाहमृत्यौ युगपन्नवश्राद्धादिकं तयोः ॥**

**मृतं पतिमनुव्रज्य पत्नी चेदनलं गता ।**
**तत्राऽपि दाहस्तन्त्रेण पृथगस्थिक्रिया भवेत् ॥**

अस्थिसञ्चयनस्य पृथक्त्वे विकल्पः । सहगमने पाकैक्यमाह प्रचेताः ।

**एकचित्यां समारूढौ म्रियेते दम्पती यदि ।**
**तन्त्रेण श्रपणं कुर्यात् पृथक्पिण्डं समाचरेत् ॥**

**अन्यत्राऽपि–**

**निधनञ्च सहत्वेन दम्पत्योर्गतयोश्च हि ।**
**वासश्चाग्निः शिला चितिश्चरुश्चैकोऽनुमन्त्रणम् ।**
**तिलोदकं तथा पिण्डो नवश्राद्धं पृथक्पृथक् ॥**

**अस्थिशुद्धिः वृषोत्सर्गश्चैक एव भवेद् द्वयोः ।**
**षोडशञ्च सपिण्डञ्च तथा मासानुमासिकम् ।**
**एकस्मिन्नेव काले तु तयोः कुर्यात्पृथक्पृथक् ॥**

## अथ उदकदानम्

तत्र ज्ञातीनामाह याज्ञवल्क्यः–

**सप्तमाद्दशमाद्वाऽपि ज्ञातयोऽभ्युपयन्त्यपः ।**
**अप नः शोशुचदघमनेन पितृदिङ्मुखाः ॥३.३**

**सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः ।**

[1]सप्तमाद्दशमात् दिवसात् तदनन्तरमिति विज्ञानेश्वरः । कातीयास्तु सप्तमात् पुरुषात् दशमाद्वा समानग्रामे वासे यावत्सम्बन्धमनुसरेयुरिति पारस्करोक्तेः । सप्तमा-द्दशमाद्वा पुरुषादित्याहुः । मन्त्रस्नानाङ्गमेवेति हेमाद्रिः । आश्वलायनः ''सव्यावृतो व्रजन्त्यनीक्षमाणा यत्रोदकमवहद्भवति । तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रं नाम गृहीत्वा'' इति । पुत्रस्य दाहानन्तरं कृत्यमाह याज्ञवल्क्यः ।

१ ''सप्तमाद्दशमाद्वा दिवसादर्वागिति विज्ञानेश्वरः'' इति निर्णयसिन्धुः । मुद्रितविज्ञानेश्वरपुस्तकेऽप्येवमेव ।

नदीकूलं ततो गत्वा शौचं कृत्वा यथाविधि ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ।।

सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ।
ततः स्नानं पुनः कार्यं गृहशौचश्च कारयेत् ।।

प्रेतस्यान्वहमञ्जलित्रयमप्युक्तम् । त्रिः प्रसेकं कुर्युः प्रेतस्तृप्यत्विति । तथा

दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात्प्रेतकारणात् ।
तावद् वृद्धिश्च कर्तव्या यावत्पिण्डः समाप्यते ।

भारद्वाजगृह्ये–

आशौचान्ते प्रदद्यात्तु प्रेतपुत्रस्तिलाञ्जलीन् ।
प्रथमेऽह्नि सकृद्दद्यात् पिण्डयज्ञावृता दिवा ।।

त्रींश्च दद्यात् द्वितीयेऽह्नि तृतीये पञ्च चैव च ।
चतुर्थे सप्तसङ्ख्यास्तु पञ्चमे नव चोत्सृजेत् ।।

षष्ठेऽह्नि चैकादशकाः सप्तमे तु त्रयोदश ।
अष्टमे पञ्चदशका नवमे दश सप्त च ।।

एकोनविंशतिश्चाग्रे शताञ्जलिमतं स्मृतम् ।
केचिद्दशाञ्जलीन् प्रोचुः केचिदाहुः शताञ्जलीन् ।
पञ्च पञ्चाशतश्चान्ये स्वशाखोक्तव्यवस्थया ।।

छन्दोगपरिशिष्टे–

अथानवेक्षयन् पापः सर्वे चैव शवस्पृशः ।
गोत्रनामपदान्ते तु तर्पयामीत्यनन्तरम् ।
दक्षिणाग्रान् कुशान् कृत्वा सतिलं तु पृथक्पृथक् ।।

विष्णुपुराणे–

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत् ।।

रामायणे–

इदं पुरुषशार्दूल विमलं दिव्यमक्षयम् ।
पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठताम् ।।

याज्ञवल्क्यः–

कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ।।

शङ्खः–

"आचार्ये चैवं मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च तेषाम्" इति ।।

लिखितः–

"उदकक्रिया कामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि च" इति ।

कामं प्रेततृप्तीच्छयेत्यर्थः । याज्ञवल्क्यः

न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ।। (३.५)

षडशीतौ–

स्वीयाचारादपि भ्रष्टाः पतिता ये च दूषिताः ।
न कुर्युरुदकं ते वै तेभ्योऽप्यन्ये न चैव हि ।।

हारीतः–

[१]पततामपविद्धानां चरन्तीनाञ्च कामतः ।
प्रत्तानां चैव कन्यानां निर्वर्त्या सलिलक्रिया ।।

शङ्खलिखितौ–

अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्तन्ते ।

अपपात्रितः कृतघटस्फोटः ।

---

१ "पतितानामवृद्धानां चरन्तीनाम्" इति निर्णयसिन्धुः ।

# अथ अशौचे नियमाः

**याज्ञवल्क्यः–**

**इति संश्रुत्य गच्छेयुर्गृहं बालपुरस्सराः ।**
**विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ।।** ३.१२

**आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् ।**
**प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ।।** ३.१३

**प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।।** ३.१४
**क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् क्षितौ ।।** ३.१६

इदञ्चाद्येऽह्नि । क्रीत्वा, लब्ध्वा वाऽन्यगेहादेकान्नमलवणमेकरात्रं दिवा भुञ्जीरंस्त्रिरात्रञ्च कर्मोपरमणम् । आश्वलायनः–

नैतस्यां रात्र्यामन्नं पचेरन् क्रीतोत्पन्नेन वा वर्तेरंस्त्रिरात्रक्षारलवणाशिनः स्युर्द्वादशरात्रं वा ।। इत्याह ।

**बृहस्पतिः–**

**अधःशय्यासना दीना मलिना भोगवर्जिताः ।**
**अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ।।**

भोगः=अभ्यङ्गताम्बूलादिः । भारते

**उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत् ।**
**तिलान् ददत पानीयं दीपान् ददत जाग्रत ।**
**ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ।।**

**मरीचिः–**

**प्रथमेऽह्नि तृतीये सप्तमे दशमे तथा ।**
**ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ।।**

दिवैव भोजनम् । "क्रीत्वा लब्ध्वा वा दिवैवान्नमश्नीयुः" इति पारस्करोक्तेः । आदिपुराणे–

आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान् ।।

ब्राह्मे–

यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः ।
स तत्र गृहशुद्धिञ्च वस्त्रशुद्धिं करोत्यपि ।।

पश्चिमं अन्त्यम् । शङ्खः–

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च ।
प्रेतपिण्डक्रियावर्ज्यमाशौचे विनिवर्तते ।।

काठकगृह्ये–

यत्र प्राणोत्क्रमस्तत्रान्वहं महाबलिं कुर्यात् । इति

भरद्वाजः–

वासोऽन्नञ्च जलं कुम्भं प्रदीपं कांस्यभाजनम् ।
नग्नप्रच्छादने श्राद्धे ब्राह्मणाय निवेदयेत् ।।

भृगुः–

तिलोदकं तथा पिण्डान् नग्नप्रच्छादनादिकम् ।
रात्रौ न कुर्यात् सन्ध्यायां यदि कुर्यान्निरर्थकम् ।।

## अथ प्रेतपिण्डः

सर्ववर्णानां दशैव प्रेतपिण्डाः । ''प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु'' इति हेमाद्रौ पारस्करोक्तेः । युद्धमृतादेः सद्यःशौचे त्र्यहादौ च तेनैवोक्तम् ।

सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्यः प्रथमेऽह्न्येक एव हि ।
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ।।

शातातपः–

अशौचस्य च ह्रासेऽपि पिण्डान् दद्याद्दशैव तु ।

तत्रैकपात्रे सकृत् पक्त्वा दशपिण्डान् दद्यात् ।।

**उत्तरीयशिलापात्रकर्तृद्रव्यविपर्यये ।**
**पूर्वदत्ताञ्जलीन् दद्यात् पूर्वपिण्डांस्तथैव च ।।**

इति गृह्यकारिकायां पात्रविपर्यये दोषोक्तेः । शिलाविपर्यये घटस्फोटनादेर्नावृत्तिः । क्रियाकर्तुः नाशे अन्येन शेषः समापनीयः ।

**एवं क्रियाप्रवृत्तानां यदि कश्चिद्विपद्यते ।**
**तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ।।** इति बृहस्पतिस्मृतेः ।

[१]पत्न्याः कर्तृत्वे रजोदर्शने तदन्ते कुर्यात् । आशौचान्ते आर्तवे कर्तुरस्वास्थ्ये वाऽन्येन क्रिया सर्वाऽऽवर्तनीया, कर्तुर्विपर्ययात्कालातिक्रमयोगाच्च । वाराहे

**स्थण्डिले प्रेतभागं तु दद्यात्पूर्वाह्ण एव तु ।**
**कृत्वा तु पिण्डसङ्कल्पं नामगोत्रेण सुन्दरि ।।**

**मरीचिः–**

**प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् ।**
**प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः ।।**

**शुनःपुच्छः–**

**फलमूलैश्च पयसा शाकेन तु गुडेन वा ।**
**तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत् ।**
**प्रथमेऽहनि यद् द्रव्यं तदेव स्याद्दशाहिकम् ।।**

**मात्स्ये–**

**तैजसं मृण्मयं वाऽथ पात्रं संशोध्य यत्नतः ।**
**लौकिकाग्नावधिश्रित्य पचेदन्नं घृतप्लुतम् ।**
**स्नात्वाऽथ तिलसम्मिश्रं प्रदद्याद्दर्भसंस्तरे ।।**

**ब्राह्मे–**

**प्रथमेऽहनि यो दद्यात्प्रेतायाऽन्नं समाहितः ।**
**अन्नं नवसु चाऽन्येषु स एव प्रददात्यपि ।।**

---

१ ''शावाद् द्विगुणमार्तवं इत्युक्तेः'' इति निर्णयसिन्धुः ।

मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः ।
तण्डुलप्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत्स्वयम् ।।

सपवित्रैस्तिलैर्मिश्रं कृमिकेशविवर्जितम् ।
तिलसर्पिर्मधुक्षीरैः संसिक्तं तप्तमेव हि ।।

दद्यात्प्रेताय पिण्डं तु दक्षिणाभिमुखः स्थितः ।
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः ।।

ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ।।

सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचेऽपि दातव्यास्त्रयः पिण्डाः समाहितैः ।।

द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ।
त्रींस्तु दद्यात्तृतीयेऽह्नि वस्त्रादि क्षालयेत्ततः ।।

दशाहेऽपि च दातव्यः प्रथमे त्वेक एव तु ।
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकञ्च दीयते ।
द्वितीये द्वौ ततीये त्रीन्..............।।

इत्याद्युक्त्वा

एवं स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ।।
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः ।। इति

पात्रं कुम्भः । सपिण्डे प्रक्रान्ते पुत्रागमेऽपि न दद्यात् ।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
यश्चाग्निदाता प्रेतस्य पिण्डं दद्यात्स एव हि ।। इति वायवीयोक्तेः ।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ।। इत्युक्तेश्च

दाहकर्तैव दशाहं कुर्यादिति मिताक्षरायाम् ।

अस्यापवादः—

अस्थिसञ्चयनादर्वाक् ज्येष्ठश्चेदागतः सुतः ।
वासो धृत्वाऽऽदितः कर्म सर्वं कुर्याद्यथाविधि ।।

अस्थिसञ्चयनादूर्ध्वं ज्येष्ठ एवाऽऽगतो यदि ।
कुर्यादग्निप्रदः पुत्रः दशाहान्तं स कर्म च ।।

संस्कृतस्य तु मन्त्रेण येन केनाऽपि चैव हि ।
न संस्कुर्यात्पुनः प्रेतं तिलाञ्जल्यादिकं चरेत् ।।

अतीतानञ्जलीन् पिण्डान् दत्वा चैव तदादितः ।
अथ चाऽऽद्यादिकं सर्वं ज्येष्ठः कुर्याद्यथाविधि ।।

वायवीये—

निवर्तयति यो मोहात् क्रियामन्यनिवर्तिताम् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते ।।

पिण्डप्रदाने —

उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ।।

व्यासः—

प्रेताय पिण्डं दत्वा तु ततोऽश्नीयाद्दिनात्यये ।

भविष्ये—

गृहद्वारि श्मशाने वा तीर्थे देवगृहेऽपि वा ।
यत्राद्ये दीयते पिण्डः तत्र सर्वं समाचरेत् ।।

ब्राह्मे—

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीयेन तु कर्णाक्षिनासिकाश्च समासतः ।।

गलांसभुजवक्षांसि तृतीयेन यथाक्रमम् ।
चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च ।।

**जानू जङ्घे तदा पादौ पञ्चमेन तु सर्वदा ।**
**सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः ।।**

**दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च ।**
**दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्ययः ।।** इति

**पिण्डावश्यकत्वमुक्तं तत्रैव**

**क्लिन्नो वा दग्धदेहो वा श्वापदैर्भक्षितोऽपि वा ।**
**अङ्गमुत्पादयेत्तेषां पिण्डदानैर्दशाहिकैः ।।**

**आतिवाहिकदेहस्तु प्रेतः पिण्डसमन्वितः ।**
**नहि मोक्षमवाप्नोति पिण्डांस्तत्रैव सोऽश्नुते ।।**

आतिवाहिकदेहः प्रेतशरीरम् ।

**कृते सपिण्डीकरणे ततः संवत्सरात्परम् ।**
**प्रेतदेहं समुत्सृज्य भोगदेहं प्रपद्यते ।।** इति कारिकायाम्

**तत्र प्रेतोपकृतये दशरात्रमखण्डितम् ।**
**कुर्यात्प्रदीपं तैलेन वारिपात्रञ्च मार्तिकम् ।।**

**भोज्यान् भोजनकाले तु भक्तमुष्टिञ्च निर्वपेत् ।**
**नामगोत्रेण सम्बुद्ध्य धरित्र्यां पितृयज्ञवत् ।।**

**शातातपः-**

**भूलोकात्प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत् ।**
**तत्पाथेयं हि भवति मृतस्य मनुजस्य तु ।।**

**याज्ञवल्क्यः-**

**जलमेकाहमाकाशे स्थाप्य क्षीरञ्च मृण्मये ।।**

## अथ दशाहमध्ये दर्शपाते निर्णयः

भविष्ये–

**प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।**
**समाप्य चोदकं पिण्डान् स्नानमात्रं समाचरेत् ।।**

ऋष्यशृङ्गः–

**आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् ।**
**समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः ।।**

पैठीनसिः–

**आद्येन्दावेव कर्तव्या प्रेतपिण्डोदकक्रिया ।**
**द्विरैन्दवे तु कुर्वाणः पुनः शावं समश्नुते ।।**

मातापित्रोस्तु श्लोकगौतमः

**अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् ।**
**पित्रोस्तु यावदाशौचं दद्यात्पिण्डान् जलाञ्जलीन् ।।**

इदमपि त्र्यहमध्ये दर्शपाते । तदूर्ध्वं दर्शे तु पित्रोरपित्रोरपि तन्त्रं समाप्यमेव ।

**पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।**
**तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम् ।।** इति गालवोक्तेः

अन्येषां त्र्यहमध्येऽपि समाप्तिरिति पराशरमाधवीये । कालादर्शेऽपि

**दर्शो दशाहमध्ये स्यादूर्ध्वं तन्त्रं समापयेत् ।**
**त्रिरात्रादुत्तरं पित्रोर्मृताविति विनिश्चयः ।।**

मदनपारिजाते तु गालवीयमापदनौरसपुत्रादिविषयम् । ''त्र्यहोर्ध्वमपि पित्रोर्न तन्त्रसमाप्तिः'' इत्युक्तम् । मदनरत्नेऽप्येवम् । देशाचाराद् व्यवस्थेति प्रतिभाति ।

# अथ अस्थिसञ्चयः

**संवर्तः**– **प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ।**
**अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह ।।**

छन्दोगपरिशिष्टे तु अपरेद्युस्तृतीये वा अस्थिसञ्चयनं भवेत् इति द्वितीयेऽप्युक्तम् । सञ्चयनं चतुर्थ्यामिति माधवीये । ब्राह्मे–

**चतुर्थे ब्राह्मणानां तु पञ्चमेऽहनि भूभृताम् ।**
**नवमे वैश्यजातीनां शूद्राणां दशमेऽहनि ।।**

**यमः**– **भौमार्कमन्दवारेषु तिथियुग्मे विवर्जयेत् ।**
**वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसञ्चयम् ।**
**प्रदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ।।**

**शौनकः**–
**पालाशेष्वस्थिदाहे च सद्यःसञ्चयनं भवेत् ।।**

**ब्राह्मे च**–
**सद्यःशौचे तथैकाहे सद्यःसञ्चयनं भवेत् ।**
**त्र्यहाशौचे तृतीयेऽह्नि कर्तव्यस्त्वस्थिसञ्चयः ।।**

**तत्रैव**–
**श्मशानदेवतायागं चतुर्थे दिवसे चरेत् ।**
**मृन्मयेषु च भाण्डेषु कुम्भेषु रुचकेषु वा ।।**

**सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा ।**
**फलैः पुष्पैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ।।**

**धूपो दीपस्तथा माल्यमर्घ्यं देयं त्वरान्वितः ।**
**तत्र पात्राणि पूर्णानि श्मशानाग्रेः समन्ततः ।।**

**निवेदयद्भिर्वक्तव्यं तैः सर्वैरनहंकृतैः ।**
**नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ।।**

येऽत्र श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।
तेऽस्मत्सकाशाद् गृह्णन्तु बलिमष्टाङ्गमक्षयम् ।।

प्रेतस्याऽस्य शुभान् लोकान् प्रयच्छन्तु च शाश्वतान् ।
अस्माकमायुरारोग्यं सुखञ्च ददतां चिरम् ।।

एवं कृत्वा बलीन् सर्वान् क्षीरेणाभ्युक्ष्य वाग्यतैः ।
एवं दत्वा बलिञ्चैव दद्यात्पिण्डत्रयं बुधः ।।

एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमम् ।
तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात् ।।

ततो यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः ।
प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च ।।

शिरसो वक्षसः पाण्योः पार्श्वाभ्याञ्चैव पादतः ।
पञ्चगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्ट्य च ।।

प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे ।
अरण्ये वृक्षमूले वा शुद्धे संस्थापयत्यपि ।।

गृहीत्वाऽस्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ।
ततः सम्मार्जनं भूमेः कर्तव्यं गोमयाम्बुभिः ।
पूजा च पुष्पधूपाद्यैः बलिभिः पूर्ववत्क्रमात् ।। इति

## अथ तीर्थेऽस्थिक्षेपविधिः

ब्राह्मे– तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवीजले ।
कश्चित् क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ।।

तथा– अस्तङ्गते गुरौ शुक्रे तथा मासे मलिम्लुचे ।
गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः ।।

दशाहान्तर्न दोषः ।

**दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।**
**गङ्गायां मरणे यादृक्तादृक्फलमवाप्नुयात् ।।** इति वृद्धमनूक्तेः

सञ्चयनोत्तरं श्राद्धमाहाश्वलायनः "श्राद्धमस्मै दद्युः" इति । स्मृत्यर्थसारे सञ्चयने कृते पाथेयश्राद्धमामेन कार्यम् । अनुपनीतस्य न सञ्चयनम् ।

## अथ नवश्राद्धम्

अङ्गिराः– **प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा ।**
**नवमैकादशे चैव तन्नवश्राद्धमुच्यते ।।**

**शिवस्वामी–**

**नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः ।**
**आपस्तम्बाः षडित्याहुर्विभाषा त्वितरेषु हि ।।**

पञ्च एकादशाहिकं विना ।

**नवश्राद्धानि वै पञ्च विषमाहेषु पञ्चसु ।**
**दशाहाभ्यन्तरे कुर्युर्बह्वृचाः षट् च याजुषाः ।।**

**वृद्धवसिष्ठः–**

**अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्नैव मुच्यते ।।**

**रत्नावल्याम्–**

**आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम् ।**
**पितृशब्दः [१]स्वधाशब्दः शर्मशब्दस्तथैव च ।।**

**पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् ।**
**तृप्तिप्रश्नश्च विकिरः शेषप्रश्नस्तथैव च ।।**

**प्रदक्षिणा विसर्गश्च सीमान्तगमनं तथा ।**
**अष्टादश पदार्थांश्च प्रेतश्राद्धे विवर्जयेत् ।।**

अत्र तूष्णीं तिलावपनम्, तूष्णीमर्घ्यम्, अमुष्मै स्वाहेति प्रेतनाम्ना पाणिहोमः ।

---

१ "स्वसम्बन्धः" इति निर्णयसिन्धुः ।

नाम्ना एकः पिण्डः । स्वधापितृनमश्शब्दानां निनयनमन्त्रे प्रेतशब्दोहः । अनुमन्त्र-णादि त्वमन्त्रकम्, अभिरम्यतामिति विसर्जनम् । विघ्ने तु कण्वः -

**नवश्राद्धं मासिकञ्च यद्यदन्तरितं भवेत् ।**
**तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ।।**

**गालवः-**

**शावे तु सूतकं चेत् स्यान्निशायां च मृतौ तथा ।**
**नवश्राद्धानि देयानि यथाकालं यथाक्रमम् ।।**

निशायामाशौचान्ते व्यहवृद्धौ । अन्वारोहणे तु-

**नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक् ।**
**एक एव वृषोत्सर्गः गौरेका तत्र दीयते ।।**

आशौचान्त्यदिनकार्यम्, गृह्यकारिकायाम्-

**अत्र पिण्डत्रयं दद्युस्तत्सखिभ्यस्तथादिमम् ।**
**प्रेताय मध्यमं तद्वत् तृतीयं च यमाय वै ।।**

तथा- **कर्त्रात्र प्रार्थिताः सन्तो ज्ञातिसम्बन्धिबान्धवाः ।**
**दद्युरभ्यङ्गतः पूर्वं त्रींस्त्रीन् धर्मोदकाञ्जलीन् ।**
**पूर्ववन्नामगोत्राभ्यां नियमो नेह कश्चन ।।**

व्यासः- **आशौचान्त्यदिने क्षौरं जनन्यां च गुरौ मृते ।**

[१]एतत्प्रेतानुजानामित्याह आपस्तम्बः । अपरे तु तत् प्रथमदिनासम्भवे ज्ञेयम् । अलुप्तकेशो यः पूर्वं सोऽत्र केशानि वापयेत् ।। इति माधवीयोक्तमित्याहुः । अथैकादशाहः देवलः-

**[२]दशाहस्सु निवृत्तेषु सुस्नाताः कृतमङ्गलाः ।**
**आशौचाद्विप्रमुच्यन्ते ब्राह्मणान् स्वस्ति वाच्य च ।।**

---

१ ''एतत्प्रेताल्पवयसाम्'' इति निर्णयसिन्धुः ।

२ ''अघाहस्सु'' इति निर्णयसिन्धुः ।

कौर्मे– एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य [१]मानवः ।
द्वादशे चाह्नि कर्तव्यमनिन्द्येऽप्यथवाहनि ।।

निन्द्यं प्रेतक्रियाकाले उक्तम्, बृहस्पतिः–
वस्त्रालङ्कारशय्यादि पितुर्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ।।

देवयाज्ञिकनिबन्धे–
एकादशसु विप्रेषु प्रेतमावाह्य भोजयेत् ।
तत्राद्याय च शय्यादि दद्यादाद्यमिति स्मृतम् ।।

बृहस्पतिः–
श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश ।
ज्ञातयो बान्धवा निःस्वाः तथाचातिथयोऽपरे ।।

अस्य विघ्ने कालमाह, बौधायनः–

एकोद्दिष्टं श्व एव स्याद् द्वादशेऽहनि वा पुनः ।
अत उर्ध्वमयुग्मेषु कुर्वीताहःसु शक्तितः ।
अर्धमासेऽथवा मासि ऋतौ संवत्सरेऽपि वा ।। इति

गोभिलः–
ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा ।
पुनश्च भोजयेदेकं द्विरावृत्तिर्भवेदिति ।।

एतदाद्यमासिकमाद्याब्दिकयोः सिद्ध्यर्थमिति भट्टाः ।

उशनाः – त्र्यहाशौचेऽपि कर्तव्यमाद्यमेकादशेऽहनि ।
अतीतविषये सद्यस्त्र्यहोर्ध्वं वा तदिष्यते ।।

इदं दशाहकर्त्रा पुत्रेण वा कार्यम् ।

याज्ञवल्क्यः–
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।।

१ ''भावतः'' इति निर्णयसिन्धुः ।

# अथ वृषोत्सर्गः

स च नित्यः, काम्यः ।

**न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलिम् ।**
**न ददाति सुतो यस्तु पितुरुच्चार एव सः ।।**

उच्चारः पुरीषम् ।

**एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।**
**यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।।** इति मात्स्यकौर्मोक्तेः

**एकादशेऽह्नि प्रेतस्य यस्य नोत्सृजते वृषः ।**
**प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ।।**

इति षट्त्रिंशन्मते निन्दाश्रुतेः ।

**एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम् ।**
**यमुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिम् ।।** इति फलश्रुतेश्च

अयं गृहे न कार्यः । ''न गृहे मोचयेन्नीलं कामयन्पुष्कलं फलम्'' इति कालिकापुराणात् । वृषलक्षणं तु ब्राह्मे-

**लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।**
**श्वेतः खुरविषणाभ्यां स नीलो वृष उच्यते ।।**

श्वेतवर्णस्य मुखादीनि श्यामानि, श्यामस्य वा श्वेतानि यस्य सोऽपि नील उक्तो मात्स्यादौ । देवीपुराणे-

**चतस्रो वत्सिका भद्रा द्वे वा सम्भवतोऽपि वा ।।**

यत्तु- **वृषोत्सर्जनवेलायां वृषाभावे कथञ्चन ।**
**मृद्भिः पिष्टैश्च दर्भैर्वा वृषं कृत्वा विमोचयेत् ।**
**न शक्यते वृषोत्सर्गो होमं वा तत्र कारयेत् ।।**

इति वाक्यं निर्मूलमिति कश्चित् । तद्विधिमाह पारस्करः-

**सव्येन पाणिना पुच्छं समालम्ब्य वृषस्य तु ।**
**दक्षिणेनाप आदाय सतिलान् सकुशांस्ततः ।।**

**प्रेतगोत्रं समुच्चार्य अमुकस्मै इति ब्रुवन् ।**
**अयं वृषो मया दत्तस्तं तारयतु सर्वदा ।**
**सहेम सतिलं भूमावित्युच्चार्य विनिक्षिपेत् ।।**

**तथा–**

**विधारयेन्न तं कश्चिन्न च कश्चन वाहयेत् ।**
**न दोहयेच्च ता धेनूर्न च कश्चन बन्धयेत् ।।**

स्त्रीणामपि वृषोत्सर्गः कार्यः ।

**कस्यापि मुक्तिः प्रेतत्वाद् वृषोत्सर्गं विना न हि ।**
**स्त्रीणां चापि वृषोत्सर्गं कुर्यादेकादशेऽहनि ।**
**वृषोत्सर्गं विना प्रेतः पैशाचत्वान्न मुच्यते ।।**

**स्त्रीषु विशेषः संग्रहे–**

**पतिपुत्रवती नारी भर्तुरग्रे मृता यदि ।**
**वृषोत्सर्गं न कुर्वीत गां दद्यात्तु पयस्विनीम् ।।**

पतिपुत्रयोः साहित्यं विवक्षितम् । अन्वारोहणेऽपि गोदानमेवेत्युक्तं प्राक् । अशौचान्तरे प्राप्ते स्मृत्यन्तरे–

**सूतके मृतके चैव द्वितीयं मृतकं यदि ।**
**पिण्डदानं प्रकुर्वीत वृषोत्सर्गं तथैव च ।।**

**न हन्यात्सूतकं कर्म द्वादशैकादशाहिकम् ।**
**शुद्धो वा यदि वाऽशुद्धः कुर्यादेवाविचारयन् ।।** इति

**अथ शय्यादानम् पाद्मे–**

''मृतकान्ते द्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणाम्'' । एतत्प्रतिग्रहे तत्रैवोक्तम्–ग्रहीतायां तु तस्यां वै पुनः संस्कारमर्हति ।

शय्यादानफलं भविष्ये–

स्वर्गे पुरन्दरपुरे सूर्यपुत्रालये तथा ।
सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ।।

अथोदकुम्भः स्मृतिसमुच्चये–

एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः ।।

लौगाक्षिः–

यस्य संवत्सरादर्वाक्सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भश्च देयं तस्यापि वत्सरम् ।।

उत्तरार्धे–

तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे । इति याज्ञवल्क्यपाठः

मात्स्ये–

यावदब्दं च यो दद्यादुदकुम्भं विमत्सरः ।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ।।

गौतमः–

अदैवं पार्वणश्राद्धं सोदकुम्भमधर्मकम् ।
कुर्यात्प्रत्याब्दिकात् श्राद्धात् सङ्कल्पविधिनान्वहम् ।।

अधर्मकं ब्रह्मचर्यादिनियमहीनम् । एतत् मासिकवत् एकोद्दिष्टं पार्वणं वा कार्यम् ।

अपरार्कस्तु–

सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ।
पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता ।।

इति लघुहारीतेन एकोद्दिष्टस्य निषेधेऽपि ''तस्याप्यन्नं सोदकुम्भं देयं संवत्सरं द्विजे'' इति याज्ञवल्कीये तस्येत्येकत्वोक्तेः । सपिण्डनोत्तरमपि एकोद्दिष्टमेवेत्याह । अत्र पिण्डदानं कृताकृतम् । मध्ये अशौचादिना बाधे तु लोप एव दार्शवत् ।

**अथ मासिकानि–**

तानि कृत्वैव सपिण्डनं कार्यम् । तथा च गोभिलः–

> **श्राद्धानि षोडशादत्वा नैव कुर्यात् सपिण्डनम् ।**
> **श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ।।**

तान्याह जातूकर्ण्यः–

> **द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा ।**
> **त्रैपाक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ।।**

आद्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषाण्मासिकोनाब्दिपराः । गालवः–

> **ऊनषाण्मासिकं षष्ठे मासे वाप्यूनमासिकम् ।**
> **त्रैपाक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा ।।**

ऊनमासिके गोभिलः–

> **मरणाद् द्वादशाहे स्यान्मास्यूने चोनमासिकम् ।**

श्लोकगौतमः–

> **एकद्वित्रिदिनैरूने त्रिभागेनोन एव वा ।**
> **श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ।।**

ऊनेषु वर्ज्यान्याह मरीचिः–

> **द्विपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने ।**
> **चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे ।।**

ज्योतिषे–

> **त्रिपादर्क्ष तिथिर्भद्रा भौमेज्यरविभिः सह ।**
> **तदा त्रिपुष्करो योगो द्वयोर्योगे द्विपुष्करः ।।**

गालवः–

> **त्रिभिर्वा दिवसैरूने त्वेकेन द्वितयेन वा ।**
> **आद्यादिषु च मासेषु कुर्यादूनाब्दिकादिकम् ।।**

एकन्यूनपक्षे पञ्चम्यां मृतस्य तृतीयायां त्रिभिर्न्यूने प्रतिपदि द्व्यूने द्वितीयायामिति केचित् । माधवस्तु-

**षाण्मासिकेऽब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।**
**मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा ।।**

इति पैठीनसिवाक्ये ऊनषाण्मासिकं सप्तममासगतमृताहात्पूर्वेद्युः कार्यम्, ऊनाब्दिकं तु द्वितीयाब्दे मृताहदिनात्पूर्वेद्युः कार्यमित्यर्थमाह । पूर्वेद्युः मृताहादित्यर्थः । "मासिकानि स्वकीये तु दिवसे" इत्युक्तेः, इदमेव युक्तम् । मदनरत्नेऽप्येवं याज्ञवल्क्यः-

**मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।**
**प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ।।**

**लौगाक्षिरपि-**

**मासादौ मासिकं कार्यमाब्दिकं वत्सरे गते ।**
**आद्यमेकादशे कार्यमधिके त्वधिकं भवेत् ।।**

**अशक्तौ तु हारीतः-**

**मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति ।**
**द्वादशाहेन वा भोज्या एकाहे द्वादशापि वा ।।**

ऋतुं प्रति द्वे द्वे इत्यर्थः । यदा पितुर्मरणात् त्रयोविंशतिमे दिने दर्शो वृद्धिर्वा स्यात्तदा द्वादशदिनेषु द्वादशमासिकानि कार्याणीत्यर्थः । त्रैपक्षिकन्तु त्रिपक्षेऽतीते मृताहे कार्यम् । "त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरम्" इति भविष्योक्तेः ।

**स्मृतिरत्नावल्याम्-**

**द्वादशाहे यदा कुर्यात्पितुः पुत्रः सपिण्डनम् ।**
**एकादशेऽह्नि कुर्वीत प्रेतश्राद्धानि षोडश ।।**

**पैठीनसिः-**

**सपिण्डीकरणादर्वाक् कुर्वन् श्राद्धानि षोडश ।**
**एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ।।**

**सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।**
**प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ।।**

एतानि च यदा सपिण्डनात्पूर्वं युगपत्कुर्यात्तदा देशकालकर्त्रैक्ये तन्त्रत्वादेकः पाक इति केचित् । पाकभेद इति भट्टचरणाः । अत्र केचिदाहुः । देशकालकर्तृदैवतैक्ये तन्त्रत्वात् श्राद्धकालातिक्रमापत्तेः ।

**द्वादशाहेऽथ सर्वाणि संक्षेपेण समापयेत् ।**
**तान्येव तु पुनः कुर्यात्प्रेतशब्दं न कारयेत् ।।** इति कात्यानोक्तेः

[१]"नैकः श्राद्धद्वयं कुर्यात्समाने कुत्रचित् क्वचित्" इत्यस्य देवतैक्यपरत्वेऽपि अत्र तत्सत्वात् ।

"श्राद्धं कृत्वा तु तस्यैव पुनःश्राद्धं न कारयेत्" इति जाबालोक्तेः । षोडशसंख्यायाश्च दर्शपातसंक्रान्तिश्राद्धवत् युगपदनुष्ठानेऽप्युपपत्तेः । आद्यमासिका-द्यूनाब्दिकान्तेषु षोडशश्राद्धेषु "क्षणः क्रियताम्" इत्येवं प्रयोगेणैको विप्रः पिण्डोऽर्घ्यश्चेति केचिदाहुः, तन्न "द्वादशाहेन वा भोज्या एकाहे द्वादशाऽपि वा" इति हारितवचोविरोधात् । तेन विप्रभेदात् पिण्डार्घ्याद्यपि भिन्नमिति सिद्धम् । एतानि द्वादशाहादौ सपिण्डनात्पूर्वं कृतान्यपि वृद्धिं विनाऽपकर्षे पुनः स्वकाले कार्याणि ।

**यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् ।**
**मासिकं चोदकुम्भश्च देयं तस्यापि वत्सरम् ।।** इति अङ्गिरसोक्तेः

**यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता ।**
**विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश ।।** इति माधवीये गोभिलोक्तेश्च

**अर्वाक् संवत्सराद्यस्य सपिण्डीकरणं कृतम् ।**
**षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः ।।** इति गालवोक्तेः

**अथ सपिण्डीकरणम् व्याघ्रः–**

**आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् ।**

---

१ "नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्" इति निर्णयसिन्धुः ।

[१]अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ।।

वृद्धमनुः–

द्वादशेऽहनि विप्राणामाशौचान्ते तु भूभुजाम् ।
वैश्यानां तु त्रिपक्षादावथवा स्यात्सपिण्डनम् ।।

गोभिलः–

द्वादशाहादिकालेषु प्रमादादननुष्ठितम् ।
सपिण्डीकरणं कुर्यात्कालेषूत्तरभाविषु ।।

मदनरत्नेऽपि–

सपिण्डीकरणं श्राद्धमुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ।।

कालादर्शेऽपि–

एकादशे द्वादशेऽह्नि त्रिपक्षे वा त्रिमासि वा ।
षष्ठे चैकादशे वाऽब्दे सम्पूर्णे वा शुभागमे ।
सपिण्डीकरणस्येत्थमष्टौ कालाः प्रकीर्तिताः ।।

साग्नौ कर्तर्युभावाद्यौ प्रेते साग्नौ तृतीयकः ।
अनग्नेस्तु द्वितीयाद्याः सप्त काला मुनीरिताः ।।

वर्षादूर्ध्वमपि सपिण्डीकरणकालः ''पितुः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम्'' इति नागरखण्डोक्तेः । ''पितुः सपिण्डीकरणं वार्षिके मृतिवासरे'' इत्युशनसोक्तेश्च । ''शुभागमे'' इत्यत्र शुभपदं चूडोपनयनविवाहमात्रपरम् । सीमन्तादौ तु वृद्धिश्राद्धलोप एवेत्याचार्यचूडामणिः । पुंसवनाद्यन्नप्राशनान्तेषु आवश्यकेषु अपकर्ष इति श्राद्धविवेकः । बृहस्पतिः–

प्रत्यवायो भवेद्यस्मिन्नकृते वृद्धिकर्मणि ।
तन्निमित्तं समाकृष्य पित्रोः कुर्यात्सपिण्डनम् ।।

तच्च सपिण्डनं पुत्रे सति नान्यः कुर्यात् ।

---

१ ''अस्थिरत्वात्'' इति धर्मसिन्धुः ।।

**श्राद्धानि षोडशादत्वा न तु कुर्यात्सपिण्डताम् ।**
**प्रोषितावसिते पुत्रः कालादतिचिरादपि ।।** इति वायवीयोक्तेः ।

षोडशश्राद्धानां वर्षादूर्ध्वं कालाभावेऽपि तान्यदत्वा न कुर्यात्, किन्तु दत्वैव ।

**सपिण्डीकरणं पित्रोः भवेत्कालान्तरे हि चेत् ।**
**अतीतान्यपि वै कुर्यान्मासिकानि यथाविधि ।।** ल.आ.स्मृ.२०.३४

**कालप्राप्तानि चान्यानि कुर्यात्प्रथमवत्सरे ।**
**न कुर्याद्वत्सरादूर्ध्वं प्रवदन्ति महर्षयः ।।** इत्युक्तेः ल.आ.स्मृ.२०.३५

तानि यदि कनिष्ठभ्रात्रादिना कृतानि तदा सपिण्डनमेव कुर्यादित्यपरार्कः । सपिण्डने तु कनिष्ठानां नैवाधिकार इत्यर्थः । तेष्वपि ज्येष्ठस्यैवाधिकारः ।

**ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः ।।** इति मनूक्तेः

**प्रचेताः–**

**एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिना क्रियाः ।**
**कुर्यान्नैकैकशः श्राद्धमाब्दिकं तु पृथक् पृथक् ।।**

**मरीचिः–**

**सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।**
**द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ।।**

द्रव्यदानानुमत्यभावे कनिष्ठैः पृथक्कार्यमिति कश्चित्, तन्न, एवकारस्य तदभावे अपि पृथक्करणाभावार्थत्वात् । अन्धादेरिव ज्येष्ठे सति कनिष्ठानामनधिकाराच्च । अतस्तेषां प्रत्यवायमात्रम् । आहिताग्निः कनिष्ठस्तु कुर्यादेव, अन्यथा पितृयज्ञासिद्धेः। एवमावश्यकवृद्धावपि कनिष्ठोऽन्यः सपिण्डो वा कुर्यात् ।

**भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च ।**
**सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ।**
**तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ।।** इति लघुहारीतोक्तेः

वृद्ध्यनन्तरं प्रथमाब्दमध्येऽपि काम्यं कुर्यात् । वृद्ध्यभावे तु प्रथमाब्दादूर्ध्वं एवेत्यर्थः । काम्योक्तेरनावश्यकेष्टापूर्तादौ नापकर्षः । एतद् भ्रातृपुत्रादिसंस्कारे

प्रामाधिकारस्य नान्दीश्राद्धाधिकारार्थम् । अभ्युदयपदं च नान्दीश्राद्धनिमित्तकर्म- मात्रपरमिति हेमाद्रिः । वृद्धिं विना कनिष्ठेन कृते तु विदेशस्थेन ज्येष्ठेन पुनः कार्यम्।

**यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु ।**
**तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः ॥** इति स्मृतेः

**ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते ।**
**देशान्तरगतानाञ्च पुत्राणाञ्च कथं भवेत् ॥**

**श्रुत्वा तु वपनं कार्यं दशाहान्तं तिलोदकम् ।**
**ततः सपिण्डीकरणं कुर्यादेकादशेऽहनि ।**
**द्वादशाहे न कर्तव्यमिति शातातपोऽब्रवीत् ॥**

इति वचनाच्चेति भट्टाः । अत्र मूलं चिन्त्यम् ।

**येन केनापि पुत्रेण कृतं [१]चेदौरसेन चेत् ।**
**[२]सपिण्डीकरणं चैव शस्तं स्यान्मुनयो विदुः ॥** ल.आ.स्मृ.२०.४९

**पितुः पुत्रेण चैकेन पिण्डसंयोजने कृते ।**
**पुनः संयोजनं तस्य न कुर्याद्दूरगः सुतः ॥** ल.आ.स्मृ.२०.५०

केचित्तु वृद्धिं विनाऽपि कनिष्ठस्य सपिण्डनमाहुः ।

**मातापित्रोर्मृतेः काले ज्येष्ठे देशान्तरस्थिते ।**
**कनिष्ठेन प्रकर्तव्यं सपिण्डीकरणं तदा ॥** इति कार्ष्णाजिनिस्मृतेः

**गते वा रोधिते ज्येष्ठे पित्रा वा प्रेषिते सति ।**
**षण्मासान्न निवर्तेत ततः कार्यं कनीयसा ॥**

एकेन सपिण्डने कृते दूरस्थपुत्राणां पुनःसपिण्डीकरणप्रकारमाह ।

**संवर्तः–**

**पुनःसपिण्डीकरणं श्राद्धं पार्वणवच्चरेत् ।**
**अर्घ्यसंयोजनं नैव पिण्डसंयोजनं न च ॥** इति

---

१ औरसं, औरसः इति मुद्रितलघ्वाश्वलायनस्मृतिपाठः ॥

२ सपिण्डीकरणं शस्तं स्यादित्याहुर्मनीषिणः ।

**व्युत्क्रममृतौ तु हेमाद्रौ ब्राह्मे–**

**मृते पितरि यस्याऽथ विद्यते च पितामहः ।**
**तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ।।**

**तेभ्यस्तु पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ।**
**मातर्यथ मृतायाश्च विद्यते च पितामही ।।**
**प्रपितामहीपूर्वस्तु कार्यस्तत्राप्ययं विधिः ।।**

एवं प्रपितामहजीवने तत्पित्रादिभिर्ज्ञेयम् । तदाह सुमन्तुः–

**त्रयाणामपि पिण्डानामेकेनापि सपिण्डने ।**
**पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ।।**

**यत्तु–**

**व्युत्क्रमात्तु प्रमीतानां नैव कार्या सपिण्डता ।।** इति

तत् मातापितृभर्तृभिन्नविषयम् ।

**व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते ।**
**यदि माता यदि पिता भर्ता नैष विधिः स्मृतः ।।**

इति स्कान्दोक्तेः । अत्र प्रपितामहादिभिः पितुः सपिण्डने कृते पितामहे मृते तत्सपिण्डने सति पुनस्तेन सह पितुः सपिण्डनं कार्यमिति हेमाद्रिः, शिष्टास्तु तन्न मन्यन्ते । वस्तुतस्तु पितुः सपिण्डनाभावे पितामहेन सह पुनः कार्यम् । नतु तत्सत्वे।

**त्रयाणामपि पिण्डानामेकेनाऽपि सपिण्डने ।**
**पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ।।**

इति पितामहे प्रपितामहे वा पुत्रान्तरैरसंस्कृतेऽपि असंस्कृताभ्यामेव पितुः सपिण्डनं कुर्यात् ।

**असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः ।**
**पितरं तत्र संस्कुर्यादिति कात्यायनोऽब्रवीत् ।।**

असंस्कृतौ दाहाद्यैरिति केचित् । असपिण्डीकृताविति तु तत्त्वम् ।

**पापिष्ठमपि शुद्धेन शुद्धं पापकृताऽपि वा ।**
**पितामहेन पितरं संस्कुर्यादिति निश्चयः ।।**

पापिष्ठं=अकृतसपिण्डनम्, नतु पतितादि । "पापकर्मिणो न संसृजेरन्" इति गौतमोक्तेरित्युक्तं निर्णयामृते । पूर्वयोः पुत्राभावे तु पौत्रः कुर्यादेव ।

**पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति ।**
**पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् ।।**

**नैतत्पौत्रेण कर्तव्यं पुत्रावांश्चेत्पितामहः ।**
**पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ।।** इति कात्यायनोक्तेः ।

त्रयाणां यौगपद्ये तु प्राधान्यात् पितुः सपिण्डनं कृत्वा पूर्वयोः कुर्यात् । पितामहे मृते दशाहान्तः पितृमृतौ पितुः संस्कारं कृत्वा पितामहस्य पुनः सर्वमावर्तयेत् । वृत्ते दशाहे नैवम् । अशक्त्या पित्रानुज्ञातेन पौत्रेण पितामहश्राद्धे प्रक्रान्ते पितृमृतौ तदाशौचं वहन्नेव पौत्रः पितामहकर्म कुर्यात्, प्रक्रान्तत्वादिति मदनपारिजाते ।

अथ स्त्रीषूच्यते, लौगाक्षिः-

**पितामह्यादिभिः सार्धं मातरं तु सपिण्डयेत् ।**
**पितरि ध्रियमाणे तु तेनैवोपरते सति ।।**

शङ्खः-

**मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः ।**
**पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम् ।।**

अपुत्रायां तु पैठीनसिः-

**अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम् ।**
**श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ।।**

लघुहारीतः-

**पुत्रेणैव तु कर्तव्यं सपिण्डीकरणं स्त्रियाः ।**
**पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये ।।**

अत्र सपत्नीपुत्रोऽपि ज्ञेयः ।

**बह्वीनामेकपत्नीनामेका चेत्पुत्रीणी भवेत् ।**
**सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ।।**

इति मनूक्तेरेतत्परत्वात्, अन्वारोहणे तु भर्त्रैव सापिण्ड्यम् ।

**मृता याऽनुगता नाथं सा तेन सहपिण्डताम् ।**
**अर्हति स्वर्गवासञ्च यावदाभूतसम्प्लवम् ।।** इति शातातपोक्तेः

**पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः ।**
**सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ।।** इति यमोक्तेश्च

अत्र पतिपदं वर्गपरम् । सपिण्डनस्य पार्वणैकोद्दिष्टरूपत्वादिति माधवः । केचित्तु भर्त्रैवैकैनेत्याहुः । ''स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं भवेत्'' इत्येवकारश्रवणात् । पृथ्वीचन्द्रोदये विकल्प उक्तः । इदं तत्त्वम्, यदा हेमाद्रिमते द्वयोरेकः पिण्डः, तदा वर्गेण सह, यदा माधवमते पृथक् पिण्डः तदैकेन पत्यैव, अतो मातृपिण्ड-मसपिण्डीकृतेनैव पतिपिण्डेन संयोज्यैकीकृतं पिण्डद्वयं तत्पित्रादिभिः संयोजयेत् । अन्यत्र प्रकारान्तरमुक्तम् ।

**निधनञ्च सहत्वेन दम्पत्योर्गतयोश्च हि ।**
**षोडशञ्च सपिण्डञ्च तथा मासानुमासिकम् ।।**

**एकस्मिन्नेव काले तु तयोः कुर्यात्पृथक् पृथक् ।**
**भर्त्रा सह मृता नारी सह तेन सपिण्डनम् ।।**

**द्विधा कृत्वा त्रिधा चैकं द्वितीयञ्च त्रिधा तथा ।**
**भागांस्त्रीन् प्रथमान् पिण्डे पितॄणां सह योजयेत् ।।**

**संयोजयेत्तथा भागान् मातृपिण्डे सहेतरान् ।**
**सपिण्डीकरणादूर्ध्वं क्रमात्पित्रादयस्त्रयः ।**
**मात्रादयस्तथा तिस्रः श्राद्धकर्मसु चैव हि ।।**

**लौगाक्षिः-**

**सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।**
**सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ।।** इति

**प्रचेताः–**

> **सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते ।**
> **अपुत्राणाञ्च सर्वेषामपत्नीनां तथैव च ।।**

**स्मृत्यर्थसारे–**

ब्रह्मचारिणामनपत्यानाञ्च सपिण्डनं नास्ति । तेषां सदा एकोद्दिष्टमेव । [१]व्युत्क्रममृतानां सापिंड्यं कार्यं न वा । केचित् सर्वत्र सपिण्डनमाहुरिति । अपुत्रे व्युत्क्रममृते विशेषः ।

**रेणुकाकारिकायाम्–**

> **भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।**
> **सपिण्डीकरणं कुर्यात्पुत्रहीने मृते सति ।।**
>
> **[२]सर्वत्र बन्धुहीनस्य पत्नी कुर्यात्सपिण्डताम् ।**
> **ऋत्विजं कारयेद्वाऽपि पुरोहितमथाऽपि वा ।।**
>
> **वसुरुद्रादितिसुतैः कार्या तेषां सपिण्डता ।**
> **व्युत्क्रमाच्च प्रमीता ये तद्विना प्रेतता ध्रुवम् ।**
> **पुनः सपिण्डनं तेषां कुर्यात्प्रेते पितामहे ।।** इति

अत्र मूलं चिन्त्यमित्याहुः ।

**सपिण्डनविधिः**

> **सपिण्डीकरणं श्राद्धं दैवपूर्वं नियोजयेत् ।।**

अत्र कामकालौ विश्वेदेवावित्युक्तं प्राक् । ''पित्र्यविप्रकरे होमः साग्नेरपि भवेदिह'' इदं पक्वान्नेनैव कार्यम् । लघुहारीतः–

---

१ पिता यस्य निवृत्तः स्याज्जीवेच्चाऽपि पितामहः ।
पितुः स नाम सङ्कीर्त्य कीर्तयेत्प्रपितामहम् ।। म.स्मृ.३.२२१
यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्परं द्वाभ्यां दद्यात् ।। वि.स्मृ.७५.४ ।। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात् ।। वि.स्मृ.७५.५।। यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात् ।। वि.स्मृ.७५.६ ।।

२ ''सर्वबन्धुविहीनस्य'' इति निर्णयसिन्धुः ।

सपिण्डीकरणं यावतत्प्रेतश्राद्धं तु षोडशम् ।
पक्वान्नेनैव कर्तव्यं सामिषेण द्विजातिभिः ।।

विश्वप्रकाशे–

प्रेतः सपिण्डनादूर्ध्वं पितृलोकेऽनुगच्छति ।
कुर्यात्तस्य तु पाथेयं द्वितीयेऽह्नि सपिण्डनात् ।।

ततो वृद्धिश्राद्धं कुर्यात् ।

।। इति अन्त्यकर्मप्रकरणम् ।।

## अथ प्रथमाब्दे निषिद्धानि

हेमाद्रौ–

तीर्थस्नानं महादानं स्वाध्यायं चाग्नितर्पणम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ।।

अग्नितर्पणं लक्षहोमादि, नत्वाधानम्, तत्तु प्रथमाब्दे भवत्येव ।

तदाह उशनाः–

पितुः सपिण्डीकरणं वार्षिके मृतवासरे ।
आधानाद्युपसम्प्राप्तावेतत्प्रागपि वत्सरात् ।।

दिवोदासीये–

महातीर्थस्य गमनमुपवासव्रतानि च ।
संवत्सरं न कुर्वीत महागुरुनिपातने ।।

मात्स्ये–

सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभुग्भवेत् ।
वृद्धीष्टापूर्तयोग्यश्च गृहस्थश्च सदा भवेत् ।।

वर्षान्तसपिण्डनाऽभावे न अधिकारीत्यर्थः । गृहस्थः सपिण्डोऽपीत्यर्थः ।

देवलः–

प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् ।
न दैवं नाऽपि वा पित्र्यं यावत्पूर्णो न वत्सरः ।।

इदं वर्षान्तसपिण्डनपरम्, पित्र्यं सपिण्डनम्, अत एव लौगाक्षिः-

**अन्येषां प्रेतकार्याणि महागुरुनिपातने ।**
**कुर्यात्संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत् ।।**

दाहाद्येकादशाहान्तं कार्यम् । एकं सपिण्डनं श्राद्धम् । पत्न्यादौ त्वपवादमाह ऋष्यशृङ्गः-

**पत्न्याः पुत्रस्य तत्पुत्रभ्रात्रोस्तत्तनयस्य च ।**
**स्नुषास्वस्त्रोश्च पित्रोश्च सङ्घातमरणं यदि ।**
**अर्वागब्दान्मातृपितृपूर्वं सापिण्ड्यमाचरेत् ।।**

**लौगाक्षिः-**

**पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रका अपि ।**
**पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा ।**
**आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिण्डनम् ।।**

**देवलः-**

**अन्यश्राद्धं परान्नश्च गन्धं माल्यश्च मैथुनम् ।**
**वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः ।।**

**देवलः-**

**महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत् ।**
**आर्त्विज्यं ब्रह्मचर्यं च श्राद्धं देवक्रियां तथा ।।**

एतत्सपिण्डनात्प्रागिति केचित् । तदुत्तरमपीत्यन्ये ।

**केचित्तु-**

**पित्रोरब्दमशौचं स्यात् षण्मासं मातुरेव च ।**
**त्रैमासिकं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ।।** इति स्मृतेः

सापत्नमातुरब्दार्धमाहुः, अन्ये तु-

**द्वयोरेव महागुर्वोरब्दमेकमशौचकम् ।**
**नान्येषामधिकाशौचं स्वजातिविहितात्किल ।।** इत्याहुः

**तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ।**
**अब्दमध्ये न कुर्वीत महागुरुनिपातने ।।**

इदं वृद्ध्यर्थसपिण्डनाभावे, वृद्धौ सपिण्डनापकर्षे अब्दमध्येऽपि दर्शादि कार्यमेव । ''पितुः सपिण्डनं कृत्वा कुर्यान्मासानुमासिकम्'' इति छन्दोगपरिशिष्टात् । ''सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभुग्भवेत्'' इति च । अत्रेदं तत्त्वम् । वृद्धिं विना अर्वागपि सपिण्डनापकर्षे पितृत्वप्राप्तिः वर्षान्त एव ।

**कृते सपिण्डीकरणे नरः संवत्सरात्परम् ।**
**प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते ।।** इति विष्णुधर्मोक्तेः

**अर्वाक्संवत्सरद्यस्य सपिण्डीकरणं भवेत् ।**
**प्रेतत्वमिह तस्याऽपि विज्ञेयं वत्सरं नृप ।।** इत्यग्निपुराणाच्च

तेन तत्सत्वेऽपि वृद्धिदैवपित्र्येष्वनधिकारः । वृद्धिनिमित्ते त्वनन्तरमेव ।

**अर्वाक् संवत्सराद् वृद्धौ पूर्णे संवत्सरेऽपि वा ।**
**ये सपिण्डीकृताः प्रेता न तेषां तु पृथक् क्रिया ।।** इति शातातपोक्तेः

**तथा–**

**[१]अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।**
**प्रथमेऽब्दे न कुर्वीत कृतेऽपि तु सपिण्डने ।।**

इदं वृद्धिं विनाऽपकर्षे पूर्वम्, वृद्ध्यर्थे तु परमिति योज्यम् ।

**अथ विधानानि । तत्र पञ्चकमृते गारुडे–**

**आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् ।**
**रेवत्यन्तं सदा दूष्यमशुभं दाहकर्मणि ।।**

**शवस्य तु समीपे तु क्षेप्तव्याः पुत्तलास्तदा ।**
**दर्भमय्यास्तु चत्वारः ऋक्षमन्त्राभिमन्त्रिताः ।।**

---

१ अस्यापवादः–
अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान्सुतः ।। इति श्राद्धकल्पलतायां पठितः ।

ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैस्सह ।
सूतकान्ते ततः पुत्रैः कार्यं शान्तिकपौष्टिकम् ।

पञ्चकेषु मृतो यो वै न गतिं लभते नरः ।
तिलांश्चैव हिरण्यञ्च तमुद्दिश्य घृतं ददेत् ।।

गार्ग्यः–

वासवे मरणं चेत्स्यात् गृहे वाऽपि पुनर्मृतिः ।
सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथाऽपि वा ।।

यदि भद्रातिथीनां स्याद् भानुभौमशनैश्चरैः ।
त्रिपादर्क्षैश्च संयोगो द्वयोर्योगे द्विपुष्करः ।।

द्वित्रिपुष्करयोगे तु मृतिः मृत्यन्तरावाहा ।
दहने मरणे चैव त्रिगुणं स्यात् त्रिपुष्करे ।।

खननेऽप्येवमेव स्यादेतद्दोषोपशान्तये ।
तिलपिष्टैर्यवैर्वाऽपि शरीरं कारयेत्ततः ।।

शूर्पे निधायालंकृत्य दाहयेत्पैतृकोपरि ।
अस्मात्त्वमिति मन्त्रेण तिलपिष्टं प्रदाहयेत् ।।

अथवा ब्राह्मे–

कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते ।
न तस्योर्ध्वगतिर्दृष्टा सन्ततौ न शुभं भवेत् ।।

न तस्य दाहः कर्तव्यो विनाशस्त्वेषु जन्तुषु ।
अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम् ।।
धनिष्ठापञ्चके जीवो मृतो यदि कथञ्चन ।
त्रिपुष्करो याम्यभे वा कुलजान्मारयेद्ध्रुवम् ।।
तत्रानिष्टविनाशार्थं विधानं समुदीर्यते ।।

दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः ।
यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् ।।

 

प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ।
प्रेतहर्ता पञ्चमस्तु नामान्येतानि च क्रमात् ।।

सूतकान्ते ततः पुत्रः कुर्यात् शान्तिकपौष्टिकम् ।
कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद् द्विजन्मने ।।

ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः ।
माषमुद्गयवव्रीहिप्रियंग्वादि प्रयच्छति ।।

त्रिपादर्क्षेऽप्येवमेव, अपरार्के–

पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी ।
पूर्वाभाद्रा विशाखा च ज्ञेयमेतत् त्रिपादभम् ।।

अथ ब्रह्मचारिमरणे, शौनकः–

ब्रह्मचारिमृतौ रीतिं कथयामि समासतः ।
स्नातको ब्रह्मचारी च निधनं प्राप्नुयाद्यदि ।
संयोज्य चार्कविधिना संयोज्यौ तौ ततः परम् ।।

कुष्ठिमृतौ यमः–

मृतस्य कुष्ठिनो देहं निखनेद्गोष्ठभूमिषु ।
वासरत्रितयं पश्चादुद्धृत्यान्यत्र तं दहेत् ।।

रजस्वलायास्तु शातातपः–

रजस्वलायाः प्रेतायाः संस्कारादीनि नाऽचरेत् ।
ऊर्ध्वं त्रिरात्रात् स्नातां तां शवधर्मेण दाहयेत् ।।

सङ्कटे स्मृत्यन्तरे–

[१]उदक्या सूतिका वाऽपि मृता स्याद्यदि तां तदा ।
उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्रतः ।।

आपो हि ष्ठेति तिसृभिः हिरण्यवर्णाश्चतसृभिः ।
पवमानानुवाकेन यदन्तीति च सप्तभिः ।।

---

१ निर्णयसिन्धौ तु श्लोकार्धस्यास्यानन्तरमयमर्धः पठितः ।
"आशौचे त्वनतिक्रान्ते दाहयेदन्तरा यदि" ।।

ततो यज्ञपवित्रेण गोमूत्रेणाऽथ ते द्विजाः ।
स्नापयित्वाऽन्यवसनेनाच्छाद्य शवधर्मतः ।।
दाहादिकं ततः कुर्यात्प्रजापतिवचो यथा ।।

मिताक्षरायाम्–

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ।।

सूतिकामरणे तु गृह्यकारिकायाम्–

सूतिकामरणे प्राप्ते सर्वौषध्यनुलेपनम् ।
असूतकी तु संस्पृष्टः शूर्पाणां तु शतं क्षिपेत् ।।

गर्भिणीमृतौ तु गृह्यकारिकायाम्–

यदा गर्भवती नारी सशल्या संस्थिता भवेत् ।
कुक्षिं भित्वा ततः शल्यं निर्हरेद्यदि जीवति ।।

प्रमीतं निखनेत्तं तु प्रायश्चित्तमतः परम् ।
सा त्रयस्त्रिंशता कृच्छ्रैः शुद्ध्यते शल्यदोषतः ।।

सगर्भदहने तस्या वर्णजं वधपातकम् ।
प्रायश्चित्तं चरित्वा तु शुद्ध्यन्ते पापकारिणः ।
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् ।।

मदनरत्ने शौनकः–

गर्भिणीमरणे प्राप्ते गोमूत्रेण जलैः सह ।
आपो हि ष्ठादिभिर्मन्त्रैः प्रोक्ष्य भर्ता समास्थितः ।
प्रेतं श्मशाने नीत्वाऽथोल्लिख्य सव्योदरं ततः ।।

पुत्रमादाय जीवंश्चेत् स्तनं दत्वा सुताय तु ।
यस्ते स्तनः शशय इत्यृचा ग्रामे निधाय च ।।

उदरं चाव्रणं कुर्यात् पृषदाज्येन पूर्य च ।
मृद्भस्मकुशगोमूत्रैरापो हि ष्ठादिभिस्त्रिभिः ।
स्नाप्य चाच्छाद्य वासोभिः शवधर्मेण दाहयेत् ।।

## अथ अन्वारोहणम्

**अथान्वारोहणं स्त्रीणामात्मनो भर्तुरेव च ।**
**सर्वपापक्षयकरं निरयोत्तारणाय च ॥**

अन्वारोहणकर्त्री सोपस्कराणि उपायनानि दद्यात् ।

**लक्ष्मीनारायणो देवो बलसत्वगुणाश्रयः ।**
**गाढं सत्त्वञ्च मे दद्याद्वायनैः पतितोषकैः ॥**

**सोपस्कराणि शूर्पाणि वायनैः संयुतानि च ।**

सोपस्कराणि हरिद्राकुंकुमांजनादियुतानि ।

**लक्ष्मीनारायणप्रीत्यै सत्त्वकामा ददाम्यहम् ।**
**अग्नेः समीपमागत्य पञ्चरत्नानि पल्लवे ॥**

**नीलाञ्जनं तथा बध्वा मुखे मुक्ताफलं न्यसेत् ।**
**ततोऽग्निप्रार्थनं कृत्वा मन्त्रेणानेन मिश्रितम् ॥**

**स्वाहासंश्लेषनिर्विण्ण सर्वगोत्र हुताशन ।**
**सत्त्वमार्गप्रदानेन नय मां पत्युरन्तिकम् ॥**

**त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।**
**त्वमेव सर्वं जानीषे न विदुर्यानि मानुषाः ॥**

**अनुगच्छामि भर्तारं वैधव्यभयपीडिता ।**
**स त्वं मार्गप्रदानेन नय मां भर्तुरन्तिकम् ।**
**मन्त्रमुच्चार्य शनकैः प्रविशेच्च हुताशनम् ॥**

पृथ्वीचन्द्रोदये–

**अनुव्रजन्ती भर्तारं गृहात्पितृवनं मुदा ।**
**पदे पदेऽश्वमेधस्य फलं प्राप्नोत्यनुत्तमम् ॥**

यत्तु अङ्गिराः–

**या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत् ।**

**सा स्वर्गमात्मघातेन नात्मानं न पतिं नयेत् ।।** इति

**यच्च व्याघ्रपादः-**

**न म्रियेत समं भर्त्रा ब्राह्मणी शोककर्शिता ।**
**न ब्रह्मगतिमाप्नोति मरणादात्मघातिनी ।।** इति

तत्पृथक्चितिपरम् ।

**पृथक्चितिं समारुह्य न विप्रा गन्तुमर्हति ।**
**अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः ।।**

इति उशनसोक्तेः । पृथक्चितिस्तु क्षत्रियादिपरा । इदं गर्भिणीबालापत्या-सूतिकारजस्वलाव्यभिचारिणीभिर्न कार्यम् ।

**स्वैरिणीनां गर्भिणीनां पतितानाञ्च योषिताम् ।**
**नास्ति पत्याग्निसंवेशः पतितौ हि तथा उभौ ।।** इति स्मृतिसंग्रहात्

**बृहस्पतिः-**

**बालसंवर्धनं मुक्त्वा बालापत्या न गच्छति ।**
**व्रतोपवासनियता रक्षेद्गर्भं च गर्भिणी ।।**

**बृहन्नारदीयेऽपि-**

**बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा ।**
**रजस्वलाराजसुते नारोहन्ति चितां तु ताः ।।** इति

अत्र पतिव्रतानामेवाधिकारो न दुर्वृत्तानाम् ।

**।। इति अन्त्यकर्मनिर्णयः ।।**

**अग्निप्रवेशाशक्तौ तु मनुः-**

**ब्रह्मचर्यं चरेद्वाऽपि प्रविशेद्वा हुताशनम् ।।**

**काशीखण्डे-**

**पत्यौ मृतेऽपि या योषिद् वैधव्यं पालयेत्क्वचित् ।**
**सा पुनः प्राप्य भर्तारं स्वर्गलोकं समश्नुते ।।**

अनुयाति न भर्तारं यदि दैवात्कथञ्चन ।
तत्रापि शीलं संरक्षेत् शीलभङ्गात्पतत्यधः ।।

तद्वैगुण्यादपि स्वर्गात्पतिः पतति नान्यथा ।
तस्याः पिता च माता च भ्रातृवर्गस्तथैव च ।।

अथ विधवाधर्माः स्कान्दे–

विधवाकबरीबन्धो भर्तृबन्धाय जायते ।
शिरसो वपनं तस्मात्कार्यं विधवया सदा ।।

एकाहारः सदा कार्यो न द्वितीयः कदाचन ।
मासोपवासं वा कुर्याच्चान्द्रायणमथाऽपि वा ।।

पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ।
नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ।।

गन्धद्रव्यस्य सम्भोगो नैव कार्यस्तया पुनः ।
तर्पणं प्रत्यहं कार्यं भर्तुस्तिलकुशोदकैः ।
तत्पितुस्तत्पितुश्चाऽपि नामगोत्रादिपूर्वकम् ।।

इदं अपुत्रापरमिति मदनपारिजातः–

नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ।
कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् ।
वैशाखे कार्तिके माघे विशेषनियमं चरेत् ।।

प्रचेताः–

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ।।

।। इति श्रीमच्छलारीनृसिंहाचार्याणां निजशिष्येण शेषेण विरचिते
श्रीमन्निर्णयरत्ने पञ्चमः परिच्छेदः ।।

।। निर्णयरत्नं समाप्तम् ।।

श्रीकृष्णार्पणमस्तु ।। इदं पुस्तकं शुभकृतुसंवत्सरआषाढ शु १ प्रतिपदादिने लिखितम् ।।

